सुबोधसंस्कृत-

# लोकमान्यटिळकचरितम्

चितळेइत्युपाह्ववामनसुतकृष्णशर्मणा
विरचितम्

लोकमान्यटिळकजन्मशताब्दीमहोत्सवप्रसङ्गेन
प्राकाश्यं च नीतम्

मूल्यं पञ्च रूपकाः

इदं सुबोधसंस्कृत-

# लोकमान्यटिळकचरितम्

श्रीयुतैः म. शं. साठेमहाशयैः वांई क्षेत्रे
प्राज्ञमुद्रणालये मुद्रितम्

श्रीयुतैः कृ. वा. चितळेमहाशयैश्च
१ डोंगरेबाग, भवानीशंकर-रस्ता, दादर-मुंबई २८
इत्यस्मिन् स्थले प्रकाशितम्

प्रथमावृत्तिः

अस्य ग्रन्थस्य सर्वे अधिकाराः प्रकाशकाधीनाः

आषाढकृष्ण ६ }
शा. शके १८७८ }

२३ जुलै १९५६

The Lokamanya Tilak Centenary Celebration

# THE LIFE OF
# LOKAMANYA
# BAL GANGADHAR TILAK

IN EASY SANSKRIT

BY
K. W. Chitale, B. A. (Hons.), B. T.
Head Master
Sharadashram Vidya Mandir
Dadar–Bombay

Price Five Rupees.

# AN APPRECIATION

by the Governor of Bombay.



Raj Bhavan,
Bombay 6
3rd June 1956

I have had the opportunity of going through "Subodha sanskrit Lokamanya Tilak Charitam" in its manuscript form. Shri K. W. Chitale has not only done a great service to the memory of the great leader Lokamanya Tilak, but he has also done a distinct service to Sanskrit literature itself. The reverence with which the memory of Lokamanya is cherished by millions of people requires that his life should be written in the form of an epic to go down to posterity as the story of a great fighter for freedom. At the same time, it was necessary that the Sanskrit literature should not remain confined to ancient topics but it should also deal with current matters of importance. Both these purposes have been well served by the book which has been written so beautifully by Shri Chitale. I have no doubt the book will give full satisfaction to its numerous readers both now and after.

(sd.) H. Mehatab
Governor of Bombay.

## २ गुणग्रहणरूपान्तरम् -

अवलोकितं मया प्रसङ्गवशात् चितळेमहाशयै-र्विरचितस्य 'सुबोधसंस्कृतलोकमान्यटिळकचरितस्य' हस्तलिखितम् । इदं तेषां चरित्रलेखनं न केवलं लोकधुरन्धराणां लोकमान्यानां स्मरणरूपिणी सेवा, अपि तु निपुणतया संस्कृतसारस्वतस्यापि । लोक-मान्यविषयको लोकसहस्राणामत्यादरो लोकमान्यटिळक-विषयमधिकृत्य रामायणमिव महाकाव्यरूपेण परि-णमनमर्हति यत् किल 'भारतस्वातन्त्र्यसंग्रामवीरपुरुष-कथा' इति सांप्रतम् आयत्यामपि जनाः परम्परया वाचयेयुः । तथैव इदमप्यावश्यकं यत् संस्कृतसार-स्वतं न केवलं पुराणविषयवर्णने एव नियमयितव्यम्, अपि तु महत्त्वपूर्णेषु आधुनिकविषयविशदीकरणेष्वपि नियोजनीयमिति । उभावप्येतावुद्देशौ चितळेमहाशयैः रमणीयलेखनशैल्या प्रणीतेऽस्मिन् ग्रन्थे समीचीनतया संपादितौ ।

-(हस्ताङ्कनम्)

हरेकृष्ण मेहताब

मुम्बईप्रदेशराज्यपालाः

# ३ हृद्गतम्

जीवनयात्रायां लब्धावसरो धीमद्भिः काव्यशास्त्रविनोदेन नीयते इति श्रूयते। मया सांप्रतं किं कर्तव्यमिति विचारे समुत्पन्ने वृत्तपत्र-मुद्रिता वार्ता नयनगोचरतां गता यद्रिपुभूतग्रहभूमिते ( १९५६ ) संवत्सरे लोकमान्यटिळकमहाशयानां जन्मशताब्दीमहोत्सवो भविष्यतीति। सपद्येव मनस्येका कल्पना पदमकरोत् यल्लोकमान्यानां सुबोधचरितं देववाण्यां यदि विरचितं भवेत्तर्हि किं स्यादिति। संस्कृतभाषायां लोकमान्यानां महती प्रीतिः। वैदिकसंशोधनाय तेषां दृढाऽभिरुचिः। महाभारतभगवद्गीतादिग्रन्थानां महान् व्यासङ्गः। यथा हिंदी-मराठी-कानडी-गुजराथी-त्यादिभाषासु लोकमान्यटिळकमहोदयानां चरितं लिखितं विद्यते तथा गीर्वाणभाषायामपि तेषां चरितलेखनं समुचितं भवेत्। एवं मनसि विचार्य अनेन मार्गेणाहं किं न यतेयेति विचारः समुत्पन्नः।

भरतखण्डे सर्वेषु प्रदेशेषु संस्कृतभाषाध्ययनार्थं पाठशालाः विद्यन्ते। तासु न्यायव्याकरणवेदान्तादिशास्त्राण्यध्याप्यन्ते, तत्तच्छात्त्रेषु छात्राणां परीक्षाः संचाल्यन्ते, उत्तेजनार्थं पारितोषिकाणि शिष्यवृत्तयश्च दीयन्ते। तथापि सामान्यजनेषु तथा विद्यार्थिजनेषु एका कल्पना बद्धमूला दृश्यते यत् कठिना संस्कृतभाषा, कठिनतरं च तस्याः व्याकरणम्। कथमस्माभिः साऽवगन्तव्या। अतस्तां परित्यज्य अन्या काचित् सुबोधा भाषा- फ्रेंच-पाली-अर्धमागधी- शालान्तपरीक्षायां यशः संपादयितुं विद्यालयेषु अध्येतव्या इति। विद्यालयेषु चतुरो वत्सरान् अध्यापयितव्या संस्कृत-भाषा इति दण्डकः पूर्वमासीत्। अधुना त्रयो वत्सराः पर्याप्ताः संस्कृत-भाषाध्ययनायेति शासनसंस्थाविद्याधिकारिणा विचारधारा। मुम्बईप्रदेशे एतादृशी दुरवस्था संस्कृतभाषाध्ययनस्य। कथमपेक्षितव्यं सामान्यजनैः संस्कृतभाषाभिवृद्ध्यर्थमुत्तेजनम्? महती भारतीयानां प्राचीना संस्कृतिः। वेदवाङ्मयं, रामायणमहाभारतादिग्रन्थाश्च एतस्याः संस्कृतेः प्रतीकं वर्तन्ते

इति तारस्वरेण भारतीयैरुद्घोष्यते । परं यस्यां भाषायामेते ग्रन्था लिखितास्तस्याः अभ्यासे प्रायेण न केनापि प्रयत्यते, न वा शासनसंस्थया सा पुरस्क्रियते । यद्यत्कृतमालोच्यते तत्तल्लौकिकार्थमिति दृश्यते ।

सांप्रतं शालान्तपरीक्षार्थं शतसहस्रकल्पाः छात्रा उपतिष्ठन्ति । तेषु कतिभिश्छात्रैः संस्कृतभाषाविषयः परीक्षार्थं स्वीकृतो दृश्यते ? ये केचन गृह्णन्ति ते महाविद्यालयप्रवेशार्थमेव । अधुना इयं देववाणी अल्पसंख्याकानां जनानां रुचये भवति ।

मया तु एवं विमृश्यते । ये जना मातृभाषां सम्यगधीयते ते हिंदीभाषायां जातं व्याख्यानं संभाषणं वा तात्पर्यांशेन यथा जानन्ति तथा संस्कृतभाषायां जातस्य भाषणस्य व्याख्यानस्य वा सारांशं किमर्थं न जानीयुः । प्रायेण प्रतिशतमासन्नाशीतिशब्दाः संस्कृतोद्भवाः । अतस्तान् प्रयुज्य लिखितां भाषितां वा संस्कृतभाषां जना जानीयुः । एवं विचिन्त्य सुबोधसंस्कृतभाषायामिदं चरितं लिखितुं प्रवृत्तोऽभवम् । यद्येतच्चरितं जनमनसि गीर्वाणवाग्विषयिकामभिरुचिमुत्पद्येत तर्हि इदं चरितलेखनकार्यं सफलं जातमिति मन्ये ।

एवं संकल्पितं लोकमान्यचरितलेखनम् । परं तल्लिखितुमहं समर्थो वा नेत्याशङ्का मनसि समुत्पन्ना । क्व विविधविषयावगाहकं लोकमान्यचरितम्, क्व चाहं 'तनुवाग्विभवः' पाठशालाध्यापकः । अन्यच्च । लोकमान्यनिकटवर्तिभिः साहित्याचार्यैः 'नरसिंह चिंतामण केळकर'महाशयैर्विरचितम् आसन्नद्विसहस्रपृष्ठात्मकं विस्तीर्णं लोकमान्यचरितम् । देववाण्यां तत् संक्षेपतः कथं लिखेयम् ? उक्तं च

'अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् ।'

इति । अनया शङ्कया स्मारितोऽहं कविकुलगुरुकालिदासवचनम्

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।'

इति । एवं दोलायमाने स्वान्ते स्मृतं सुभाषितम्

'उद्योगेन हि सिध्यन्ति कार्याणि न मनोरथैः ।'

इति । अतः केळकरविरचितटिळकचरितमाश्रित्य प्रथमं पञ्चषाणि प्रकरणानि

लिखितुमहं सयत्नोऽभूवम् । यद्भविष्यति तद् भवतु इति संकल्प्य समारब्धं लेखनकार्यम् ।

लेखनविषयके लोकमान्यटिळकचरिते धार्मिकार्थिकराजकीयसामाजिकौद्योगिकादिविविधक्षेत्रेषु विज्ञानसंशोधनेन प्रगततरा आधिभौतिकसिद्धान्ता विचाराः कल्पनाश्च विद्यन्ते । सर्वमेतन्नूतनम् । अतो लेखनेऽपि नूतना शब्दसम्पत्तिरपेक्ष्यते । भाषासरणिरपि नावीन्यपूर्णा आवश्यकी । प्राचीनसंस्कृतवाङ्मये व्याकरणपद्धत्या सन्धिकार्यमावश्यकम् । अस्मिन् ग्रन्थे सन्धिकार्यविषये अनियमोऽस्तु ।

'संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥'

इति वचनमाश्रित्य भाषादुर्बोधत्वं परिहर्तुं विशेषशब्दज्ञानार्थं च सन्धिकार्यं सर्वत्र न कृतम् । तथैव आधुनिकविरामचिह्नानि क्वचित् प्रयुक्तानि । लेखनविषयमनुसृत्य अन्ये वाक्प्रचारा अपि उपयुक्ता द्रक्ष्यन्ते । सुखावबोधार्थमिदमावश्यकमिति विमृश्य चरितलेखने इयं पद्धतिरवलम्बिता ।

एवं समाप्तप्राये लेखनकार्ये प्रधानप्रश्न' समुद्भूतः । द्रव्याभावे कथमिदं मुद्रयितव्यमिति । गीर्वाणभाषाभिवृद्ध्यर्थम् इयं स्वल्पा संस्कृतसारस्वतसेवा लोकमान्यजन्मशतसांवत्सरिकमहोत्सवप्रसङ्गेन मयाऽवश्यं कर्तव्येति मनसि विचारः । चार्वाको ब्रूते

'ऋणं कृत्वा घृतं पिबेत्'

इति । परमशिष्टसंमतमिदं तत्त्वमनभ्यासात् मनसि न श्लिष्यते । दैवीसपत्परिपूर्णमिदं लोकमान्यचरितं तु अमृतमेव । तत्कथं मां द्रव्याभावसंकटे पातयेदिति विमृश्य संस्कृतभाषाभिमानिनो जनस्यौदार्ये विश्वस्य इदं साहसं मयाऽङ्गीकृतम् । लोकमान्याभिमानी जनताजनार्दनः तत् सफलीकरोतु । मनोरथस्तु महान् वर्तते यत् चीन-जपान-अमेरिका-इंग्लंड-फ्रान्स-जर्मनी-रशिया-इजिप्त-सीलोन-ब्रह्मदेशप्रभृतिपौर्वात्यपाश्चात्यदेशेषु यत्र यत्र इयं सुरवाणी आदरेण कुतूहलेन वा छात्रैरभ्यस्यते तत्र तत्रास्य चरितस्यैकं पुस्तकं तत्रत्याय विद्यापीठाय ग्रन्थालयाय वा मया उपायनीकर्तव्यमिति ।

अपरः प्रश्नः कः ख्यातनामा पण्डितः प्रस्तावनां लिखित्वा ग्रन्थमिम-मलङ्कुर्यात् मां च उपकुर्यादिति । अल्पपरिचयेनापि एवं पृष्टैः 'तात्यासाहेब करंदीकर'महाशयैर्लिखितं "भूतपूर्वविहारप्रदेशराज्यपालाः 'लोकनायक' इति अन्वर्थकोपपदधारिणः 'माधव श्रीहरी अणे'-महाशया देववाण्यां श्लोकनिबद्धं लोकमान्यटिळकचरितं विरचयन्तीति । अणेमहाशयानां परिचयाभावेऽपि धाष्टर्येन मया ते दर्शनार्थं विज्ञप्ताः । दर्शने जाते कथायोगे निजाभिप्रायं निवेद्य, लिखितानि कानिचित् प्रकरणानि तान् दर्शयित्वा प्रस्तावनालेखनार्थं मया मन्दं मन्दं सूचितम् । रुग्णशय्यासनस्थैरपि तैः सानन्दं मह्यं प्रतिश्रुतम् 'लिखामि प्रस्तावना'-मिति । अतस्तेभ्यो धन्यवादान् प्रथमं वितीर्य आत्मनः कृतज्ञताबुद्धिं दर्शयामि । प्रस्तावनाया आदावन्ते चात्रभवद्भिर्गौरवार्थं दत्तं शास्त्रीति विशेषणं स्वान्ते संकोचं समुत्पादयति ।

अस्य ग्रन्थस्य पुरस्कारलेखनार्थमपि 'दक्षिणकाशी'ति लोकप्रसिद्धे 'वांई'क्षेत्रे ब्रह्मीभूतकेवलानन्दसरस्वतीयतिभिः ( पूर्वाश्रमे 'नारायणशास्त्री मराठे'इत्यभिधानेन सुविख्यातैर्महापण्डितैः) संस्थापितायाः प्राज्ञपाठशालायाः प्रधानाध्यापकाः, भारतीयगणराज्यघटनायाः संस्कृतभाषायां रूपान्तर-कारिणः, इतिहासप्रसिद्धसोमनाथदेवालये देवताप्रतिष्ठापनमहोत्सवे प्रधान-पुरोहितपदमलङ्कुर्वाणाः तर्कतीर्थ–लक्ष्मणशास्त्री जोशीमहाशया लब्धा इति चरित्रलेखकस्य भाग्यम् । अतस्तेभ्यो धन्यवादान् वितरामि ।

केसरिसंस्थाविश्वस्ताः केसरिपत्रस्य भूतपूर्वसंपादकाः केसरिकार्यालये लब्धलोकमान्यसहवाससुखाः विद्यावयस्तपोवृद्धाः 'तात्यासाहेब करंदीकर'-महाशया अस्य चरितस्य पुरस्कारमकुर्वन् । न केवलमयं पुरस्कारः अभि-नन्दनं वा । अपि तु पूर्णप्रश्नैः करंदीकरमहाशयैर्लेखकाय दत्तमिदं पारि-तोषिकं वर्तते । लोकमान्यैः स्वयमलङ्कृतकेसरिपत्रसंपादकासने सांप्रतमुप-विशद्भिर्लोकमान्यनप्तृभिः 'जयंतराव टिळक'महाशयैर्लोकमान्यानां छाया चित्राणि विना मूल्यं मुद्रितानि । अतः करंदीकरमहाशयेभ्यस्तथा जयंतराव-महाशयेभ्यः कृतज्ञतापूर्वकं धन्यवादाः ।

वांईक्षेत्रे वसन्तः प्राज्ञमुद्रणालयाधिकारिणो धन्यवादार्हा यतस्तैर्मुद्रणविषये तथा मुद्रितपरीक्षणे मह्यं महत्साहाय्यं वितीर्णम् ।

मम प्रियसुहृज्जनेन स्निग्धमनसा काले काले लेखनविषये सूचनां कृत्वा अमूल्यं साहाय्यं दत्तम् । अतस्तेभ्यः सर्वेभ्यो मम स्नेहपूर्वकं धन्यवादाः ।

समाप्तकल्पं हृद्गतं धन्यवादप्रदानं च । परमस्मिन् समये अभावितया एकया अपूर्वविधिघटनया

संयोजयति विधैव नीचगाऽपि नरं सरित् ।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥

इत्यस्य *सुभाषितगततत्त्वस्य सत्यत्वं मयाऽनुभूतम्* । मुम्बईप्रदेशराज्यपालेभ्यो लोकनाम्यचरितस्य पुस्तकमेकमुपायनीकर्तुकामेन मया उपायनीकरणस्य शासनसंस्थापद्धतिं पृष्टे राज्यपालानां कार्यवाहे, एकस्मिन् दिवसे दर्शनार्थं राज्यपालतो निमन्त्रणं संप्राप्तम् । न ज्ञातवानहं दर्शनकारणम् ।

प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।

गतोऽहं दर्शनार्थम् । चरित्रलेखनविषयके कथायोगे केवलमभिनन्दनार्थं निमन्त्रितोऽहमिति ज्ञातवान् । सप्रश्रयमभिप्रायार्थं मया सूचिते राज्यपालैर्ग्रन्थस्य गुणग्रहणं मह्यं प्रतिश्रुतम् । ग्रन्थारम्भे एव तन्मया मुद्रितम् । अनेन गुणग्रहणेनोपकृतोऽहं मुम्बईप्रदेशराज्यपालेभ्यो 'डॉक्टर हरेकृष्ण मेहताब'-महाशयेभ्यः सविनयं कृतज्ञतापूर्वकं धन्यवादान् वितरामि ।

अन्ततः अज्ञानात् ज्ञानतो वाऽपि यत्किञ्चिदस्मिन् ग्रन्थे स्खलितं स्यात्तत् सर्वं विद्वद्भिरुदारमनसा क्षन्तव्यं, तथा च दोषस्थलानि कृपया दर्शयितव्यानीति सप्रश्रयं संप्रार्थ्य विरमामि ।

मुद्रणदोषराहित्ये दक्षे सत्यपि केचन दोषा अवशिष्टा एव । तेषां प्रमुखः सुरतनगरराष्ट्रियसभाविषये 'माल्वी' इत्यभिधानस्थाने 'माल्वीय' इति मुद्रितम् । एते दोषा वाचकैः क्षन्तव्याः । प्रथमं ग्रन्थस्थानां मुद्रणदोषाणां दूरीकरणम्, पश्चात्तस्य वाचनं कर्तव्यमिति संप्रार्थ्यते ।

भूतपूर्वराज्यपालानां लोकनायक-अणे-महोदयानां

# ४ प्रस्तावना



चित्तलग्योपाह्ववामनात्मजकृष्णशास्त्रिणा विरचितं संस्कृतटिळकचरितं मया अंशतः पठितम्। ग्रन्थकर्त्रा संक्षेपेण समग्रं चरित्रं निरूपितम्। टिळकः लोकेषु मान्यतां कथं गतः, तस्मै जननेतृभिः सादरं प्रदत्ता लोकमान्यपदवी तस्मिन् कथमन्वर्थका बभूव इति ज्ञानं वाचकानामस्य ग्रन्थस्य पठनेन समीचीनतया भवति। लोककल्याणार्थं स राजरोपोद्भूतान् बहून् क्लेशान् सहत। परदास्यपङ्कात् भरतखण्डमुद्धर्तुं तेन यावज्जीवं महान् प्रयत्नः कृतः। स्वोदरभरणचिन्तामग्नेषु लोकेषु मातृभूमिप्रेम, स्वातन्त्र्यलालसां, त्यागवृत्तिं च उत्पादयितुं तेन नानाविधा उपायाश्चिन्तिता योजिताश्च। स भारतीय-जनतानुकूल्यं संपाद्य पञ्चविंशतिवर्षपर्यन्तम् आङ्ग्लशासनाधिकारिणां विरोधं कृत्वा तैः सह निःशस्त्रयुद्धं चकार। तस्मिन् प्रदीर्घसमरे अब्धि-मन्थने रत्नानीव टिळकस्य स्वार्थत्यागस्थितप्रज्ञताधैर्यशौर्यसंघटनाचातुर्यनेतृत्व-कौशल्यादयोऽसामान्यगुणाः प्रकटीभूताः। वङ्गभङ्गान्दोलने स्थापितस्य स्वराजकीयपक्षस्य नेतृपदं टिळकेन स्वीकृतम्। तेन तत्पक्षस्य विशिष्टकार्य-प्रणालिसंयुतं ध्येयं विशदीकृतम्। स्वराज्यं ध्येयम्। स्वदेशीबहिष्कार-राष्ट्रियशिक्षणं च साधनानि। एतत्सर्वं युयुत्सुपक्षस्य स्वातन्त्र्यचतुःसूत्रीति संज्ञया विख्यातमासीत्।

स्वराज्यप्राप्त्यै निरन्तरं प्रयत्नशीलोऽपि टिळकः ऋग्वेदमहाभारत-भगवद्गीतादिग्रन्थानभ्यस्य वेदानां प्राचीनत्वं, वैदिकार्याणां मूलस्थानं, गीतारहस्यम् इत्यादिनवसिद्धान्तप्रतिपादकान् ग्रन्थान् रचयामास। अपूर्व-ग्रन्थनिर्मित्या स त्रिखण्डकीर्तिमवाप।

वङ्गभङ्गान्दोलनं वर्षत्रयपर्यन्तं टिळकेन संचालितम्। सुरतनगराधि-वेशने उभयपक्षयोर्विरोधः परां काष्ठां गतः। नेमस्तपक्षीयराष्ट्रियसभाचालकैः तदधिवेशनानन्तरं टिळकपक्षो बहिष्कृतः। टिळकः 'मण्डाले'कारागृहे षड्

यर्षाणि निनाय । चतुर्दशोत्तरैकोनविंशतितमे वर्षे कारावन्धनान्मुक्तो भूत्वा स स्वदेशं प्रत्यागतः । तदा आयुषः अन्तिमे पट्के तेन 'होमरूलडीग'स्थापना कृता । स्वानुयायिभिः सह राष्ट्रियसभां प्रविश्य हिंदुयवनयोरैक्यं कृतम् । हिंदुयवननेतॄणां संमतम् अखिलभारतस्य एकमेव राज्यघटनासुधारणापत्रकं विनिर्मितम् । इंग्लंडयात्रां कृत्वा हिंदवासिनां राजकीयाकाङ्क्षाणां प्रचारः कृतः । युद्धोत्तरकाले भारतदेशोऽपि स्वयंनिर्णयतत्त्वस्य अधिकारपात्रमस्ति इति 'विड्रो विल्सना'दिविश्वप्रमुखराजकार्यधुरंधरैः सह पत्रद्वारा विचार-विनिमयं कृत्वा निदर्शितम् । इंग्लंडदेशे श्रमजीविपक्षनेतृभिः सह सख्यं संपाद्य भारतस्य स्वातन्त्र्यप्रदाने तान् वचनबद्धानकरोत् । भरतखण्डं प्रत्यागतः सः राष्ट्रियसभायाः 'अमृतसरा'धिवेशनमुपस्थितवान् । तत्र मॉंटेग्युसुधारणाविषयकं पार्लमेंटानुमतं विधेयकं स्वीकृतम् । तदन्तर्गतवोपाधि-राकर्तुमान्दोलनं कर्तव्यमिति गांधीविरोधमविगणय्य स साग्रहं प्रतिपाद-यामास । तत्रोभयोः सन्धिर्जातः । तद्वार्तां श्रुत्वा राष्ट्रियसभागृहे अखिल-भारतप्रतिनिधिभिः प्रेक्षकैश्च सभामण्डपं टिळके प्रविष्टे सति सहर्षं स्वस्थाना-दुत्थाय तालिकावादनैर्जयघोषैश्च तस्य स्वागतं कृतम् । स्वदेशबान्धवानां राष्ट्रियसभास्थाने अयमेवान्तिमः प्रणामोऽभवत् । तदनन्तरं च पुण्यपत्तनं यात्वा राष्ट्रियसभाप्रजातन्त्रपक्षस्य स्थापना कृता, तत्पक्षस्य कार्यक्रमपत्रिका प्रकाशिता । सा पत्रिका एव टिळकस्य स्वानुयायिनाम् अन्तिमसन्देशो जातः ।

टिळकस्येदं सूत्ररूपेण कथितं स्फूर्तिदं चरित्रं कृष्णशास्त्रिणा संस्कृत-भाषायां वर्णितम् । ग्रन्थकर्तुर्गद्यं लेखनं सुलभं सरलं च । प्रस्तुतकालीन-राजकीयविवाद्यसमस्यानां चर्चां संस्कृतभाषायां घटपटादिदुर्बोधशब्दप्रचारान् विहाय कर्तुं शक्नोति लेखकः इत्येतद्ग्रन्थस्य पठनेन प्रतीतं भवति वाचकानाम् ।

टिळकः अखिलभारतस्य नेता । तेनाखिलभारतोद्धाराय एव यत्नः कृतः । तस्य ग्रन्था अपि अखिलभारतीयानां संस्कृतिप्राणभूतान् ऋग्वेद-महाभारतगीतादिग्रन्थान् अधिकृत्य तदर्थप्रतिपादनाय वा तत्संबन्धितविषय-चर्चायै एव लिखिताः । टिळकः लोकोत्तरः भारतपुरुषः । तस्य वाणी

भारतोद्धारिणी, तस्य कार्यक्षेत्रं आसेतुहिमाचलसमुद्रवलयाङ्कितभारतम् । अत एवाखिलभारतीयभाषामातृस्थानीयसंस्कृतभाषायां तस्य चरित्रलेखनं समुचिततरम् इति मन्ये ।

अयं चरित्रग्रन्थः संस्कृतैकज्ञानिनां प्राचीनपण्डितानां तच्छ्रेष्ठविभूति-कार्यपरिचयाय साधनम् इति तैरवश्यं स्वागतार्हः । संस्कृतभाषाप्रचारं चिकीर्षूणामपि अयमुपयुक्तः । अस्य पठनेन विनाऽऽयासं संस्कृतभाषाप्रवेशं कर्तुं पाठकः शक्नोति । अधुना संस्कृतिप्रोत्साहनस्य प्रभातम् उदितमिति भाति । अखिलभारतीयसंस्कृतेः संस्कृतभाषा एव मूलम् । तस्याः उत्तेजनं विना संस्कृतिप्रोत्साहनं सफलं नैव भवति । अत एव कृष्णशास्त्रिणः अयं संस्कृतटिळकचरित्रलेखनोद्योगः सर्वैरभिनन्दनीय एव । लेखकः विदुषां परितोषं प्राप्नोतु । पाठकाः टिळकचरित्रात् देशसेवास्फूर्ति प्राप्नुवन्तु । शासनाधिकारिणः गुणग्राहकतां लेखकाय पारितोषिकं दत्त्वा प्रकटयन्तु । विवेकधनपण्डिताः सत्याभिराशीर्भिः शास्त्रिणं ग्रन्थकर्तारं अनुगृह्णन्तु इति सदिच्छां व्यक्तीकृत्य विरमाम्यहम् ।

विद्वज्जनवशंवदः

अणे इत्युपाह्वः श्रीहरिसूनुर्माधवशर्मा

# ५ पुरस्कार

ले. श्री. ज. स. करंदीकर, विश्वस्त, केसरी.



श्री. चितळे उपनामक कृष्णशर्मा यांनी लिहिलेल्या 'लोकमान्य-टिळकचरितम्' या ग्रंथाचा वाचकांना परिचय करून देण्यांत मला अत्यानंद होत आहे. मराठी, इंग्रजी इत्यादि विविध भाषांतून लोकमान्यांची अनेक चरित्रें प्रसिद्ध झालीं आहेत. तथापि संस्कृत भाषेंतून प्रसिद्ध होणाऱ्या या चरित्राची गोडी कांहीं वेगळीच आहे.

लोकमान्यांचें चरित्र संस्कृतभाषेंतून प्रसिद्ध होत आहे, असें ऐकून 'टाइम्स ऑफ इंडिया' पत्रानें अशी पृच्छा केली कीं, हें संस्कृत भाषेंतलें चरित्र ग्रंथालयांतील कपाटाची शोभा वाढविण्याकरितां लिहिलें जात आहे काय? मराठी, इंग्रजी इत्यादि भाषांतलीं चरित्रें सोडून हें संस्कृत चरित्र कोण वाचणार? आणि किती जणांना तें समजणार? ही शंका भारतीय संस्कृतीचें आणि संस्कृत भाषेच्या लालित्याचें अनभिज्ञत्वच दर्शविते. भारतांतील सर्व प्रांतांना एकजीव करण्याला समर्थ अशी भाषा संस्कृत हीच होय. इतर भाषांतून लिहिलेले प्रबंध अल्पायु ठरतात. संस्कृत भाषेंतले लेखच सर्व प्रांतांतील विद्वज्जनांना मान्य होतात व ते चिरकाल टिकतात. लोकमान्य टिळकांची कीर्ति चिरकाल टिकण्याला त्यांचें चरित्र संस्कृतभाषेंत लिहिलें जाणें आवश्यक होतें. म्हणून श्री. कृष्णराव चितळे यांनीं टिळकचरित्र संस्कृतांत लिहिलें याबद्दल ते अभिनंदनास पात्र आहेत.

श्री. चितळे हे चांगले संस्कृतज्ञ आहेत. त्यांनी प्राचीन परंपरेच्या पंडितांच्या हाताखालीं व्याकरण-काव्य इत्यादींचा अभ्यास केला असून ते आंग्लभाषाप्रवीणहि आहेत. अशा रीतीनें हे द्विविध विद्याविभूषित असल्यानें असलें चरित्र लिहिण्यास ते सर्वथैव पात्र आहेत.

चरित्रांतील संस्कृतभाषा सोपी व प्रसादयुक्त आहे. महाविद्यालयां तील छात्रांना संस्कृतभाषेचा जेवढा परिचय होतो, तेवढा परिचय असलेल्या कोणाही वाचकास हें चरित्र वाचून सहज समजणारें आहे. त्यांत क्लिष्ट किंवा गूढ शब्दरचना नसून भाषा सरळ ओघवती आहे.

टिळकचरित्राचें महाभारताशीं अनेकविध साम्य असल्यानें लेखकानें यांतील प्रत्येक भागाला ' पर्व ' ही संज्ञा देऊन हें टिळकचरित्र अष्टादशपर्वयुक्त रचिलें आहे. महाभारतांतल्याप्रमाणेंच प्रत्येक पर्वांत अनेक उपपर्वें आहेत. यांतील प्रजागरपर्व, मित्रकार्यपर्व, मुक्तापर्व, ग्रंथपर्व, चिरोलपर्व, प्रजासंहारपर्व, इत्यादि नांवें विशेष आकर्षक आहेत.

टिळकांचीं चरित्रें आजवर अनेकांनीं लिहिलीं असल्यानें त्यांच्या चरित्रांतील कोणतीहि घटना वाचकांना अज्ञात अशी राहिली नाहीं. तथापि ज्याप्रमाणें तीच रामजन्माची, मारुतिजन्माची, कृष्णजन्माची कथा प्रत्येक हरिदास आपापल्या परीनें सांगतो व त्यांत जशी एखाद्याची कथा सरस तर दुसऱ्याची नीरस वाटते, त्याप्रमाणें टिळकचरित्राच्या अनेक लेखकांत त्यांच्या त्यांच्या गुणदोषानुसार सरसता किंवा निरसता येते. प्रस्तुत चरित्राचे लेखक श्रीकृष्ण यांचें चरित्रवर्णन सरस उतरलें आहे हें कळविण्यास आनंद वाटतो. मित्रविग्रहः, चहापानम्, अधिकारिणामुपद्रवः, चातुर्यप्रसंगः, अक्षेयमीमांसा, प्रसंगावधानम्, वंगदेशान्दोलनम्, अधिवेशनभंगः, लोकमान्यानां समर्थनम्, वेदकालनिर्णयः, आर्याणां वसतिस्थानम्, गीतारहस्यम्, एकषष्टिमहोत्सवः, युद्धपरिषदः, गर्वफलम्, चिरोलोद्गाराः, स्वराज्यसंघाधिवेशनम्, महायात्रासंचलनम् इत्यादि पर्वोपपर्वांतील वर्णन हृदयंगम व मार्मिक आहे. त्यांतल्या त्यांत गीतारहस्याचें रहस्य या चरित्रांत विस्तृतपणें विवेचिलें आहे, त्यामुळें कर्मयोगाचा सिद्धान्त सममतया आकलन करण्याला हें साधन चांगलें उपयुक्त झालें आहे.

शेवटच्या समालोचनपर्वांत तौलनिक दृष्टीनें गुणदोषांची चर्चा करून टो. टिळकांचें विभूतिमत्त्व आणि त्याचा भारतराष्ट्रावर झालेला सुपरिणाम थोडक्यांत घटकदार भाषेनें वर्णिला आहे.

अशा प्रकारें हें 'लोकमान्यचरितम्' सर्वतोपरी वाचनीय व अभ्यसनीय झालें आहे. ज्या शास्त्रीपंडितांना संस्कृतेतर भाषांच्या अनवलोकनामुळें राष्ट्रांतील महानान्दोलनांचेंहि यथावथ्य ज्ञान नसतें, त्यांना या गीर्वाणभाषेंतील चरित्राच्या वाचनानें राष्ट्रिय दृष्टि येईल. पाश्चात्त्य राष्ट्रांत जेथे जेथे संस्कृताचा अभ्यास चालतो तेथे तेथे या चरित्राच्या वाचनानें भारतांतील एका महान् विभूतीच्या राष्ट्रकार्याचा परिचय होऊन भारताविषयींहि त्यांची आदरबुद्धि वाढेल, असा भरंवसा वाटतो. श्रीयुत चितळे यांनी आत्मविश्वासानें हें कार्य हातीं घेतलें आणि तें परिश्रमपूर्वक पार पाडलें, याबद्दल आम्ही त्यांचें अभिनंदन करतों.

करंदीकरोपाह्वः सखारामसूनुर्जनार्दनः

# ६ पुरस्काररूपान्तरम्

चितळेइत्युपनामककृष्णशर्मभिर्लिखितस्य लोकमान्यटिळकचरितस्य परिचयं कर्तुमतीव मोदते मम मानसम्। मराठी - इंग्रजी - इत्यादिविविधभाषासु लोकमान्यानां चरित्राणि विरचितानि वर्तन्ते। तथापि संस्कृतभाषयाऽलङ्कृतस्यास्य चरितस्य काऽपि अपूर्वा माधुरी।

संस्कृतभाषायां लोकमान्यानां चरित्रं प्रकाशितं भविष्यतीति श्रुत्वा 'टाइम्स ऑफ इंडिया' वृत्तपत्रेण उपहासेन पृष्टम्, इदं गीर्वाणभाषायां विरचितं लोकमान्यचरितं ग्रन्थालये लघुकोष्ठमेव अलङ्करिष्यति किम्? मराठी - इंग्रजी - इत्यादिभाषासु लिखितानि चरित्राणि परित्यज्य इदं संस्कृतचरित्रं के जना वाचयिष्यन्ति? तेषां कति वा तत् ज्ञास्यन्ति? इति। संपादकस्येयमाशङ्का भारतीयसंस्कृत्याः संस्कृतभाषालालित्यस्य च तस्य अनभिज्ञत्वमेव प्रकटयति। भरतखण्डे सर्वान् प्रदेशानेकस्मिन् सूत्रे ग्रथयितुं यदि काचित् भाषा समर्था स्यात्तर्हि सा संस्कृतभाषा एव। इतरभाषासु लिखिताः प्रबन्धा अल्पजीविनो भवन्ति। देववाण्यां विरचिता एव विदुषां मान्या भवन्ति चिरं च तिष्ठन्ति। लोकमान्यकीर्तिडिंडिमं सततं निनादयितुं गीर्वाणभाषायां लिखितं तेषां चरित्रमावश्यकमेवासीत्। तच्चरितमेतैः कृष्णशर्मभिर्विरचितम्। अतस्ते अभिनन्दनार्हा भवन्ति।

संस्कृतभाषाभिज्ञाः चितळेमहोदयाः परम्परागतप्राचीनपण्डितकुले अधीतव्याकरणकाव्यकोशाः आङ्ग्लभाषाविभूषिताश्च। एवं प्राचीनार्वाचीनविद्यालङ्कृतास्ते एतादृशं चरित्रं विरचयितुं सर्वथैव योग्याः।

चरित्रलेखने प्रयुक्ता संस्कृतभाषा सुबोधा, सरला, प्रसादयुक्ता च वर्तते। महाविद्यालये अधीयानानां छात्राणां संस्कृतभाषायाः यावान् परिचयस्तावता परिचयेन कोऽपि वाचकः एतच्चरित्रं वाचयित्वा विनाऽऽयासं

तज्जानीयात् । न तस्मिन् क्लिष्टाः शब्दाः न वा गूढाः शब्दरचनाः । प्रत्युत सकला रचना सरला, भाषा बालबोधिनी ओघवती च ।

टिळकचरित्रस्य महाभारतेन सह नैकविधं साम्यम् । लेखकेन प्रकरणानि 'पर्व'शब्देन संज्ञितानि कृत्वा अष्टादशपर्वयुक्तं चरितमिदं विरचितम् । महाभारते इवास्मिन्नपि ग्रन्थे अनेकान्युपपर्वाणि सन्ति । तेषु प्रजागरपर्व, मित्रकार्यपर्व, मुक्तापर्व, ग्रन्थपर्व, चिरोलपर्व, प्रजासंहार-पर्वेत्यादिनामानि वाचकानां मनांसि विशेषेण समाकर्षन्ति ।

अद्यावधि बहुविधैर्जनैर्लोकमान्यानां चरित्राणि विरचितानि । अतश्चरित्रविषयको न कोऽपि प्रसंगो वाचकानामज्ञातो वर्तते । तथापि सैव रामजन्मकथा, हनुमज्जन्मकथा, कृष्णजन्मकथा कीर्तनकारो यथा स्वकौशलं प्रकटयन् कथयति, यथा च तासु एका सरसा, अपरा च विरसा भवति, तथा टिळकचरितलेखनेऽपि लेखकस्य गुणदोषानुसारतः सरसता विरसता वा प्रादुर्भवति । प्रस्तुतचरित्रलेखकस्य श्रीकृष्णस्य लेखनं सरसं विद्यते इति निवेदयितुं वयं प्रमोदामहे । मित्रविग्रहः, महापानम्, अधिकारिणामुपद्रवः, चातुर्यप्रसंगः, अज्ञेयमीमांसा, प्रसंगावधानम्, वंगदेशान्दोलनम्, अधिवेशनभंगः, लोकमान्यानां समर्थनम्, वेदकालनिर्णयः, आर्याणां वसतिस्थानम्, गीतारहस्यम्, एकषष्टिमहोत्सवः, युद्धपरिषदः, गर्वफलम्, चिरोलोद्गाराः, स्वराज्यसङ्घाधिवेशनम्, महायात्रासंचलनम्, इत्यादि-पर्वोपपर्वसु विद्यमानं वर्णनं मार्मिकं हृदयंगमं च विद्यते । तेष्वपि 'गीता-रहस्य'ग्रन्थस्य रहस्यमस्मिन् चरित्रे विस्तरेण प्रतिपादितं दृश्यते । तेन कर्मयोगसिद्धान्तं साकल्येनाकलयितुमुपयुक्तमिदमन्यत् साधनं उपलब्धं भवति ।

ग्रन्थस्यान्तिमे समालोचनपर्वणि तौलनिकपद्धत्या गुणदोषचिकित्सां कृत्वा लोकमान्यटिळकमहोदयानां विभूतिमत्त्वं, तस्य च भारतदेशे जातः सुपरिणामः संक्षेपेण मनोरमवाण्या वर्णितो दृश्यते ।

एवंगुणविशिष्टमिदं लोकमान्यचरितं सर्वप्रकारेण वाचनीयम् अभ्य-सनीयं च जातम् । येषां शास्त्रिणां पण्डितानां च संस्कृतेतरभाषानवलोक-

नेन भरतखण्डे जातानां महान्दोलनानां सम्यग् ज्ञानं न विद्यते, ते गीर्वाण-भाषायां लिखितेनानेन ग्रन्थेन राष्ट्रियदृष्टिं लभेरन्। पाश्चात्यदेशेष्वपि यत्र यत्र संस्कृतभाषाऽभ्यस्यते तत्र तत्र अस्य ग्रन्थस्य वाचनेन भारतदेशे समुत्पन्नस्यास्य महापुरुषस्य राष्ट्रकार्यस्य सम्यक् परिचयो भूत्वा तस्य भारतदेशविषयकः आदरः वृद्धिं प्राप्नुयादिति विश्वासः समुत्पद्यते। चितळेमहोदयैरेतत्कार्यं विश्वासपूर्णमनसाऽङ्गीकृत्य परिश्रमपूर्वकं पूर्णतां नीतमिति समालोच्य वयं तान् अभिनन्दामः।

फरंदीकरोपाह्वः सखारामसूनुर्जनार्दनशर्मा

( तर्कतीर्थलक्ष्मणशास्त्री जोशीमहाशयानां )

# ७ द्वितीयः पुरस्कारः

भारतराष्ट्रगुरोः पुण्यश्लोकस्य लोकमान्येत्यसाधारणपदवीभाजो लोकोत्तरचरितप्रभावस्य सकलभारतीयकुलतिलकस्य परमपावनीयेयं कथा गीर्वाणवाण्यां सुश्लिष्टाक्लिष्टपदवाक्यविन्यासैः रचिता सहृदयानां चेतःसु चकास्ति। एषा सुभगा तिलककथाऽष्टादशसु पर्वसु निबद्धा वैयासिक्या महाभारतकथाया औपम्यं चारुतया सूचयन्ती द्योतयति यदयं चरितरचयिता महान्तं पुण्यौघं संपादयन् दुरितपटलं निर्दह्य वाचकानामपि दुरिततिमिरं तिरोदध्यात् सुकृतानि च तेभ्यो वितरेदिति। ये किल भारतवर्षेऽन्यत्र च संस्कृतभाषायां प्रविष्टबुद्धयो विदग्धमतयो वा वर्तन्ते ते सर्वेऽप्यस्य तिलकचरितस्य पठनेन स्वात्मानं धन्यं मंस्यन्ते इत्यत्र मनागपि पदं संदेहो न कुरुते। अस्य चरितस्य पठनेन परं संतोषमधिगच्छन्तो वयमिमं कथारचयितारं सानन्दमभिनन्दयामः। युवानः प्रौढाश्च संस्कृतप्रविष्टमतयो नूनमिमां कथां परिशीलयन्तो तिलकगुरोर्जीवितस्य सकलमनतिविस्तरं च चरितपरामर्शं चित्रपटमिव हृदि चिरं धारयितुं प्रभवेरन्निति।

यस्य स्मरणमात्रेणागण्यपुण्यराशेर्वशीकरणं भवति सोऽयं बालाख्यः प्रज्ञाप्रभुस्तिलकगुरुर्भारतं वल्द्वयात्मकेऽधिष्ठाने बिभर्ति। एतद्वल्द्वयं निष्ठाद्वयरूपमस्ति। प्रथमा निष्ठा, एकमिदं भारतराष्ट्रं, तस्य स्वराज्यमेकात्मकमेव सर्वैर्भारतीयैः शरणीकरणीयमित्याकारा एकात्मकभारतस्वराज्यनिष्ठा। द्वितीया निष्ठा चिरंतनधार्मिकतत्त्वदर्शनाश्रितः कर्मयोगः।

प्रथमेयं निष्ठा प्रत्यवायबहुलाऽस्ति। बहुलप्रत्यवायपरिहारार्थं बहुभ्यः संवत्सरशतेभ्यः संचितानां भारतीयसामाजिकजीवनधारणायां व्यापत्कराणां पातकानां क्षयार्थं तिलकगुरुणा महद्दीर्घं सुदुष्करं च तप आचरितम्। तेन तिलकतपसा दग्धकिल्बिषे भारतेऽस्मिन् राष्ट्रियैक्योद्बोधनकरं स्वात्मबोधोत्थं परं ज्योतिराविर्भूतम्। तदेव प्रथमनिष्ठात्मकम्। तच्च ज्योतिर्भारतीयानां हृदयमन्दिराणि प्रकाशयच्चिरमास्ते। अधिष्ठानभूताया भारतैक्यभावनाभाविताया ज्योतिःस्वरूपाया अस्या निष्ठाया दूषका अन्तराय-

भूताः प्रत्यवायाः पुनःपुनरुद्भवन्तो भीपयन्ते भारतीयानां चित्तेषु संमोहं जनयित्वा भ्रमं चोद्भाव्येति सर्वैर्विवेकिभिस्तिलकादर्शचिन्तनेन चित्तमालिन्यापनोदनं कृत्वा सावधानमतिभिर्भवितव्यम् । ते च प्रत्यवाया जातिभेद–प्रान्तभेद–भाषाभेद–धर्मभेदेत्याद्युपाधिरूपा विवेकपरिभवाय यतन्ते कानिचिन्निमित्तानि पुरस्कृत्य । बहून्यपरिमेयानि चेमानि निमित्तानि संमोहजननाय प्रभवन्ति काले काले, मानुषस्वभावस्थाविवेकजन्यकालुष्यगोचरत्वात् । कदाचित् जातिविशेषपक्षपाताः, कदाचित् प्रादेशिकराज्योपाधिका विसंवादाः, कदाचित् राष्ट्रियभाषाविशेषपोषणार्थोद्यमाः विधानपरिषद्भिः शासनतन्त्रैर्निर्वाचितमन्त्रिमण्डलैर्नेतृश्रेष्ठवर्गेण वा विनियुक्तार्थाधिक्यवशाद्वा विधिविशेषप्रवर्तनाद्वा संस्थाप्रचाराद्वा प्रवर्तिताः, नागरिकगणेषु वैमत्यमुत्पाद्य विद्वेषं विग्रहं च जनयन्ति । आर्थिकनियोजनविशेषेषु विशेषेण एकदाऽन्यं प्रदेशं प्राधान्येन पुरस्कर्तुं युक्तं दृश्येत एकदाऽन्यं च प्रदेशम् । एतदपि पक्षपातदोषशङ्कामुपजनयत् राष्ट्रैक्यभावनां बाधेत । अर्थानां मध्यशासनकृता विषमा विनियोगा अपि अन्ततो राष्ट्रपोषणोदर्का भवन्ति, ते अपि अदीर्घदर्शिभिरनुदारहृदयैः पक्षपातशङ्कामुत्पाद्य दूष्यन्ते । एतानि सर्वाणि संमोहस्थानानि अन्तःकोपकराणि राष्ट्रविदारणानि सर्वथा तिलकप्रदत्तां स्वराज्यैकात्मकसंवित्ति ज्योतिःस्वरूपामधिष्ठाय निवार्याणि ।

श्रीतिलकसद्गुरुणा निर्मिता द्वितीया निष्ठा कर्मयोगात्मिका भारतभूमिं नितान्तमुपकरोति । पुराणपुरुषोत्तमादारभ्य प्रसृतस्य मध्ये मध्ये भस्मपिहितवह्नेरिव लुप्तप्रायस्य सनातनस्य दिव्यस्य कर्मयोगतत्त्वदर्शनस्योद्धरणेन सर्वेभ्यो जगतीगतेभ्यो धार्मिकतत्त्वदर्शनेभ्यो नितरामतिशेतेऽयं गीतारहस्यपरिष्कृतः कर्मयोगमार्गः । भारतीया यावत्पर्यन्तमिमं श्रीतिलकसद्गुरुणोपदिष्टं स्वयमाचरितं च मार्गं न परित्यक्ष्यन्ति तावत्पर्यन्तं भारतीयान् जेतुं दिवि वा पाताले वा भूतले वा निवसन् सर्वातिशायिनीमपि महाशक्तिं बिभ्रदरिर्न प्रभवेत् । श्रीतिलकगुरुमुखद्वारा साक्षाद्भगवतैवायं पुनर्गीतारहस्यरूपेण श्रावितः सार्वभौमो गीताधर्मो भारतीयेभ्य उपदिष्ट इति श्रद्दध्महे ।

प्राज्ञपाठशाला, वाई
२९-५-५६

लक्ष्मणशास्त्री जोशी तर्कतीर्थः

# ८ अनुक्रमणिका

प्रारम्भिकम् — (१) आङ्ग्लभाषायां गुणग्रहणम् पृ. १, (२) तस्य रूपान्तरम् पृ. २, (३) हृद्गतम् पृ. ३, (४) प्रस्तावना पृ. ८, (५) पुरस्कारः ( मराठी भाषायाम् ) पृ. ११, (६) पुरस्काररूपान्तरम् पृ. १४, (७) द्वितीयः पुरस्कारः पृ. १७.

मङ्गलाचरणम् पृ. १

१ स्वाध्यायपर्व— (१) विषयोपन्यासः पृ. ३, (२) शैशवम् पृ. ४, (३) अध्ययनम् पृ. ५, (४) विवाहः पृ. ७, (५) महाविद्यालयशिक्षणम् पृ. ८, (६) बलवर्धनम् पृ. ८, (७) चापलानि पृ. ८, (८) अध्यापकवर्गः पृ. ९, (९) सहाध्यायिनः पृ. १०.

२ अध्यापनपर्व— (१) जीवनपार्श्वभूमिः पृ. ११, (२) नूतनाङ्गलविद्यालयः पृ. १४, (३) वृत्तपत्रद्वयम् पृ. १९, (४) कोल्हापुरप्रकरणम् पृ. २१, (५) फर्ग्युसनमहाविद्यालयस्थापना पृ. २४, (६) कोणशिलास्थापनोत्सवः पृ. २६, (७) मित्रविग्रहः पृ. २७, (८) शिक्षणसंस्थात्यागः पृ. ३२.

३ प्रजागरपर्व— (१) क्राफर्डमहाशयः पृ. ४१, (२) केसरिमराठावृत्तपत्रद्वयम् पृ. ४२, (३) विवाहकालमर्यादा पृ. ४४, (४) चहापानम् पृ. ४८, (५) पण्डिता रमादेवी पृ. ५१, (६) हिंदुयवनसंक्षोभः पृ. ५४, (७) वापटसमितिः पृ. ६२, (८) संकीर्णविषयाः पृ. ६४, (९) विधिमण्डलप्रवेशः पृ. ६५, (१०) राष्ट्रियमहोत्सवौ पृ. ६७, (११) श्रीशिवछत्रपत्युत्सवः पृ. ६८, (१२) राष्ट्रियसभामण्डपकलहः पृ. ७०.

४ महाराष्ट्रविपत्पर्व— (१) महद्दुर्भिक्षम् पृ. ७३, (२) ग्रन्थिज्वरः पृ. ७९, (३) उपाययोजना पृ. ७९, (४) अधिकारिणामुपद्रवः पृ. ८१.

५ प्रथमराजद्रोहाभियोगपर्व– (१) राजद्रोहाभियोगः पृ. ८५, (२) रँड्महाशयवधः पृ. ८७, (३) अभियोगपूर्वकारावासः पृ. ९०, (४) प्रतिभूविषयः पृ. ९१, (५) सुहृत्साहाय्यम् पृ. ९२, (६) चातुर्यप्रसङ्गः पृ. ९३, (७) लँग्महाशयभाषणम् पृ. ९५, (८) प्यूमहाशयभाषणम् पृ. ९६, (९) न्यायाधीशसमारोपः पृ. ९७, (१०) अभियोगनिर्णयः पृ. ९८, (११) तेजस्विता पृ. ९९, (१२) अन्याभियोगाः पृ. १००, (१३) कारावासः पृ. १०१, (१४) मुक्तता पृ. १०४, (१५) चाफेकरप्रकरणम् पृ. १०५, (१६) द्रविडबन्धुवधः पृ. १०८, (१७) टाइम्सपत्रस्य क्षमायाचनम् पृ. १०९, (१८) विश्रान्तिसुखम् पृ. ११०, (१९) गृहजीवनम् पृ. ११०.

६ ' पुनश्च हरिः ओम्'पर्व– (१) पुनश्च केसरिपत्रसंपादनम् पृ. ११३, (२) 'काळ'पत्रम् पृ. ११५, (३) रँगलर' परांजपे'महाशयाभिनन्दनम् पृ. ११६, (४) सातारानगरे प्रादेशिकी परिषद् पृ. ११६, (५)रानडेमहाशयनिधनम् पृ. ११८, (६) आङ्ग्लदेशराज्ञीनिधनम् पृ. ११९, (७) अज्ञेयमीमांसा पृ. ११९, (८) केसरिपत्रम् पृ. १२२, (९) राज्यारोहणमहोत्सवः पृ. १२४, (१०) कलकत्तानगरे शिवछत्रपतिमहोत्सवः पृ. १२५.

७ मित्रकार्यपर्व– (१) ताईमहाराजप्रकरणम् पृ. १२७, (२) दत्तकप्रकरणम् पृ. १२८, (३) विरुद्धमन्त्रः पृ. १२९, (४) प्रसङ्गावधानम् पृ. १३०, (५) अभियोगपरीक्षणम् पृ. १३२, (६) वरिष्ठन्यायालयः पृ. १३३.

८ राष्ट्रियसभापर्व– (१) राष्ट्रियसभा पृ. १३६, (२) पञ्चाङ्गशोधनम् पृ. १३६, (३) समाजसुधारणातत्त्ववादः पृ. १३७, (४) पुनः पण्डिता रमादेवी पृ. १३७, (५) काळवृत्तपत्रम् पृ. १३७, (६) ब्रुइन्महाशयनिधनम् पृ. १३८, (७) उत्सवाः पृ. १३८, (८) नेमस्तपक्षनिराशा पृ. १३८, (९) अधिकारमदः पृ. १३९, (१०) राष्ट्रियसभाधिवेशनम् (१९०५) पृ. १४०, (११) वङ्ग-

देशान्दोलनम् पृ. १४०, (१२) राष्ट्रियसभाधिवेशनम् (१९०६) पृ. १४२, (१३) स्वदेशीयवस्तुप्रचारः पृ. १४४, (१४) आज्ञापत्रकपरिणामः पृ. १४४, (१५) वीरनवाली पृ. १४६, (१६) प्रादेशिकपरिषद् पृ. १४८, (१७) मोर्ले-मिंटोसुधारणाः पृ. १४८, (१८) गोखले-टिळकवादः पृ. १४९, (१९) राष्ट्रियसभास्थलम् पृ. १४९, (२०) अध्यक्षपदम् पृ. १४९, (२१) 'सुरत' नगरे राष्ट्रियसभाधिवेशनम् पृ. १५१, (२२) अधिवेशनभङ्गः पृ. १५२, (२३) लोकमान्यविरुद्धप्रचारः पृ. १५३, (२४) वार्ताहरलिखितवृत्तान्तः पृ. १५७, (२५) नेमस्तपक्षनिवेदनम् पृ. १६१, (२६) राष्ट्रियपक्षनिवेदनम् पृ. १६२, (२७) इतस्ततः पृ. १६४.

९ द्वितीयराजद्रोहाभियोगपर्व– (१) पक्षभेदः पृ. १७०, (२) अभियोगानुज्ञा पृ. १७०, (३) अभियोगपूर्वकारावासः पृ. १७२, (४) अभियोगपरीक्षणम् पृ. १७३, (५) लोकमान्यानां निवेदनम् पृ. १७५, (६) लोकमान्यानां समर्थनम् पृ. १७६, (७) शासनसंस्थाविधिज्ञस्य प्रतिपादनम् पृ. १८०, (८) न्यायाधीशसमारोपः पृ. १८२, (९) अभियोगनिर्णयः पृ. १८२, (१०) धीरगमीरा वाक् पृ. १८३, (११) कारावासदण्डः पृ. १८३, (१२) लोकक्षोभः पृ. १८४, (१३) कारागृहगमनम् पृ. १८५, (१४) केळकरमहाशयेषु अभियोगः पृ. १८५.

१० मुक्ततापर्व– (१) 'मंडाले' कारावासः पृ. १८८, (२) लोकमान्यकथितकारावासवृत्तान्तः पृ. १८८, (३) कारावासानन्तरम् पृ. १९२, (४) गृहे कारावासः पृ. १९५, (५) लोकमान्यनिवेदनम् पृ. १९६.

११ ग्रन्थपर्व– (१) वेदकालनिर्णयः पृ. १९८, (२) आर्याणां वसतिस्थानम् पृ. २०१, (३) गीतारहस्यम् पृ. २०४.

१२ राष्ट्रियसभासन्धिपर्व– (१) राष्ट्रियसभाप्रवेशवादः पृ. २२२, (२) गोखलेमहाशयनिधनम् पृ. २२७, (३) राष्ट्रियपक्षपरिषद् पृ. २२८.

१३ स्वराज्यसङ्घपर्व– (१) स्वराज्यसङ्घस्थापना पृ. २२९, (२) फेरोजशहा मेथामहाशयनिधनम् पृ. २२९, (३) मुंबईप्रदेश-

परिषद् पृ. २३०, (४) एकपष्टिमहोत्सवः पृ. २३१, (५) तृतीयाभियोगः पृ. २३५, (६) नगरपत्तने व्याख्यानम् पृ. २३६, (७) वरिष्ठन्यायालयः पृ २३८, (८) लखनौनगरे राष्ट्रियसभाधिवेशनम् पृ. २४०, (९) अधिवेशनम् पृ. २४२, (१०) अण्णासाहेब पटवर्धननिधनम् पृ. २४५, (११) सैनिकशिक्षणम् पृ. २४५, (१२) कर्णाटकयात्रा पृ. २४६, (१३) गांधीमहाशयानां सत्याग्रहः पृ. २४६.

१४ स्वातन्त्र्योषःकालपर्व– (१) बेझंटमहिलायाः स्थानबद्धता पृ. २४७, (२) घोषणा पृ. २४७, (३) संकीर्णम् पृ. २४७, (४) स्वराज्यान्दोलनार्थं दीर्घप्रवासः पृ. २४८, (५) कोलंबोयात्रा पृ. २४९, (६) युद्धपरिषदः पृ. २५१.

१५ चिरोलपर्व– (१) सर् व्हॅलंटाइन चिरोलमहाशयः पृ. २५४, (२) गर्वफलम् पृ. २५५, (३) चिरोलमहाशयाभियोगः पृ. २५६, (४) चिरोलोद्गाराः पृ. २५८, (५) आङ्ग्लदेशनिवासः पृ. २६०.

१६ प्रजासंहारपर्व– (१) कृष्णविधिः ( रौलट् ॲक्ट ) पृ. २६२, (२) जालियनवालानामकमुद्यानम् पृ. २६४, (३) भारतदेशं प्रत्यागमनम् पृ. २६५, (४) अमृतसर–राष्ट्रियसभा पृ. २६६, (५) स्वराज्यसंघाधिवेशनम् पृ. २६९.

१७ निर्याणपर्व– (१) ज्वरप्रादुर्भावः पृ. २७०, (२) निर्याणम् पृ. २७०, (३) महायात्रासंचलनम् पृ. २७१.

१८ समालोचनपर्व– (१) शिक्षणक्षेत्रे अग्रेसरत्वम् पृ. २७३, (२) चिरोलदत्तप्रमाणपत्रम् २७४, (३) असाधारणबुद्धिमत्त्वम् पृ. २७५, (४) निर्भयत्वम् पृ. २७७, (५) लोकमान्यदोषाः पृ. २७८, (६) निधनोत्तरविभूतिमत्त्वम् पृ. २७९, (७) प्रार्थना पृ. २७९.

१९ शुद्धिपत्रम्–पृ. २८१.

२० विशेषशब्दकोशः–पृ. २८३.

श्रीमल्लोकमान्याः



जन्म २३-७-१८५६ | मृत्युः १-८-१९२०

# मङ्गलाचरणम्

ओमित्येकप्रतीकाय सच्चिदानन्दरूपिणे ।
विश्वात्मकाय देवाय परस्मै ब्रह्मणे नमः ॥ १ ॥
'गणानां त्वा गणपतिं' मन्त्रेणैतेन यः स्तुतः ।
नमस्तस्मै गणेशाय सर्वप्रत्यूहनाशिने ॥ २ ॥
वाग्रूपिण्यै सरस्वत्यै भक्तियुक्तेन चेतसा ।
शब्दसम्पत्प्रदानार्थं प्रार्थयेऽहं सदा नतः ॥ ३ ॥
जनकं वामनं वन्दे लक्ष्मीं स्वजननीं तथा ।
त्र्यम्बकं ज्ञानदातारं वैयाकरणभूषणम् ॥ ४ ॥
लोकचित्तविजेतारं टिळकेत्युपनामकम् ।
गङ्गाधरसुतं बालं वन्देऽहं केशवं मुदा ॥ ५ ॥
तस्य विस्तीर्णचरितं वर्णितं पूर्वसूरिभिः ।
देववाण्यां वक्तुकामः प्रयते तत्प्रसादतः ॥ ६ ॥

'नमो वाचे नमो वाचस्पतये'

# लोकमान्यटिळकचरितम्

## १ स्वाध्यायपर्व

### १ विषयोपन्यासः

आनन्दः खलु सञ्जायते मानसं च प्रसन्नं भवति इदानीमासेतुहिमाचलं पूर्वापरसागरान्तमेतं भारतदेशं स्वातन्त्र्योपभोगिनं दृष्ट्वा । एतद् भरतखण्डस्य स्वातन्त्र्यं समतीते वर्षशते लब्धजन्मनां–दिवं गतानां तथा विद्यमानानां–सर्वेषां भारतसुपुत्राणां राष्ट्रधुरीणानां प्रयत्नानां समुदितं सुधासदृशं मधुमधुरं महाफलम् । सकलानामपि सुपुत्राणां चरित्राण्यवश्यमवलोकनीयानि भवन्ति, किमुत सर्वङ्कषबुद्धिमतां रामकृष्णसदृशानां युगपुरुषाणां, यतः किल तच्चरित्रश्रवणमनननिदिध्यासनादेव धर्मे रतिः, कर्तव्ये स्फूर्तिः, समुद्यमे मतिः, व्यवहारे युक्तिः, सङ्कटे धृतिः, अभ्युदये अनुत्सेक इत्यादयो गुणाः प्रसिध्यन्ति । एतेषां चरित्राणि न केवलमवलोकनीयानि अपि तु अध्येतव्यानीति विद्वांसो मन्यन्ते । तेषु राष्ट्रधौरेयेषु महाराष्ट्रदेशललामभूताः, सज्जनेषु वन्दनीयचरिताः, सुहृज्जनेषु मित्रकार्यरताः, राष्ट्रकार्येषु ध्वज इवाग्रेसराः भारतभूमितिलकायमाना लोकमान्य–'टिळक' महाशयाः ।

प्राचीनजम्बुद्वीपान्तःपाती पूर्वापरजलनिधिवेलापरिखः वसिष्ठवामदेवादिमहर्षितपश्चरणपूतः भरतभगीरथहरिश्चन्द्रादिनरपतिरत्नालङ्कृतः कपिलकणादपाणिन्यादिदर्शनकारमण्डितः सुविख्यातोऽयं भारतदेशः । खण्डप्रायेऽस्मिन् भारतदेशे प्राचीनकाले बहूनि राष्ट्राण्यासन् । तेषु कानिचिल्लघूनि, कानिचिन्मध्यमानि, कानिचिद्विस्तीर्णानि । सर्वेष्वपि राष्ट्रेषु

असंख्यानि नररत्नानि साहित्यस्थापत्यरसायनतत्त्वज्ञानादिशास्त्रेषु, गानवादननर्तनचित्रीकरणादिकलासु, धर्मकारणराजकारणसमाजकारणादिविविधक्षेत्रेषु आत्मनो बुद्धिप्रागल्भ्यं वाक्पाटवं कार्यकौशलं ज्ञानागाधत्वं विचारवैपुल्यं च प्रकटय्य सुमहद्यशोधनं सम्पादयामासुः । एतानि नररत्नानि न केवलं भरतखण्डे ख्यातिं जग्मुः, अपि तु प्रधानतमेषु प्राच्यदेशेषु तथा अग्रेसरपाश्चात्त्यदेशेष्वपि महतीं प्रतिष्ठामवापुः । परम् अतीते वर्षशते दैवदुर्विपाकात्पारतन्त्र्यदुःखमनुभवतो भारतस्य राष्ट्रधुरीणानां विद्वद्रत्नानां कर्तृत्वशालिनामाबालवृद्धानां जनानामात्मनो मातृभूमिस्वातन्त्र्यसिद्धिरूपमेकमेव साध्यमासीत् । तत्सिद्धये साधनीभूतं लोकशिक्षणं प्रथमं कर्तव्यं भवति । एवंविधे राष्ट्रकार्ये यैरात्मनो जीवितं सर्वात्मना यापितं, तेषु देशकार्यरतेषु पुरुषश्रेष्ठेषु अलोकसामान्यकर्तृत्वेन, विद्वज्जनेषु वैदुष्येण, उद्यमशालिषु अनवरतकर्मयोगानुष्ठानेन, पुण्यपुरुषेषु शीलेन, व्यवहारिषु त्यागेन, अज्ञानान्धकारमग्ने भारतदेशे महता लोकप्रजागररूपान्दोलनेन यो जनानामन्तःकरणेषु दृढं स्थानं लेभे, यश्च छत्रपतेः शिवभूपालस्य कर्मभूमौ महाराष्ट्रदेशे स्वजन्मना निजान्वयमलङ्कृतवान् स 'टिळक'कुलोत्पन्नो गङ्गाधरतनयः केशवश्चरित्ररूपेणास्माभिरिदानीं द्रष्टव्यः । 'बाळ' इत्यपरं तस्य नामधेयम् । स आत्मनो बुद्धिविभवेन विद्याव्यासङ्गेन अनन्यसाधारणकर्तृत्वेन च लोकमान्यतां जगाम । तस्मादस्मिन्नपि चरित्रे 'लोकमान्यटिळक' इति शब्देन वा, केवलेन 'लोकमान्य'शब्देन वा टिळकमहोदयानां निर्देशो महता गौरवेणास्माभिः क्रियते ।

## २ शैशवम्

चरित्रनायकलोकमान्यटिळकमहोदयानां जन्म शालिवाहनशकस्य १७७८ संवत्सरे आषाढे मासे कृष्णपक्षे षष्ठ्यां तिथौ सौम्यवासरे–ख्रिस्ताब्दस्य १८५६ वत्सरे जुलैमासे त्रयोविंशे दिवसे–महाराष्ट्रदेशान्तःपातिनि अपरान्तभागे रत्नागिरिनाम्नि नगरे सञ्जातम् । गङ्गाधरनामा एतेषां जनकः, जननी च पार्वतीनाम्नी । पुत्रस्य नामकरणसमये 'केशव' इति स्वकुलदेवतानामधेयं मातापितृभ्यां बान्धवजनैश्च सुप्रतिष्ठितं कृतम् ।

तथापि बन्धुवर्गैरापजनैश्च शैशवे ' बाळ–बाळ ' इति तेन तेन निमित्तेन गृहे पुनः पुनर्नामग्रहणेन लोकमान्यानां ' बाळ ' इत्येव नामधेयं सुपरिचितमभूत् । पत्रादिलेखनावसरे अधस्तात् हस्ताङ्कनकाले ' बाळ गङ्गाधर टिळक ' इत्येव आत्मनाम लोकमान्यैर्लिखितं दरीदृश्यते । अतो ' केशव ' इति लोकमान्यानां नामधेयं न बहुजनपरिचितम् ।

टिळकमहोदया जनकजनन्योर्न प्रथमापत्यम् । प्रथमं तेषां मातापित्रोः कन्यात्रितयं सञ्जातम् । अतस्तासां माता मनस्यखिद्यत । पुत्रप्राप्तये सा रामभक्तरामदासजननीव सूर्यदेवतामाराधयामास । तत्प्रसादादेवायं पुत्रलाभो जात इति साऽमन्यत । प्रत्यहं शुक्लेन्दुवत्समवर्धतायं लोकनयनानन्दकरो बाललोकमान्यः ।

## ३ अध्ययनम्

बाललोकमान्यानां शैशवे विशेषेणोल्लेखनीयो न कश्चिद्व्यतिकरो दृश्यते । परम् अस्य गुणद्वयं बन्धुजननयनगोचरतां गतम् । प्रथमोऽस्य बालस्य गुणः अनन्यसाधारणबुद्धिमत्त्वम् । अपरः आग्रहयुक्तः स्वभावः । एतादृशं बुद्धिवैभवं वीक्ष्य शैशवे एव कतिचित् संस्कृतप्राकृतसुभाषितानि जनकेनोपदिष्टानि । नवरात्रावसाने विजयादशम्याः शोभने मुहूर्ते षड्वर्षदेशीयोऽयं बालस्तत्कालोचितप्राथमिकशालां प्रवेशं प्रापितः । अष्टमे वर्षे महता उत्सवेन उपनयनविधिना संस्कारितोऽयं बालः । संस्कृतभाषायाः सम्यगवबोधार्थं व्रतबन्धात् प्रागेव रूपावलिसमासचक्रामरकोशादिप्राप्ताविकं पठनम् अनेन कृतमासीत् । तथैव सन्ध्यावन्दनसूर्यनमस्कारदेवपूजनादिब्रह्मयज्ञान्तो नित्यकर्मविभागोऽप्यनेनाधीतः । व्रतबन्धात्पूर्वमेवैतादृशं वटोरध्ययनमालोक्य विद्वांसो विप्रा उपाध्यायादयश्च महदाश्चर्यं प्राप्ताः ।

लोकमान्यानां जनकः प्रथममाङ्ग्लविद्यालये अध्यापक आसीत् । सेवकविध्यनुसारेण स रत्नागिरिनगरविद्यालयात् पुण्यपत्तने –पुणेनगरे– निरीक्षकस्थाने नियुक्त आसीत् । अतो लोकमान्यानामाङ्ग्लविद्यालयाभ्यासक्रममारभ्य पदवीपरीक्षान्तविद्यापीठशिक्षणं यावदध्ययनसुयोगः समुत्पन्नः । परम् अयं सुयोगो न निष्प्रत्यूहः । मातृवियोगदुःखं दशमे वत्सरे एव बाललोकमान्यैरसह्यत । परिसमाप्ते वयसः षोडशे वर्षे एते दैवदुर्विपाकात् पितृसुखवञ्चिता अभूवन् ।

आङ्ग्लविद्यालयाभ्यासकाले बाललोकमान्यानां गणितविषयस्य प्राथमिकाध्ययनं पूर्णतां गतम् । गीर्वाणवाण्यामप्येते सम्यग्रीत्या व्युत्पन्ना अभूवन् । कस्यापि साहाय्यं विना एते श्लोकार्थं सरसमजानन् ।

पुण्यपत्तनस्थाङ्ग्लविद्यालये बाललोकमान्यानां प्राथमिकशिक्षणावस्था-विषयकं कथाद्वयं विद्यार्थिजनेषु सुप्रसिद्धं वर्तते । एकस्यां कथायां बालस्यास्य सत्यप्रियत्ता तथैव दण्डदर्शनेऽपि अविचलितधैर्यवृत्तिर्दश्येते । एकदा शालागृहे बाललोकमान्यानां वर्गे शिशुजनपरमप्रियाणां मराठीभाषायां 'भुईमुगा'ख्यानां बीजानि भक्षयित्वा तेषां कवचानि इतस्ततो विकीर्णा-न्यासन् । अध्यापकः सर्वत्र प्रसृतानि तानि कवचानि वीक्ष्य दण्डहस्तः कोपस्फुरिताधरस्तारस्वरेण छात्रानपृच्छत् केनेदं कृतमिति । भयाकुलतरल-तारकेषु विद्यार्थिजनेषु न कश्चिदपि वक्तुमधृष्णोत् । प्रस्तावानुसारं बाल-लोकमान्यानामुपरि तस्याः अपक्रियायाः आरोपः कृत आसीत् । तं मिथ्या-ऽऽरोपमसहमाना बाललोकमान्या महताऽऽवेगेन शालागृहान्निर्गत्य गृहं गता इति श्रूयते । अनेन प्रकारेण लोकमान्यैरात्मनः शिक्षकस्यैवंविधो मिथ्याऽऽरोपो बाल्ये अपि निषिद्धः ।

अपरः प्रसङ्गस्तु एवंविधः । अथैकदा शुद्धलेखनवेलायामध्यापकेन कथिते कस्मिंश्चिन्मराठीभाषापरिच्छेदे 'सन्त' इति शब्दस्त्रिवारं लेखनार्थमनुवृत्तः । तदा लोकमान्यैरयं शब्दो 'मराठी'भाषायां 'सन्त, संत, सन्‌त' इति प्रकारत्रयेण लिखितः । लेखनपरीक्षणसमये 'संत' इत्येकमेव रूपं शिक्षकेण शुद्धमिति स्वीकृतम् । अन्यौ द्वौ प्रकारौ अशुद्धौ इति निर्णयो दत्तः । तमन्यायमसहमाना बाललोकमान्या. सत्यान्वेषणाय मुख्याध्यापकमुपगम्य पृष्टवन्तः 'किम् अशुद्धं वर्तते अस्मिन् मम लिपि-न्यासे' इति । मुख्याध्यापकेन बाललोकमान्यान् समाधाय त्रयोऽपि लेखन-प्रकाराः समीचीना इति निर्णीतम् । इत्थं बाललोकमान्यानां सत्यप्रियत्वं धैर्यवृत्तित्वं स्वतन्त्रप्रज्ञत्वं च शैशवे एव दृश्यन्ते । वर्गबन्धुषु प्रथमक्रमाङ्कः कदाप्येतैर्न लब्धः । तथापि सर्वेषु छात्रेषु एतेषां किमपि वैशिष्ट्यं प्रकर्षेणा-लोच्यते । गणितविषयपरीक्षायां कठिनप्रश्नानामेवोत्तरप्राप्तये लोकमान्या अयतन्तेति श्रूयते ।

## ४ विवाहः

आङ्ग्लविद्यालये अधीयाना लोकमान्यास्तदानीन्तनीं जनरूढिमनुसृत्य वयसः पञ्चदशवत्सरे एव विवाहशृङ्खलाबद्धा अभूवन्निति साम्प्रतमाश्चर्यावहं भवेत्। परं वर्षशतात् प्राक् सामान्येन षोडशवर्षानन्तरं बालानाम्, अष्टमे वा नवमे वा वर्षे बालिकानां विवाहः करणीय इति जनरूढिरासीत्। तदानींतनेषु राजकारणधुरीणेषु वा समाजकारणाग्रणीषु वा विशेषेणैको गुणो दृश्यते, यत् सर्वैरात्मनोऽध्ययनम् आर्थिकपरिस्थित्यनुसारतः परिसमापितम्। एतेषामेतादृशो दृढनिश्चयोऽधुनातनैः प्रथमे वयसि वर्तमानैरादरणीयः, विवाहविषयं परित्यज्य अन्यकार्येषु अनुकरणीयश्च।

'बाळ' इत्युपनामके कस्मिंश्चित्सुकुले समुत्पन्ना 'तापी' नाम्नी कन्या ब्राह्मेण विधिना लोकमान्यैः परिणीता। द्विभुजोऽयं बालः कोमले वयस्येव चतुर्भुजो जातः। इयं तापी कस्यापि सन्तापायाभवदिति न केनापि चरित्रकारेणोल्लिखितम्। विवाहसमये नामकरणविधिना इयं 'सत्यभामा' इत्याख्यां जगाम। तथापि इयं लोकमान्यपत्नी अधुना 'सत्यभामा'वत् प्रकृत्या कोपना–मानिनी–आसीदिति न केनापि वर्णितम्। स्वाध्यायकाले गृहीतोऽयं चतुर्भुजत्वपाठो लोकमान्यैः स्वपराक्रमकालेऽपि अर्थान्तरेण (कारावासेन) त्रिवारमभ्यस्त इति तेषां चरित्रतो ज्ञायते।

'कन्याराशिस्थितो नित्यं जामाता दशमो ग्रहः॥' इति लोकप्रसिद्धं विनोदवचनम्। एतादृशो जामाता नैकप्रकारेण धर्मपत्नीं सन्त्रास्य तस्याः मार्गेण वारं वारं श्वशुरधनमधिगच्छति। परं कियताऽपि धनेन न स सन्तोषमेति। लोकमान्यानामाचारे तु विपरीतमेतत् दृश्यते। पुरातनकाले जनरूढिमनुसृत्य आषाढे मासे बहूनि क्रीडनकानि, तत्सदृशान्यक्रीडासाधनानि जामात्रे प्रसादीकृतान्यासन्। अस्मिन् प्रसङ्गे लोकमान्यानामाग्रहस्तु 'एतत् सर्वं माऽस्तु। तन्मूल्यानि पुस्तकान्येव प्रदेयानि' इति।

ख्रिस्ताब्दस्य १८७२ संवत्सरे लोकमान्या मुम्बापुरीविद्यापीठस्य शालान्तपरीक्षायामुत्तीर्णा अभूवन्। तदानीं तस्याः शालान्तपरीक्षायाः नाम 'मॅट्रिक्युलेशन्' इत्यासीत्। अस्यां परीक्षायां पूर्वोक्तपद्धतिमनुसृत्य गणितविषयप्रश्नपत्रिकायाः कठिनप्रश्नेष्वेव एते सयत्ना आसन्। तथैव

उत्तीर्णताविषयावश्यकीं गुणसंख्यामुत्तरपत्रिकायां निश्चित्य नियतकालात् प्रागेव परीक्षामण्डपादेते निर्गता इत्यपि किंवदन्ती श्रूयते।

## ५ महाविद्यालयशिक्षणम्

सप्तदशे हायने 'डेक्कन कॉलेज' नामकं महाविद्यालयमध्ययनार्थं प्रविश्य लोकमान्यैश्छात्रालयनिवासः स्वीकृतः। आङ्ग्लविद्यालये याऽभ्याससरणिरेतैरङ्गीकृता सैव महाविद्यालये। लोकमान्यैरध्ययनार्थं रात्रौ जागरणं न कदापि कृतम्, न वा पाठ्यविषयाणां टिप्पण्यो विस्तरेणाभ्यस्ताः। तथाप्येभिः स्वचित्तं न लक्ष्याद्दूरीकृतम्। महाविद्यालयजीवनमेभिः कदाचिद्वयस्यैः सह विविधविषयमधिकृत्य विवादेन, कदाचिद्विनोदप्रचुरसंलापेन, कदाचिदेकचित्तीभूय पाठ्यविषयावलोकनेन यापितम्।

## ६ बलवर्धनम्

महाविद्यालयजीवने प्रथमं वर्षं विशेषेणोल्लेखनीयम्।

'शरीरमाद्यं खलु धर्मसाधनम्' इति कालिदासवचनमनुसृत्य निजशरीरं च कृशमवलोक्य, कस्यापि कार्यस्य हेतोः इदमसमर्थमिति परिज्ञाय, लोकमान्यैरस्मिन् संवत्सरे विविधप्रकारैर्व्यायामं कृत्वा प्रभूतं शरीरसामर्थ्यं सम्पादितमिति महदाश्चर्यम्। इदमेव शरीरबलं भविष्यत्काले लोकमान्यानां महते उपकारायाभूत्, येन आयत्यामापतिता घोरतराः कष्टप्रदाश्च विपत्तयस्तैः पश्चिमे वयस्यपि प्रशान्तमनसा सोढाः। जलसन्तरणमेतेषामतीव प्रमोदायाभवत्। 'वाराणसी'क्षेत्रे परमपवित्रभागीरथ्या विस्तीर्णप्रवाहो लोकमान्यैः सुखेनोत्तीर्ण इति बहुभिर्जनैः कथ्यते।

## ७ चापलानि

बलसंवर्धनानन्तरं महाविद्यालये लोकमान्यैः कृतो बहुप्रकारकल्लासः अवसरप्राप्तो वर्णितो दृश्यते। सामर्थ्यसम्पादनाय 'रामबाण'रसायनसेवनसक्तानां छात्राणां रसायनकाचपात्राणां वातायनेभ्यो बहिः प्रक्षेपणम्, छात्रालयभित्तीः आरुह्य, गवाक्षद्वाराण्युद्घाट्य, अन्तः प्रवेशनमित्यादिप्रकारैर्लोकमान्यैश्छात्रसुलभमात्मनश्चापलं क्रीडापेशलत्वं च प्रदर्शितम्।

कश्चित् कुमारो ग्रीष्मसमये नक्तमात्मनः शय्यायां पुष्पाणि विकीर्य स्वपिति। तदवलोक्य न केवलं तस्य पुष्पशय्या प्रत्यहं लोकमान्यैरुध्वस्ता

कृत्वा, अपि तु कुसुमसुकुमारगात्रयष्टिरयं युवा रात्रौ पुष्पशय्यामधिशेते इति छात्रगणेषु तस्य परिहासोऽपि कृतः। एतादृशेष्वापलैर्विद्यार्थिवसतिगृहे लोकमान्याः 'सैतान'पदोपालम्भं प्राप्ताः।

भोजनगृहेषु छात्राणां भोजनावसरे परस्पराप्तदुकूलपरिधानपद्धतिर्लोकमान्यैः परिरक्षिता। महाविद्यालये धूम्रपानमद्यप्राशनादिव्यसनान्यपि केषांचिच्छात्राणां रुचिमावहन्। परं तेभ्यः सर्वेभ्यो लोकमान्याः सुदूरमासन्। ईदृशानां विद्यार्थिजनानां संसर्गमपि ते निश्चयेन परिहरन्ति स्म।

## ८ अध्यापकवर्गः

लोकमान्यानामध्यापकवर्गे 'केरोनाना छत्रे' 'शूट' इति प्राध्यापकद्वयं छात्रगणप्रियमासीत् इति श्रूयते। गणित–ज्योतिषविद्यानिपुणाः 'छत्रे'-महोदयाः शास्त्रनैपुण्येन बुद्धिविभवेनोपप्राचार्यपदं प्राप्ताः। वस्त्रप्रावरणेषु भारतीयजनसाधारणवस्त्रप्रावरणेन, छात्रगणमध्ये अनुत्सेकेन, पृथग्जनेषु ऋजुस्वभावेन छत्रेमहाशया विद्यार्थिजनैष्वादरणीया अभूवन्। यस्य यस्य विद्यार्थिनः गणितादिविषयेषु शङ्कास्थानमासीत् स स छात्रः कस्मिन्नपि काले तेषां सकाशं गत्वा आत्मनः शङ्कानां समाधानं प्राप्नोत्। दारिद्र्यदुःखपीडितछात्रजनेभ्यश्छत्रेमहोदया न केवलं भोजनाच्छादनादिकं प्रायच्छन्, अपि तु सुयोग्येभ्यश्छात्रेभ्यो यथावसरं यथाशक्ति महाविद्यालयशिक्षणशुल्कमप्यददुः। राज्याधिकारिणोऽपि छत्रेमहोदयानां निधनानन्तरं तेषां धर्मपत्न्यै जीवनार्थं शतरूप्यकमितं सेवाधनं समभन्यन्त।

'शूट'नामकाः प्राध्यापका अर्थशास्त्रनीतिशास्त्रेतिहासादिविषयेषु पण्डिता आसन्, चिकित्सकपद्धत्या च छात्रेषु स्वविषयान् व्यतरन्। शिष्यप्रिया अप्येते छत्रेमहोदयवत् विद्यार्थिभ्यो न सुलभतया प्रापणीया आसन्।

प्राधान्येन गणितविषयमभ्यस्य लोकमान्याः १८७६ संवत्सरे 'बी. ए.' परीक्षायां प्रथमश्रेण्यामुत्तीर्णाः। परं १८७७ वत्सरे तमेव विषयं गृहीत्वा 'एम्. ए.' परीक्षायां परीक्ष्यत्वेनोपस्थाय न तथोत्तीर्णतां प्राप्नुवन्। अनन्तरं १८७९ संवत्सरे विधिव्यवहारशास्त्राण्यभ्यस्य एते 'एल्एल्. बी.' परीक्षायामुत्तीर्णा अभूवन्।

'डेक्कन कॉलेज'नाम्नि महाविद्यालये तदानीनने प्राध्यापकवर्गे एतानि कानिचिन्नामानि दृश्यन्ते "केरोनाना छत्रे–अनंतशास्त्री पेंडरकर–

चिन्तामणिशास्त्री थत्ते – पीटर्सन् – किल्हॉर्न् – वर्ड्सवर्थ – ऑक्झेनहॅम् – चेस्ट – वॅटी – शूट् – लर्केन् – एटकेन्’ इति ।

## ९ सहाध्यायिनः

लोकमान्यसमकालीना बहवश्छात्रा अध्ययनसमाप्तेरनन्तरं सामान्यजनवत् प्रभूतं धनं सम्पाद्य तदानींतनलोकाचारेणात्मनो वराकोदरपूरणं कृत्वा जीवनं यापितवन्तः । परं लोकमान्यानामेतदेव वैशिष्ट्यं यदध्ययनकाले आचार्येभ्यः सम्प्राप्तं विद्याधनं तैः स्वजनेषु राष्ट्रहितदृष्ट्यैव वितीर्णम् । के न यतन्ते स्वजनाभ्युदयसम्पादनाय ? परम् आत्मनो बुद्धिवैभवं शरीरबलं च अहर्निशं ये लोककल्याणायोपयुञ्जते त एव लोके अनन्यसाधारणयशोभागिनो भवन्ति जनानामन्तःकरणेषु प्रतिष्ठां लभन्ते च । उक्तं च ।

‘एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये ।
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ॥’ इत्यादि ।

न किमप्येते लोकेभ्यो लब्धुमिच्छन्ति । उक्तं च

‘सन्तः परार्थं कुर्वाणा नापेक्षन्ते प्रतिक्रियाम्’ इति ।

लोकमान्यसमकालीनानां विद्यार्थिनां कानिचिन्नामानि ‘केळकर’-कृतटिळकचरित्रे निर्दिष्टान्युपलभ्यन्ते । तथा हि । “आप्पासाहेब शारङ्गपाणी – दाजीसाहेब खरे – ओकशास्त्री – श्रीधर बाळकृष्ण उपासनी – लक्ष्मण मोरेश्वर देशपांडे – मनोहरपंत काथवटे – महादेव भास्कर चौबळ – दादासाहेब खापर्डे – नारायणराव चंदावरकर – आर्. डी. सेटना – गोपाळराव आगरकर – वामनराव आपटे” इति ।

एतेषु सर्वेषु पण्डितेषु केचन वरिष्ठन्यायालये न्यायदानरता न्यायाधीशाः, केचन ख्यातनामानः श्रुतिस्मृतिप्रणीतन्यायव्यवहारादिशास्त्रकुशलाः, केचन राजाश्रयलालितेषु महाविद्यालयेषु लब्धकीर्तयः प्राध्यापका अभूवन् ।

राजश्रिया विराजन्ते सर्वेऽप्येते विपश्चितः ।
राजश्रियाऽवमन्यन्ते लोकमान्यास्तु केवलाः ॥ १ ॥
लोकोत्तरत्वमेतेषां सर्वकार्येषु दृश्यते ।
अतस्ते लोकमान्येति नामधेयेन विश्रुताः ॥ २ ॥

# २ अध्यापनपर्व

## १ जीवनपार्श्वभूमिः

खिस्ताब्दस्य १८१८ संवत्सरे छत्रपतिशिवरायप्रतिष्ठापितं महाराष्ट्र-राज्यं विलयं गतम् । छत्रपतेर्मुख्यामात्यो 'बाजीराव' नामा पुण्य-पत्तनं परित्यज्य ब्रह्मावर्तं जगाम । विनष्टेऽपि स्वातन्त्र्ये जना दुःखिता अभूवन्निति तु न दृश्यते, यतः स्वराज्येऽपि जनानामेतादृशी पीडा सञ्जाता । छत्रपतीनां राजधानी 'सातारा' नामकं नगरम् । तच्छत्रपति-पदमपि कालान्तरेण विनष्टम् । नर्मदानद्याः उत्तरस्यां दिशि 'शिंदे–होळकर–भोसले–गायकवाड'–प्रभृतीनां सामन्तानां संस्थानान्यासन् । तेषां केचन अधिपतयस्तत्कारणं समुत्पाद्य दूरीकृताः । अन्येऽप्रहारधरा ऐश्वर्य-मदमत्ताः । आङ्ग्लदेशादागतानामधिकारिणां प्रभुत्वं प्रथमं सुखदं जातम् । परं गच्छता कालेन सर्वेषामग्रहारधराणां धनोत्पादनसाधनीभूतानि क्षेत्राणि केनापि कारणेन शासनसंस्थयाऽपहृतानि ।

ब्राह्मणसमाजे द्वौ वर्गौ । एकः पुरोहितानाम् । अपरो लेखनिका-नाम् । पुरोहितवर्गप्रभुत्वं शनैः शनैः क्षीणं जातम् । 'ब्राह्मणा भोजनप्रियाः' इति कैश्चन ते निन्द्यन्ते । परं तैरेव रक्षितानि वेदशास्त्राणि । कालान्तरेण ते अकिंचित्करा जाताः । लेखनिकानां स्थितिस्तु नापकृष्टा । तैराङ्ग्लभाषा-मभ्यस्य राजसेवा स्वीकृता । शासनसंस्थाया राज्यभारं वोढुमाङ्ग्ला-धिकारिभिः सेवकवर्गोऽपेक्ष्यते । यथाकालं प्राप्ताधिकारमदेन स लेखनिक-वर्गोऽपि उन्मत्तोऽभूत् ।

पाश्चात्यपद्धत्या ज्ञानदानमाङ्ग्लाधिकारिभिर्हेतुत्रयेण समारब्धम् । प्रथमोद्देशो राज्यभारं वोढुं कार्यक्षमभृत्यवर्गसम्पादनम् । द्वितीयो भारत-वासिनः परावलम्बिनः कृत्वाऽऽत्मनो वाणिज्यव्यवहारप्रतिष्ठापनम् । तृतीयो हेतुर्भारतीयानां स्विस्तधर्मरत्युत्पादनम् । राज्यानि न केनापि मोक्षार्थं सम्पादितानि । यथा बौद्धा माहम्मदाश्च स्वस्वधर्मप्रसारार्थं प्रायतन्त

तथा आङ्ग्ला अपि खिस्तधर्मं प्रसारयितुं प्रवृत्ताः । केवलं भारतीया एव वैदिकधर्मं न प्रसारयन्ति । खिस्तधर्मप्रसारकाणां दीर्घोद्योगगुणः सर्वैः सर्वथा ग्राह्य एव । वैदिकधर्मं ते सदैव निन्दन्ति । खिस्तधर्मप्रचारककृत-पूर्वपक्षाणां खण्डने वावदूकपण्डिता एव समर्थाः । एतत्कार्यं महाराष्ट्रदेशे 'विष्णुबोवा ब्रह्मचारी'नामकेनैकेन हिन्दुधर्मप्रचारकेण सम्यक् कृतम् । अनेन नूतनेनाङ्ग्लविद्यायाः प्रसारेण, तथैव खिस्तधर्मप्रचारकाणां समुत्साहवता उद्यमेन वैदिकधर्महानिस्तावती न संवृत्ता । परं तु आङ्ग्लानां राज्यं बद्धमूलमभवत् ।

ग्रन्थमुद्रणकलाऽस्मिन्नेव काले भारतदेशे प्रचलिता । अतो दुर्लभानि पुस्तकानि सुलभान्यासन् । पुरातनकाले भिक्षुकगणेभ्यो दक्षिणारूपेण दीयमानं धनं ज्ञानदाने विनियोजितम् । अनेन दक्षिणाद्रव्येण पुण्यपत्तने संस्कृतपाठशाला स्थापिता । तस्यां धर्मशास्त्रादिविषयैः सार्धमाङ्ग्लभाषाऽध्यापिता । शासनसंस्थया शिक्षणशाला पृथङ्निर्मिता । १८४२ वत्सरे आङ्ग्लभाषाविद्यालयः उद्घाटितः । १८५६ वर्षे विधिमण्डले प्रस्तावं कृत्वा १८५७ संवत्सरे मुम्बईविद्यापीठं प्रतिष्ठापितम् । १८६८ हायने पुण्यपत्तने 'डेकन कॉलेज'नाम्नो महाविद्यालयस्य स्थापना कृता । सर्वे प्राध्यापका आङ्ग्लदेशीयाः । तेषां सहायकाः संस्कृतभाषापण्डिताः । तैर्मराठीभाषायां संस्कृतग्रन्थानां भाषान्तरं करणीयम् । यथा यथाऽऽङ्ग्लभाषाऽभ्यासो वृद्धिं गतस्तथा तथा संस्कृतभाषाभ्यासस्य ह्रास एवाभवत् । 'मराठी'भाषाध्ययनस्य नामापि न श्रुतम् । मुम्बईविद्यापीठप्रतिष्ठापनानन्तरं सर्वे परीक्षाधिकारा विद्यापीठहस्ते समर्पिताः । आङ्ग्लभाषामभ्यस्य परीक्षेच्छुकानां संख्या प्रतिवत्सरं प्रवृद्धा । १८७६ संवत्सरे लोकमान्यैः 'बी. ए.' पदवीपरीक्षा प्रथमश्रेण्यामुत्तीर्णा इति तु पूर्वं निवेदितमेव ।

द्विजेतरेषु अशिक्षितानां प्रतिशतं प्रमाणं द्विजेभ्योऽतीव अल्पमवर्तत । तेषामग्रेसराः 'जोतीराव फुले' महाशयाः । एतेषामुपनाम 'गोरे' इति । तेषां पूर्वजानां जीविकाव्यवसायः पुष्पविक्रयणम् । पुण्यपत्तने मुख्यप्रधानानां 'पेशवे'इत्युपपदधारिणां प्रासादे देवपूजनार्थं पुष्पाणि गोरेमहाशयैर्दीयन्त । तस्मादेते 'फुले'इत्युपाख्यां जग्मुः । फुलेमहाशयैराङ्ग्लभाषायाः स्वल्पं ज्ञानं सम्पादितमासीत् । समाजकार्यार्थं एतेषां महान् प्रयत्नः ।

अस्मिन् काले राजकीयविषये जनानां मनसि न किमप्याकाङ्क्षा आसीत् । 'लॉर्ड लिटन्'महाशयानामधिकारकाले आङ्ग्लदेशराज्ञ्या भारतस्य सम्राज्ञीपदं स्वीकृतम् । तदर्थे 'दिल्ली'नगरे महता विभवेनोत्सवः कृतः ।

१९०१ संवत्सरे 'विष्णुशास्त्री चिपळुणकर'महाशयानां पुण्यतिथिदिने लोकमान्यैरेवं व्याख्यातम् '१८३७ वत्सरादारभ्य १८७४ वर्षे यावत् त्रयः कालखण्डा भवन्ति । प्रथमो 'गोपाळ हरी देशमुख'प्रभृतीनाम् । द्वितीयो 'रानडे-कुंटे' इत्यादीनाम् । तृतीयः 'चिपळुणकर' महोदयानाम् । आद्ये खण्डे विद्यमानानां जनानां विद्वत्त्वं, नीतिमत्त्वं, पापभीरुत्वं, सदाचारः, धर्मनिष्ठा इत्यादिगुणकलापः आदर्शभूत आसीत् । द्वितीये कालखण्डे सर्वमेतज्जनैराङ्ग्लभाषाशिक्षणेन परित्यक्तम् । गच्छता कालेन लोकैरेतत् सम्यगीत्या परिज्ञातं, यदेतादृशं धार्मिकं वा सामाजिकं वा परिवर्तनं राष्ट्रकार्यस्य पदं स्वल्पांशेनाप्यग्रतो न नेष्यति ।

अनेनैव समयेन १८७६-७७ 'वासुदेव बळवंत फडके'महोदयानां स्वातन्त्र्यसम्पादनार्थमान्दोलनं जातम् । लोकमान्यानां कश्चिद्बान्धवस्तस्मिन्नान्दोलने आसीदिति श्रूयते । यद्येतन्नानृतं तर्हि असोत्थानस्य काश्चित्कथा लोकमान्यानां श्रुतिपथमागताः स्युः ।

तृतीयः खण्डः चिपळुणकरशास्त्रिणाम् । तैः प्रथमं राजसेवा स्वीकृता । परम् अल्पेनैव कालेन जनसेवार्थं सा पटान्तलग्नतृणवत्परित्यक्ता । 'टिळक -आगरकर, महाशयैः शिक्षणसमाप्तिसमकालमेव लोकसेवाव्रतमङ्गीकृतम् ।

पूर्वखण्डद्वये 'डॉ. भाऊ दाजी लाड - महादेवशास्त्री कोल्हटकर - लोकहितवादी देशमुख - नूलकर - मंडलीक' प्रभृतयः सर्वे लोकधुरीणा यथावसरं यथाशक्ति समाजसेवामकुर्वन् । एतेषु सर्वेषु लोकमान्येभ्यः पूर्वं 'माधव गोविंद रानडे'महाशया आत्मनो वैदुष्येण, स्वदेशप्रीत्या, राजनीतिज्ञानेन च प्रायोऽखिलभारतदेशे लोकधुरीणानां गुरुस्थाने अवर्तन्त । रानडेमहाशयानां मृत्युलेखे लोकमान्यैः केसरिपत्रे लिखितम् 'असामान्यबुद्धिमत्त्वम्, अमोघकल्पकत्वं, विद्याव्यसनं, दीर्घोद्योगो, देशकल्याणबुद्धिरित्यादिगुणरत्नानां रानडेमहाशया यद्यपि रत्नाकरस्तथापि एतदेव तेषां वैशिष्ट्यं यद्विनष्टे पराक्रमे मृतप्रायो महाराष्ट्रदेशः पुनरपि चैतन्यं कथं

लभेतेति विचिन्त्य तद्दुष्करं कार्यं स्वयमङ्गीकृत्य तत्सिद्धये नक्तंदिवं यदि कोऽपि पुरुषः परिश्रान्तस्तर्हि स रानडेमहाशय इति । एतत्सर्वं तैर्नृपसेवायामेव सम्पादितम् । वक्तृत्वसमारम्भः – वसन्तव्याख्यानमाला – औद्योगिकपरिषद् – प्रदर्शनम् – 'फीमेल हायस्कूल' नामिका कन्यापाठशाला – प्रार्थनासमाजः – ग्रन्थालयः – सार्वजनिकसभा – इत्यादिसंस्थासु रानडेमहाशयाः प्रामुख्येन कार्यमकुर्वन् ।

अस्मिन् काले 'सार्वजनिकसभा' नाम्नी सभा महद्भिः सुप्रतिष्ठिताऽऽसीत् । अन्येष्वपि प्रदेशेषु अस्याः नामधेयं 'गणेश वासुदेव जोशी-' महाशयैरात्मनः प्रयत्नेन ख्यातिं नीतम् । 'सार्वजनिककाका' इति लोकप्रियाभिधानेनैव एतेषां विविधकार्यव्याप्टतता संसूच्यते ।

लोकमान्यानां पूर्वकाले महाराष्ट्रदेशे काश्चित् सार्वजनिकसंस्था आसन् । विशेषकार्याभावे ताः समुल्लेखमपि नार्हन्ति । परं समाजजीवने पदं निहितवत्सु लोकमान्येषु समस्तकार्यरूपं सपद्येव नवचैतन्ययुक्तं सञ्जातम् । कथमेतत् सम्भूतमिति अग्रे क्रमशः स्फुटीभविष्यति ।

## २ नूतनाङ्ग्लविद्यालयः

( २-१-१८८० )

महाविद्यालये अध्ययनं कुर्वाणा लोकमान्या आत्मनः सवयोभिः परममित्रैः आगरकरमहाशयैः सह नैकवारं स्वजीवनविषयिकां चर्चामकुर्वन् । राजकीय–सामाजिक–शैक्षणिकादयो बहवो विषयास्तैश्चर्चिताः । आगरकरमहोदया एवं प्रतिपादयन्ति "प्रथमं तावदात्मनो गृहं विशुद्धं करणीयम् । बहुदोषग्रस्ता वयम् । समुदायशक्तिः रूढिः । परम्परया प्राप्ता रूढयोऽस्माकं समाजे । परं तासु बहवो दोषाः समुत्पन्नाः । लोकाचारेषु विद्यमानानि मूलतत्त्वानि विस्मृत्य विभवप्रदर्शनादिप्रकारा एव परम्परया विरूढाः । विचार्यन्तां तावत् प्रथमम् उपनयनविवाहगर्भाधानादिसंस्काराः । उपनयनविधौ संस्कार्यो बटुः गायत्र्युपदेशार्थम्, अध्ययनार्थं च गुरोः सकाशं नेतव्य इति व्यावहारिकं रमणीयं च मूलप्रयोजनं प्रतिभाति । परं पश्यन्तु भवन्तः कति जना एतत् सम्यग्रीत्या प्रतिपालयन्तीति । एतादृशे संस्कारसमये उत्सवप्रिया जनाः स्वधनव्ययेन केवलं विभवप्रदर्शनमेव

कुर्वन्ति । एतेषु संस्कारेषु विद्यमानाः काश्चिद् रूढयोऽतीव रुचिहीना असमञ्जसाश्च । प्रथमं ताः परित्याज्याः । लोकाचारार्थं जना अकारणं धनव्ययं कृत्वा अधमर्णा भवन्ति । कथमेतद्भवद्भ्यो रोचते । मङ्गलकार्येषु एतद्वर्तते । अमङ्गलप्रसङ्गरूढयस्तु विचारमपि नार्हन्ति । अस्योदाहरणं दातुमपि मनसि सङ्कोचः समुत्पद्यते । चिन्त्यतां तावत् विधवानां कष्टतमो दुःखकरो मानहानिकरश्च पुरुषहस्तेन केशवपनप्रसङ्गः । केवला स्मृतिरेवास्य प्रसङ्गस्य मनसि व्यथां जनयति । किं पुनर्विचारः । ईदृश्यो रूढयः कालातिपातं न सहन्ते । अविलम्बेन ता विलयं नेतव्याः । ता यदि स्वयं न नश्येयुः नाशयितव्या एव ता अस्माभिः" इति ।

लोकमान्यानां विचारसरणिस्तु ईदृशी "एतत् सर्वमवश्यं करणीयम् । परं कथं कर्तव्यमित्येव प्रश्नः । अस्य प्रथमोपक्रमो लोकशिक्षणम् । तत्तु द्विप्रकारकम् । बालशिक्षणं प्रौढशिक्षणं च । शिक्षणप्रसारार्थं राजाश्रयोऽत्यावश्यकः । स यदाऽपेक्ष्यते तदा शासनसंस्थास्वधिकारलाभ आवश्यकः । अधिकारलाभार्थं शासनसंस्थया सह चर्चा, विवादः क्वचिद्विरोधोऽपि अवश्यं सम्भवेत् । तस्याभावे समाजस्थितिः प्रगतिपथं न गच्छेत् । अतः समाजकारणतो राजकारणमग्रस्थानमर्हति । तस्माल्लोकशिक्षणोपक्रमोऽग्रिमं स्थानं भजते । शिक्षणेनैव लोका विचारप्रवणा भविष्यन्ति । ततस्ते आत्मनो हिताहितं जानीयुः" इति । एवमादयो लोकमान्यानां विचारा विवादाश्च वयस्यैः सह सञ्जाताः । अध्ययनसमाप्तिकाले एव आगरकर-टिळकमहोदयाभ्यामात्मनो जीवितकार्यं निर्धारितमिति दृश्यते । तज्जीवितकार्यं जनसेवा इति । तस्याः मार्गो लोकशिक्षणम् । तत्तु द्विप्रकारकमित्युक्तपूर्वम् ।

अस्मिन् समये अन्यस्याप्येकस्य पुरुषस्य मनस्येवंविधा विचाराः प्रादुर्भूताः । स पुरुषः ख्यातनामा 'विष्णुशास्त्री चिपळूणकर' महाशयः । प्रथममेते शासनसंस्थाया विद्यालये अध्यापका आसन् । स्वतन्त्रप्रज्ञया विमृशन्त एते शास्त्रिमहाशयाः शालापत्रकनाम्नि मासिकपुस्तके शिक्षणविषये स्वविचारान् प्रदर्शयन्ति स्म । तेऽलिखन् "साम्प्रतं ज्ञानप्रसारो बहुलो दृश्यते । परं भ्रम एव सः । राजसेवालोभेनैव जना विद्यार्जनं

कुर्वन्ति । न ज्ञानलालसया । देशाभिमानो विद्यारुचिर्दुर्जनतिरस्कार इत्यादयो गुणा न तेषा भूषणानि । यत्राध्यापका स्वयमेव शिक्षणकार्यस्य महत्त्व न जानन्ति तत्रान्येषा का कथा। अगतिक पुरुषोऽध्यापको भवति । सैव मतिरन्येषाम् । पुरा छात्राणा मनसि गुरुभक्तिरासीत् । इदानीं सा न दृश्यते । गुरुशिष्यसम्बन्धोऽधुना स्वार्थमूलक । पाठ्य पुस्तकान्यपि पूर्वमेव नियुक्तानि । तेषु धर्मनीत्यादिविषयाणा लेशोऽपि न दृश्यते । एतत्सर्वमविलम्बेनावश्य परिवर्तनीयम्। देशकार्यक्षमाणा पुरुषाणा निर्माणे ज्ञानदातारोऽध्यापका एव कारणम् " इति । चिपळुणकरमहाशया यद्यपि 'शास्त्री' इति ख्यातिं गतास्तथापि ते आङ्ग्लविद्याविभूषिता 'बी ए' इति पदवीधरा आसन् । लेखनकर्मकुशलाश्चिपळुणकरशास्त्रिणो 'निबधमाला'नामकेन मासिकपुस्तकेन पूर्वमेव लब्धकीर्तयोऽभूवन् । तेषा मनस्येवमासीत् ' एक आङ्ग्लभाषाविद्यालय स्थापयितव्य " इति । तादृशी घोषणाऽपि वृत्तपत्रेष्वेभि कृता । आगरकर–टिळकमहाशययोर स्मिन् विषये पूर्वमेव निश्चयो जात । स निश्चय कारावासवर्णने आगरकरमहाशयैर्लिखितो दृश्यते । तस्मादुभावपि चिपळुणकरशास्त्रिणा दर्शनार्थं गतौ कथितवन्तौ च स्वमनोगतम् । तयोर्यूनोरनेन स्वमनोगत निवेदनेन हृष्टमानसा विष्णुशास्त्रिण प्रसन्नवदना सञ्जाता । अत शास्त्रिमहाशयै परमगहनस्य सेवाधर्मस्य परित्यागो निर्धारित अनुष्ठितश्च ।

खिस्ताब्दस्य १८८० सवत्सरे जानेवारीमासस्य प्रथमे दिवसे एप नूतन आङ्ग्लविद्यालय 'न्यू इग्लिश स्कूल' इतिनामधेयो महतोत्सवेनो द्घाटित । प्रथमे दिवसे चिपळुणकरशास्त्रिणो लोकमान्याश्चेति द्वावेव प्रधानपुरुषावास्ताम्। आगरकरमहाशया 'एम् ए' परीक्षायामनुत्तीर्णा । अतस्ते वत्सरानन्तर समागता । चिपळुणकरशास्त्रिमहाशयै प्रधानाध्या-पकपदमलङ्कृतम् । "माधवराव नामजोशी–वासुदेवशास्त्री खरे–नदर्गीकर शास्त्री–हरि कृष्ण दामले–कृष्णराव माडे–मुळे " प्रभृतयोऽन्येऽध्यापकवर्गे आसन् । प्रथमे दिवसे यद्यपि छात्राणामूनविंशतिरेव उपस्थिता तथापि सार्धशत नामानि प्रविष्टान्यासन् । अनुदिन वृद्धि गतैषा विद्यार्थिसख्या । मासत्रयादेव सा पञ्चशतावधिं गता ।

ग्रीष्मसमये षाण्मासिके अनध्यायकाले प्रधानाध्यापकैरात्मनो निवेदने एवमुद्घोषितम् " अस्माकं विद्यालये अध्यापका अथ विद्यार्थिनः स्वातन्त्र्यसुखमनुभवन्ति । रक्षापुरुष इव दण्डहस्तो मुख्याध्यापकः शिक्षणकार्यावलोकनार्थं गमनागमनं कुर्वाणो नात्र दृश्यते। शासनसंस्थानिरीक्षको निरीक्षणार्थं कदा आगमिष्यतीति भयमपि नात्र विद्यते । अध्यापका यन्त्रपुत्तलिका इवाध्यापनकार्यं न कुर्वन्ति, नापि मुख्याध्यापकभीत्या स्वाभिमानं दूरीकृत्य अजापुत्रवद्वर्तन्ते । परम्पराप्रसिद्धवेत्रदण्डोऽस्मिन् विद्यालये नावेक्ष्यते । तथा विद्यार्थिजनानां छात्रधर्मानुष्ठानातिक्रमणमप्यत्र न सह्यते नोपेक्ष्यते च । सर्वे छात्राः परिप्रश्नपद्धत्या ज्ञानमर्जयन्ति । अध्यापकाः कर्तव्यबुद्ध्या राष्ट्रहितदृष्ट्या च ज्ञानमुपदिशन्ति । भावनाप्रधानो हि छात्रगणः । तस्य बालभावसुलभं भाषणम् औद्धत्यमित्यस्माभिर्न गण्यते । तेषां संशोधनवृत्तयः स्वतन्त्रविचारप्रवाहाश्च विद्यार्थिधर्मनियमैर्यथा नोपरुध्यन्ते तथाऽस्माभिरत्र विशेषेण निरीक्ष्यते । छात्रानप्युचितशब्दैः काले काले मुख्याध्यापका उपदिशन्ति स्म " इति ।

प्रथमपञ्चवार्षिककालखण्डे एव एष नूतनो विद्यालयः प्रगतिपथमारूढवान् । विद्यार्थिनां संख्या सहस्रावधि गता । अध्यापकवर्गे बहवः शिक्षकाः प्रायेण मुम्बईविद्यापीठपदवीधराः । विद्यापीठस्य ' मॅट्रिक्युलेशन '-नामिकायां महाविद्यालयप्रवेशपरीक्षायां विद्यार्थिजनस्योत्तीर्णताप्रमाणं प्रतिशतं पञ्चसप्ततिपर्यन्तमासीत् । १८८४ वत्सरे एतत् प्रमाणं नवाधिकाशीतिः ( ८९ ) । अतो मुम्बईप्रदेशराजप्रतिनिधेः सचिवेन धन्यवादपत्रं प्रेषितम् । ' जगन्नाथ शंकरशेठ 'संस्कृतशिष्यवृत्तिरप्यस्मिन् कालखण्डे प्रतिवत्सरमस्यैव विद्यालयस्य छात्रैः सम्पादिता । प्राचार्याणां " वामन शिवराम आपटे " महाशयानां दीर्घोद्योगस्य सुमधुरमेतत् फलम् ।

गच्छता कालेन छात्रसंख्या परां पुष्टिमावहत् । विद्यार्थिजनानामासनक्रीडादिव्यवहाराय विद्यालयस्थानमपर्याप्तम् । अतो ' गद्रे वाडा-' नाम्नि सदने स्थलान्तरं कृतम् । निकटवर्ति ' होळकर 'नरेशसदनमप्यल्पेन कालेनोपलब्धम् । त्रिशताधिकसहस्रविद्यार्थिनां पठनपाठनं सुसुखं सोपकरणं भवेदेतादृशी सुस्थता साम्प्रतं स्थलान्तरेण लब्धा ।

विद्यालयोत्कर्षस्य तथा लोकसाहाय्यस्यादिकारणं प्रमुखसञ्चालकानां महती समाजप्रतिष्ठा। कारणचतुष्टयेन सा वृद्धिं गता दृश्यते। प्रथमं कारणं चिपळुणकर-टिळक-नामजोशी-आपटेप्रभृतीनां स्वार्थत्यागः। एतेष्वपि चिपळुणकर-टिळक-आगरकराणां स्वार्थत्यागः न कस्यापि स्वार्थत्यागस्य तुलामारोहति। प्रथमे संवत्सरे जीवनवेतनमपि टिळक-चिपळुणकराभ्यां न स्वीकृतम्। द्वितीयं कारणमेतेषां सहायकमण्डलम्। सर्वे सहायका विद्वांसोऽध्यापनकर्मकुशला ज्ञानदानं कर्तव्यबुद्ध्या सोल्लासं कुर्वन्ति। तृतीयं कारणं टिळक-आगरकरयोः 'कोल्हापुर'प्रकरणाभियोगो दण्डश्च। एतेन तौ लोके विशेषेण प्रसिद्धिं गतौ। चतुर्थं कारणमेभिः पुरस्कृतः 'केसरी-मराठा'वृत्तपत्रयोः प्रारम्भः।

विद्यालयकृतशिक्षणकार्यविषये स्वकीयानामभिप्राया न तथा मानार्हा यथा परकीयाणाम्। अतः प्राध्यापक' वर्ड्सवर्थ 'महाशयस्य तथा शासन-संस्थानियुक्तशिक्षणसमित्याः अध्यक्षस्य 'सर् वुइल्यम् हंटर 'महाशयस्याभिप्रायौ विशेषेणोल्लेखनीयौ। वर्ड्स्वर्थमहाशया लिखन्ति स्म 'विद्यालयेन सम्पादितं यशश्चित्तचमत्कारमावहति। आङ्ग्लभाषाज्ञानेन अपूर्वं सामर्थ्यं निष्पादितमिति दृश्यते। शिक्षितजनेन शासनसंस्थाश्रयं विना स्वावलम्बनेन श्रेष्ठं स्थानं सम्पादनीयमित्युदारा खलु भावना। अस्याः परिणामो भारतीयानामन्तःकरणेषु चिरंतनो भवेत्' इति। 'सर् वुइल्यम् हंटर 'महाशयो वक्ति स्म "राजाश्रयं विना अयं विद्यालयो महतीं प्रतिष्ठामलभत। न केवलं भरतखण्डे, अपि तु पाश्चात्त्यदेशेष्वपि नैकोऽपि विद्यालयोऽस्य तुलां समारोहति" इति।

चिपळुणकरशास्त्रिणामध्यापनानुभवस्य लाभो विद्यालयेन वर्षद्वयमेव लब्धः। खिस्ताब्दस्य १८८२ वत्सरे मार्चमासस्य सप्तदशेऽहनि चिपळुणकरमहाशया अपस्मादेव दिवं गताः। जीवत्स्वेव तेषु 'आपटे-' महाशया अधिकारस्थानमलभन्त। नियमप्रियास्ते अध्यापनकर्मणि बहुकुशलाः। लोकमान्याः स्वविषये पण्डिताः अध्यापने च निपुणाः। तथापि शिक्षणविषयकान्यकार्येषु न ते दत्तचित्ताः। छात्राणामुत्तरपत्रिकाः विनाविलम्बं न तैः परीक्ष्यन्ते। गणितविषयाध्यापनकाले लेखनफलकं प्रति

कदाऽपि ते न गच्छन्ति । कठिनान्यपि उदाहरणानि स्मरणशक्तिबलान्मुखेनैव ते विधृण्वन्ति ।

एवंप्रकारेण लोकमान्यैरात्मनो जीवनकार्यं महत्तोत्साहेन समारब्धम् ।

## ३ वृत्तपत्रद्वयम्

### ' केसरी–मराठा '

बालानामज्ञानं यथा विद्यालये शिक्षणेन विनाश्यते तथा प्रौढानामपि वृत्तपत्रद्वारा ज्ञानदानेन इति साम्प्रतं सर्वेषामनुभवः । स एवानुभवो लोकमान्यसमकालीनानां जनानाम् । अतो ' न्यू इंग्लिश स्कूल 'नामक-विद्यालयसंस्थापका मनस्येवमकुर्वन् यल्लोकशिक्षणाय वयं वृत्तपत्रं समारभे-महीति । ' विष्णुशास्त्री चिपळुणकर 'महाशयैः ' निबन्धमाला ' इति मासिकपुस्तकमादावेव सम्पादितम् । लेखनकर्मणि ते प्रसरटीकाकाराः । आगरकरमहाशयानामपि लेखनाभ्यासे रतिरासीत् । ' आपटे'महाशया ग्रन्थनिर्माणे समुत्सुकाः । केवलं लोकमान्या न तथा समुत्सुकाः । ते वदन्ति स्म, को नाम लेखनीं गृहीत्वा स्वहस्तेन लिखेत् ! परं तेषामप्ययं मार्गो नासम्मतः ।

अथैकस्मिन् दिवसे आपटेमहाशयगृहे भोजननिमित्तेनैकत्र मिलित्वा बहुकालं विमृश्य तैः सर्वैस्तथा निश्चितं, यथा १८८१ संवत्सरे जानेवारी-मासस्य द्वितीये दिवसे ' केसरी '–' मराठा ' इत्यभिधानेन साप्ताहिकं वृत्तपत्रद्वयमस्माभिः सम्पादयितव्यम्—केसरिपत्रं 'मराठी'भाषायां 'मराठा'-वृत्तपत्रमाङ्ग्लभाषायामिति ।

अथ वृत्तपत्रमुद्रणार्थं मुद्रणालयः आवश्यकः । तस्यापि व्यवस्थितिः कर्तव्या । कस्यचित् ' साठे 'नामकस्य पुराणं मुद्रणयन्त्रं क्रेतव्यमिति विचारः । मुद्रणयन्त्रमूल्यं भागशः शनैः शनैर्देयमिति निर्धारितम् । एतदर्थको लेखोऽपि कृतः । अस्मिन्नेव सन्दर्भे लोकमान्याः कचित् परिहासपूर्वं साभिमानं वदन्ति ' अहं मुद्रणयन्त्रं तथा अक्षरटङ्कपेटिका अनेन स्कन्धे-नावहम्'मिति । एवमाङ्ग्लविद्यालयसमीपमेव तस्यायं महाप्रतापवान् कनी-यान् भ्राता ' आर्यभूषणनामा ' सुप्रतिष्ठितः । अस्मिन् मुद्रणालये मुद्रिते ' निबन्धमालायाः ' प्रथमे क्रमाङ्के केसरिपत्रस्योद्दिष्टं प्रकटीभूतम् । तस्य

पत्रकस्याधस्तात् ' चिपळुणकर–टिळक-आगरकरादीनां ' नामानि दृश्यन्ते। वाङ्मयविषये चिपळुणकरशास्त्रिणः, धर्मशास्त्रराजनीतिप्रश्नेषु लोकमान्याः, अर्थशास्त्रेतिहासशाखायां आगरकरमहाशया अलिखन्। प्रथमानि षड्वर्षाणि आगरकरमहाशयैः केसरिपत्रं सम्पादितम्। अनन्तरं लोकमान्यैः।

' मराठा 'वृत्तपत्रस्य प्रथमक्रमाङ्कः आङ्ग्लभाषायां १८८१ वत्सरे जानेवारीमासस्य द्वितीये दिवसे प्रसिद्धिं गतः। तस्मिन् काले प्रमुख-सम्पादकस्य नामलेखनविषये नियमो नासीत्। उद्देशपत्रिकायां पूर्वोण्येव नामान्यासन्। दिनद्वयानन्तरं 'मराठी'भाषायां केसरिपत्रं प्रकाशितम्। अतो ' मराठा ' ' केसरि'पत्रस्य ज्यायान् भ्राता। एतद्-वृत्तपत्रं बहुग्राहकाभावात् सदैव व्ययकरम्। आयव्ययौ समानौ न कदाप्यभूताम्। अतस्तस्माद्वृत्तपत्रात् द्रव्यलाभस्तु दूरे एव। आङ्ग्ल-भाषायां वृत्तलेखनस्यायमेवैकोद्देशो यदन्यप्रदेशस्था वा अन्यदेशवासिनो वा जनास्तद्गतविचारान् जानीयुः। विशेषेण तु शासनसंस्थाधिकारिणः। मराठा-वृत्तपत्रस्य प्रथमे क्रमाङ्के सम्पादकस्य निवेदने अयमुद्देशो प्रथितो दृश्यते। तथा हि–'विवेचनं, विज्ञप्तिः, शिक्षणं, तेन लोकप्रबोधः अस्माकं प्रथमं कर्तव्यम्। परार्थप्रतिपादनं गौणमेव ' इति। ' मराठा'वृत्तपत्रस्योद्दिष्टं विशालम्। न सङ्कुचितम्। " ' मराठा ' इति नाम्ना न केनापि भेतव्यं यदयमस्मदीयानामधिकाराणामतिक्रमणं करिष्यति। वृथा भीतिरेषा। विशिष्टपक्षस्य वा विशेषप्रदेशस्य वा वृथाभिमानमयं न धारयेत् " इति।

मराठावृत्तपत्रस्य सम्पादनं प्रथमं लोकमान्यैः कृतम्। अस्मिमे वर्षे कोल्हापुरसंस्थानविषये प्रखरटीकात्मका लेखाः प्रभूताः दृश्यन्ते। तेन अभियोगे जाते कारावासादनन्तरं १८९१ संवत्सरं यावल्लोकमान्यैस्तत् पत्रं न पुनः सम्पादितम्। अस्मिन् वर्षे द्वयोरपि वृत्तपत्रयोः सम्पादकत्वं लोकमान्यैः पुनः स्वामित्वेन स्वीकृतम्। एतत् स्वामित्वं कथं लब्धमित्यभेऽवलोक्यते।

अनेन कोल्हापुरप्रकरणोद्भूतेन टिळक-आगरकरयोः कारावासेन मतभेदमस्त्वा बहवः प्रश्नाः समुत्पन्नाः। तथाहि — आङ्ग्लविद्यालयस्य, महाविद्यालयस्य, ' डेक्कन एज्युकेशन सोसायटी 'नामिकायाः संस्थायाश्च

कानि मूलतत्त्वानि ? संस्थासदस्यैः कियद्वेतनमपेक्षणीयम् ? धनोत्पादकानि अन्यकार्याणि संस्थासदस्याः स्वीकुर्युः न वा ? संस्थायाः वृत्तपत्रयोश्च कीदृशो मिथः सम्बन्धः ? सार्वजनिककार्यसम्बन्धिनो मतभेदा व्यक्तिनिष्ठकलहाश्चैते सर्वे प्रश्नाः समासेनात्र कथिताः । यद्यपि ते रुचिकरा बोधप्रदाश्च तथाप्यन्ते खेदकारिणोऽभूवन् ।

## ४ कोल्हापुरप्रकरणम्

केसरि-मराठावृत्तपत्रयोः सम्पादनकार्ये यथा लोकशिक्षणार्थे समाजधारणार्थं च तथा यत्र यत्र काप्यपप्रवृत्तिः स्यात्तत्र तत्र जनानां तथाऽधिकारिणामपि सुयोग्यं कर्तव्योपदेशार्थमप्यासीत् । अधुनाऽयं भारतवर्षः स्वातन्त्र्यसुखमनुभवति । तदानीं पारतन्त्र्यशृङ्खलाबद्ध आसीत् । सार्वभौमत्वमाङ्ग्लभूपतीनाम् । परं कानिचित् परम्पराऽऽगतानि संस्थानान्यासन् । तेषु तत्तत्संस्थानाधिपतीनां पृथक् पृथक् शासनसंस्था आसन् । तथाप्येते सर्वे भूपतयः सार्वभौमस्य राज्ञः प्रतिनिधेर्वशमापादिताः सामन्ता एव केवलम् । स्वातन्त्र्येण न किमपि कर्तुं समर्थाः । संस्थाननरेशानां राज्यपद्धतिरेकतन्त्रा । आङ्ग्लशासनपद्धतिस्तु मिश्ररूपा । आङ्ग्लशासितप्रदेशेषु प्रजाः स्वातन्त्र्यसुखमधिकतरमन्वभूवन् । संस्थानेषु दोषप्रचुरायामपि शासनपद्धतौ 'ना विष्णुः पृथिवीपतिः' इति वचनमाद्रियमाणाः प्रजास्तेषु तेषु संस्थानाधिपतिषु अनुरक्ता आसन् ।

तदानीं 'बडोदा'संस्थाननरेशो बाल एवासीत् । तस्यामात्यपदवीमारूढः 'सर् टी. माधवराव'महाशयः आङ्ग्लानामेव कल्याणं पश्यति, न नरेशस्येति प्रजानां बुद्धिः । केचन शासनपद्धतिदोषास्तेन इतस्ततो निरस्ताः । परम् आङ्ग्लेषु, स्वजनेषु च तस्य पक्षपातः । गुर्जरदेशीया मान्यवरपण्डितास्तेन आदरेण न सम्मानिताः । बालनरेशे 'सयाजीराये-' ऽपि अकारणमेव स कठोरं वर्तते स्म । तेन सयाजीरायः स्वतन्त्रप्रज्ञया राजकीयविषयाणां शिक्षणं, तथा प्रजानां सुखदुःखज्ञानं नालभत । तस्मादमात्यमाधवस्य शासनव्यवस्था प्रजानां रुचिं नाहवत् ।

'कोल्हापुर'संस्थानस्थितिस्ततोऽपि कष्टतराऽऽसीत् । छत्रपतेः शैशवे मुख्यामात्येन स्वेच्छया प्रजानामनुपयुक्तेषु कार्येषु सञ्चितद्रव्यनिधि-

पत्रकस्याधस्तात् ' चिपळुणकर-टिळक-आगरकरादीनां ' नामानि दृश्यन्ते । वाङ्मयविषये चिपळुणकरशास्त्रिणः, धर्मशास्त्रराजनीतिप्रश्नेषु लोकमान्याः, अर्थशास्त्रेतिहासशाखायां आगरकरमहाशया अलिखन् । प्रथमानि षड्वर्षाणि आगरकरमहाशयैः केसरिपत्रं सम्पादितम् । अनन्तरं लोकमान्यैः ।

' मराठा 'वृत्तपत्रस्य प्रथमक्रमाङ्कः आङ्ग्लभाषायां १८८१ वत्सरे जानेवारीमासस्य द्वितीये दिवसे प्रसिद्धिं गतः । तस्मिन् काले प्रमुख-सम्पादकस्य नामलेखनविषये नियमो नासीत् । उद्देशपत्रिकायां पूर्वाण्येव नामान्यासन् । दिनद्वयानन्तरं ' मराठी 'भाषायां केसरिपत्रं प्रकाशितम् । अतो ' मराठा ' ' केसरि 'पत्रस्य ज्यायान् भ्राता । एतद्-वृत्तपत्रं बहुग्राहकाभावात् सदैव व्ययकरम् । आयव्ययौ समानौ न कदाप्यभूताम् । अतस्तस्माद्वृत्तपत्रात् द्रव्यलाभस्तु दूरे एव । आङ्ग्ल-भाषायां वृत्तलेखनस्यायमेवैकोद्देशो यदन्यप्रदेशस्था वा अन्यदेशवासिनो वा जनास्तद्गतविचारान् जानीयुः । विशेषेण तु शासनसंस्थाधिकारिणः । मराठा-वृत्तपत्रस्य प्रथमे क्रमाङ्के सम्पादकस्य निवेदने अयमुद्देशो ग्रथितो दृश्यते । तथा हि–'विवेचनं, विज्ञप्तिः, शिक्षणं, तेन लोकप्रबोधः अस्माकं प्रथमं कर्तव्यम् । परार्थप्रतिपादनं गौणमेव ' इति । ' मराठा 'वृत्तपत्रस्योद्दिष्टं विशालम् । न सङ्कुचितम् । " ' मराठा ' इति नाम्ना न केनापि भेतव्यं यद्वयमस्मदीयानामधिकाराणामतिक्रमणं करिष्यति । वृथा भीतिरेषा । विशिष्टपक्षस्य वा विशेषप्रदेशस्य वा वृथाभिमानमयं न धारयेत् " इति ।

मराठावृत्तपत्रस्य सम्पादनं प्रथमं लोकमान्यैः कृतम् । अग्रिमे वर्षे कोल्हापुरसंस्थानविषये प्रखरटीकात्मका लेखाः प्रभूताः दृश्यन्ते । तेन अभियोगे जाते कारावासादनन्तरं १८९१ संवत्सरं यावल्लोकमान्यैस्तत् पत्रं न पुनः सम्पादितम् । अस्मिन् वर्षे द्वयोरपि वृत्तपत्रयोः सम्पादकत्वं लोकमान्यैः पुनः स्वामित्वेन स्वीकृतम् । एतत् स्वामित्वं कथं लब्धमित्यग्रेऽवलोक्यते ।

अनेन कोल्हापुरप्रकरणोद्भूतेन टिळक-आगरकरयोः कारावासेन मनभेदमस्ता बहवः प्रश्नाः समुत्पन्नाः । तथाहि — आङ्ग्लविद्यालयस्य, महाविद्यालयस्य, ' डेकन एज्युकेशन सोसायटी 'नामिकायाः संस्थायाश्च

कानि मूलतत्त्वानि ? संस्थासदस्यैः कियद्वेतनमपेक्षणीयम् ? धनोत्पादकानि अन्यकार्याणि संस्थासदस्याः स्वीकुर्युः न वा ? संस्थायाः वृत्तपत्रयोश्च कीदृशो मिथः सम्बन्धः ? सार्वजनिककार्यसम्बन्धिनो मतभेदा व्यक्तिनिष्ठकलहाश्चैते सर्वे प्रश्नाः समासेनामे कथिताः । यद्यपि ते रुचिकरा बोधप्रदाश्च तथाप्यन्ते खेदकारिणोऽभूवन् ।

## ४ कोल्हापुरप्रकरणम्

केसरि-मराठावृत्तपत्रयोः सम्पादनकार्यं यथा लोकशिक्षणार्थं समाजधारणार्थं च तथा यत्र यत्र काप्यपप्रवृत्तिः स्यात्तत्र तत्र जनानां तथाऽधिकारिणामपि सुयोग्यं कर्तव्योपदेशार्थमप्यासीत् । अधुनाऽयं भारतवर्षः स्वातन्त्र्यसुखमनुभवति । तदानीं पारतन्त्र्यशृङ्खलाबद्ध आसीत् । सार्वभौमत्वमाङ्ग्लभूपतीनाम् । परं कानिचित् परम्पराऽऽगतानि संस्थानान्यासन् । तेषु तत्तत्संस्थानाधिपतीनां पृथक् पृथक् शासनसंस्था आसन् । तथाप्येते सर्वे भूपतयः सार्वभौमस्य राज्ञः प्रतिनिधेर्वशमापादिताः सामन्ता एव केवलम् । स्वातन्त्र्येण न किमपि कर्तुं समर्थाः । संस्थाननरेशानां राज्यपद्धतिरेकतन्त्रा । आङ्ग्लशासनपद्धतिस्तु भिन्नरूपा । आङ्ग्लशासितप्रदेशेषु प्रजाः स्वातन्त्र्यसुखमधिकतरमन्वभूवन् । संस्थानेषु दोषप्रचुरायामपि शासनपद्धत्यां 'ना विष्णुः पृथिवीपतिः' इति वचनमाद्रियमाणाः प्रजास्तेषु तेषु संस्थानाधिपतिषु अनुरक्ता आसन् ।

तदानीं 'बडोदा'संस्थाननरेशो बाल एवासीत् । तस्यामात्यपदवीमारूढः 'सर् टी. माधवराव'महाशयः आङ्ग्लानामेव कल्याणं पश्यति, न नरेशस्येति प्रजानां बुद्धिः । केचन शासनपद्धतिदोषास्तेन इतस्ततो निरस्ताः । परम् आङ्ग्लेषु, स्वजनेषु च तस्य पक्षपातः । गुर्जरदेशीया मान्यवरपण्डितास्तेन आदरेण न सम्मानिताः । बालनरेशो 'सयाजीराये-' ऽपि अकारणमेव स कठोरं वर्तते स्म । तेन सयाजीरायः स्वतन्त्रप्रज्ञया राजकीयविषयाणां शिक्षणं, तथा प्रजानां सुखदुःखज्ञानं नालभत । तस्मादमात्यमाधवस्य शासनव्यवस्था प्रजानां रुचिं नाहयत् ।

'कोल्हापुर'संस्थानस्थितिस्ततोऽपि कष्टतराऽऽसीत् । छत्रपतेः शैशवे मुख्यामात्येन स्वेच्छया प्रजानामनुपयुक्तेषु कार्येषु सञ्चितद्रव्यनिधि-

व्ययीकृतः । तेनासन्तुष्टाः प्रजाः निजदुःखनिवेदनार्थं केसरिपत्रसम्पादकेभ्यः पत्राण्यलिखन् । तेषु विश्वस्य केसरिपत्रेण लिखितम् "साम्प्रतं कोल्हापुरछत्रपतिस्थितिः पाषाणस्यापि हृदयं द्रावयेत् । पञ्चत्वं गते नरेशे आङ्ग्लभूपतेः प्रतिनिधिः प्रबुद्धो भवेत् किम् ? छत्रपतिप्राणापाये सति सम्राज्याः शरचन्द्रधवलकीर्तिः कलङ्किता भवेत्' इति । सर्वे दोषा अमात्यशिरसि प्रक्षिप्ताः । छत्रपतेर्मातृपक्षस्य पुरस्कारोऽधिकृततीत्या 'सदाशिव पांडुरंग भिडे'नामकेन विधिशास्त्रपण्डितेन कृतः । पुण्यपत्तने लोकसभायां छत्रपतेर्दुरवस्था तेन करुणशब्दैर्निवेदिता । तेनोक्तम् 'छत्रपतेर्बुद्धिभ्रंशो जातः । अतः स मूढोऽभूदिति कथा तु सर्वथाऽसत्या । क्रूरमनसा शासनसंस्थाधिकारिणा छत्रपतिः राज्या वियोजितः । कारावासे तस्य वैद्या रक्षापुरुषाश्च गौरकायाः । तेषामधिकारे छत्रपतेर्जीवघातोऽपि स्यात्" इति । अनेन छत्रपतिदुरवस्थावर्णनेन जना भीतिग्रस्ता अभूवन् । आङ्ग्लवृत्तपत्रैः शासनसंस्थापक्षमुररीकृत्य अमात्यमाधवस्य कृत्यानां समर्थनं कृतम् । 'बर्वे'महाशयोऽमन्यत एभिः पुण्यपत्तनस्थवृत्तपत्रैः प्रभूता मानहानिः कृता । अतस्तानि अभियोगेन दण्डनीयानीति । अनेनोद्देशेन बर्वेमहाशयः पुण्यपत्तनं समागतः ।

बडोदानरेशप्रकरणं समाप्तमभूत्, यतः स नरेशो व्यवहारयोग्यां वयोवस्थां सम्प्राप्तः । तस्य राज्यारोहणमहोत्सवोऽपि जातः । परं कोल्हापुरप्रकरणं चर्चाविषयोऽभूत् । बर्वेमहाशयेन मानहानिनिरसनाय न्यायालये अभियोगपत्रं प्रवेशितम् । यद्यपि केसरिमराठावृत्तपत्रयोर्लेखनं बहुभिः कृतं तथापि आगरकर–टिळकमहाशयौ एव अभियोक्त्रा मानहानिकरौ इत्यभियुक्तौ । अन्येषां वृत्तपत्राणां सम्पादकास्तथा अस्य विषयस्य सम्बन्धिनोऽन्येऽपि लोका दण्डनीया इत्यपि अभियोग आसीत् । परं प्रायेण बहुभिः सम्पादकैस्तथा सम्बन्धिभिश्च क्षमायाचनपत्राणि दत्तानि । न्यायाधीशस्यानुज्ञया बर्वेमहाशयैस्तानि स्वीकृतानि ।

मुख्यप्रश्नो वृत्तपत्रेषु प्रसिद्धिं गतानां व्यक्तिनिष्ठपत्राणाम् । केन लिखितानि तानि पत्राणि ? कथं प्राप्तानि ? इत्यादिविषयाणां कथा सुरसा, रमणीया च वर्तते, परं स्थलाभावादत्र वर्णयितुं न शक्यते । अन्यत्र

विस्तरेण लिखिते लोकमान्यटिळकचरित्रे वाचकैः सा वाचनीया। टिळक-आगरकराभ्यामपि तानि पत्राणि अप्रमादं स्वयं वाचयित्वा आत्मनो मनः समाधाय प्रसिद्धिं नीतानि। लोकमान्यानां प्रार्थनया तानि पत्राणि 'माधवराव रानडे' महाशयैरपि अवलोकितानि। सर्वाण्यपि पत्राणि सत्यानि दृश्यन्ते इत्यभिप्रायो तैरपि दत्तः।

लोकमान्यानां हस्ते कानिचित् पत्राण्यासन्। तानि पत्राणि कोल्हापुरनरेशस्य कस्यचित् सम्बन्धिनोऽवर्तन्त। तेषां पत्राणामुपयोगोऽभियोगे नैव कर्तव्य इति तस्य सम्बन्धिनो निर्बन्धः। अतस्तानि पत्राणि लोकमान्यैः 'जोशी' महाशयसमक्षं भस्मसात् कृतानि। अनन्तरं टिळक-आगरकरमहाशयाभ्यां क्षमापत्रं दातव्यं वा नेति विषयमधिकृत्य महान् विवादो जातः। विवादावसाने क्षमायाचनपत्रकमुभाभ्यामपि दत्तम्। परं सर्वं तद्विफलमभूत्। अभियोगपरीक्षणकाले सर्वाण्येतानि पत्राणि कृत-कान्यासन्निति प्राड्विवाकेन निर्णीतम्। अतः सर्वेऽपि ते दण्डार्हा बभूवुः। भिडे—रानडे वर्षद्वयभोग्येन कारावासेन दण्डितौ। टिळक-आगरकर-वसलेमहाशया मासचतुष्टयभोग्येन कारावासेन दण्डिताः।

बर्वेमहाशयकृतमानहानिकराभियोगे दण्डफलेन निर्णीते कोल्हापुर-नरेशस्योपद्रवोऽनुदिनमधिकं प्रवृद्धः। शासनसंस्थामतेन महाराजो मति-भ्रष्ट आसीत्। अतस्तस्य चित्तस्वास्थ्याय कृता औषधोपचारयोजना, भक्ष्याभक्ष्यभक्षणनिर्बन्धः, महाराज्ञीविप्रयोगः, विविधस्थलेषु प्रवसनं, तथा दण्डेन ताडनमित्येते सर्वे उपाया युक्ता आसन्नित्यधिकारिणां मतम्। लोकमतं तु विपरीतम्। अन्ततोऽनेन निष्ठुराचारेण कोल्हापुरछत्रपतिः पञ्चत्वं गतः।

क्षमापत्रके आगरकर–टिळकमहोदयाभ्यां स्पष्टमेव लिखितम् ''लेखन-काले यदस्माभिर्लिखितं तत्सर्वं सत्यमेवेत्यस्माकं विश्वासः। तथैव यैः स वृत्तान्तोऽस्मभ्यं कथितस्ते सर्वे तदा विश्वासार्हा आसन्। अधुना 'भिडे'-महाशयस्याभियोगे स वृत्तान्तस्तथा प्रसिद्धिं गतानि पत्राणि कृतकान्यासन् इति न्यायाधीशस्य निर्णयः। तस्मादस्माभिः कृतानां विधानानां मूलाधार

एव नष्टः। अतस्तानि विधानान्यपि असत्यानि जातानि। तस्माद्दुःखीभूतमस्माकं चेतः" इति।

'न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्'

इति सुभाषितस्य प्रत्ययो लोकमान्यैरनेन प्रसङ्गेन प्रथममनुभूतः। प्रथमोऽयं कारावासो लोकमान्यानां तथा आगरकरमहाशयानाम्। आगरकरमहाशयैः कारावासानुभवा एकस्मिन् पुस्तके वर्णिताः। ते लिखन्ति "कारावासेन वयं न तथा दुःखिताः, यथा भोजनपदार्थेषु कन्दर्पलशुनादिपदार्थानां मिश्रणं दृष्ट्वा तेषामुग्रं च गन्धं समाघ्राय व्याकुलीभूताः। अस्माकं शयनस्थानं यूकामत्कुणादिजन्तूनामतिथिगृहम्। गच्छता कालेन लेखनवाचननिर्बन्धः शिथिलीकृतः। एकाधिकशतदिवसानन्तरम् आवाम् उभावपि कारावासान्मुक्तौ लोकैश्च महता गौरवेण सत्कारपूर्वकं सम्मानितौ" इति।

## ५ 'फर्ग्युसन' महाविद्यालयस्थापना

'न्यू इंग्लिश स्कूल' नामकस्याङ्ग्लविद्यालयस्य प्रतिष्ठापनानन्तरं शुक्लपक्षेन्दुवत् प्रतिसंवत्सरं वर्धमानेन तस्याभ्युदयेन द्विगुणीकृतोत्साहाः, स्वार्थत्यागेन जनसेवाधर्मेण च लब्धकीर्तयोऽध्यापका मनस्येवमचिन्तयन् यत् प्राचीनार्वाचीनशास्त्राध्ययनार्थमेकं महाविद्यालयं स्थापयित्वा उच्चशिक्षणप्रदानाय वयं किं न यतेमहि इति। विद्यालयस्याध्यापकवर्गे विद्यमानाः शिक्षकाः स्वस्वविषये विशारदा आसन्। अतो विश्वविद्यालयशिक्षणार्थं महाविद्यालयोद्घाटनं सुकरमभूत्। लोकमान्यटिळकमहाशया 'आपटे' महाशयाश्च संस्कृतभाषायां गणितशास्त्रे च पण्डिताः। आगरकरमहाशया इतिहासविषये अर्थशास्त्रे च निष्णाताः। विष्णुशास्त्रिणां चिपळुणकरोपाह्वानाम् आङ्ग्लभाषायां गीर्वाणभाषायां च अनन्यसाधारणं प्रभुत्वम्। केळकरमहोदयानामपि आङ्ग्लभाषायां नैपुण्यम्। 'गोळे' महाशयाः पदार्थविज्ञानशास्त्रे प्रवीणाः। विद्यार्थिजनेभ्यः स्वार्थत्यागपूर्वकं ज्ञानदानाय बद्धपरिकरानेतादृशानध्यापकानेकत्र समागतानवलोक्य मुम्बईविद्यापीठसदस्या विस्मिता बभूवुः। 'डेकन कॉलेज' नाम्नो महाविद्यालयस्य प्राचार्यो 'वर्ड्सवर्थ' महाशयाः, 'ऑक्झनहॅम्'–'मॅकिकन्' प्रभृतयोऽन्ये पाश्चात्यपण्डितास्तथा 'रामकृष्ण गोपाळ

भाण्डारकर–माधवराव रानडे–काशीनाथ त्र्यम्बक तैलंग 'प्रभृतयो भारतीयविद्वांसः एतानुपरिनिर्दिष्टान् प्राज्ञजनान् महता गौरवेणामन्यन्त।

शिक्षणविषयिकायाः 'हंटर'समित्याः पुरतः आपटेमहाशयकृतनिवेदने सम्यग्रीत्या प्रतिपादितमेतत् 'यत् स्थले स्थले विद्यालयप्रतिष्ठापनम्, अल्पधनेन छात्राणामध्ययनम्, महाविद्यालयानां ज्ञानदानकर्मणि सञ्चलने च पूर्णं स्वातन्त्र्यम्, पाठ्यपुस्तकानां भरतखण्डे सम्पादनम्, मातृभाषाया-मध्यापनम्, सुगमाध्यापनपद्धतिः इत्यादिविषयेषु भारतीयानां व्यवस्था-विषयकम् अनिर्बन्धस्वातन्त्र्यमावश्यकम्। राष्ट्रियशिक्षणमिति यल्लोकैरुद्-घोष्यते तद्विदमेव। नान्यत्। अनेन शिक्षणेन युवानः कर्तव्यदक्षा बलसम्पन्ना राष्ट्राभिमानिनो भवेयुरिति राष्ट्रियशिक्षणस्योद्दिष्टमासीत्' इति। खिस्ताब्दस्य १८८४ संवत्सरे 'आक्टोबर'मासे 'सर् विल्यम् वेडरबर्न' – महाशयानामध्यक्षत्वे पुण्यपत्तनस्थप्रतिष्ठितनागरिकाणामेका परिषन्निमन्त्रिता। तस्यां सभायाम् आपटेमहाशयपुरस्कृतशिक्षणसंस्था-स्थापनविषयकप्रस्तावः सम्मतोऽभूत्। 'डेक्कन एज्युकेशन सोसायटी' इति संस्थाया नामकरणं जातम्। अध्यापनविषये मार्गदर्शनाय तथा आयव्ययनिरीक्षणाय 'वेडरबर्न–वर्ड्स्वर्थ–मंडलिक–तेलंग–दांडेकर–केळ्कर'प्रभृतीनामेकं मण्डलं द्वितीयप्रस्तावेन विनिर्मितम्। तृतीयप्रस्ताव-समये प्राध्यापकवर्यैः 'भाण्डारकर'महाशयैरुक्तम् "प्रारम्भे विद्यमानै-र्निःस्वार्थबुद्धिभिरुदारचरितैः ऋषितुल्यैः सप्तसदस्यैः 'टिळक–आगरकर–नामजोशी–आपटे–केळ्कर–गोळे–धारप'महाशयैः सुप्रतिष्ठिते आङ्ग्ल-विद्यालये ओजसा, तेजसा, यशसा, त्यागेन, शीलेन, कर्मणा च जनमनां-स्यावर्जितानि। एतेषामेसरः 'एल्‌एल्. बी.'इति विद्यापीठोपपदधारी विधिशास्त्रज्ञो वर्तते। स यदि लोकस्यापिवामिमां शिक्षणसंस्थां परित्यज्य, स्वार्थपरायणः सन्, राजसेवावृत्तिमकरिष्यत्तर्हि अनेन समयेनाधिकारपदं लब्ध्वा यत्र कुत्रापि समाधानवृत्त्या सुखेन कालमनेष्यत्' इति। लोक-मान्यानुद्दिश्य भाण्डारकरमहाशयैरेतदुक्तमिति तु स्पष्टमेव।

१८८४ वत्सरस्य फेब्रुआरीमासे मुम्बईप्रदेशाधिपतिः 'सर् जेम्स् फर्ग्युसन' महाशयः 'न्यू इंग्लिश स्कूल'नामकं विद्यालयं द्रष्टुमागतः।

तदाप्रभृत्येव महाविद्यालयकल्पना बद्धमूला जाता। मुम्बईविद्यापीठसदस्यै-रेकं प्रस्तावं स्वीकृत्य महाविद्यालयं स्थापयितुमनुज्ञाऽपि दत्ता। आगरकर-महाशयैः केसरिपत्रे विनोदेनैवं लिखितम् "अविलम्बेनैव 'फर्ग्युसन-कॉलेज'रहस्यं वयं प्रकटीकरिष्यामः। तद्वाचकवर्गेण सावधानं वाच-यितव्यम्। वाचनावसाने वाचकानां सुवर्णमुद्राः रौप्यमुद्राश्च कोषागारादुत्प्लुत्य झटिति महाविद्यालयं प्रति आगमिष्यन्ति" इति।

## ६ कोणशिलास्थापनोत्सवः

खिस्ताब्दस्य १८८५ वत्सरे जानेवारीमासस्य द्वितीयेऽहनि 'फर्ग्युसन कॉलेज'नामको महाविद्यालयः प्रस्थापितः। महाविद्या-लयस्याधिवेशनार्थं विद्यागृहमावश्यकम्। तद्विरचयितुं कोणशिलास्थापनो-त्सवो मुंबईप्रदेशाधिपस्य 'फर्ग्युसन'महाशयस्याध्यक्षत्वे महता विभवेन 'मार्च'मासस्य पञ्चमे दिवसे कृतः। राजमार्गे विस्तीर्णं सभामण्डपं रच-यित्वा, लतापल्लवैः कदलीदलैर्वस्त्रकेतनैस्तोरणानि कृत्वा, मण्डपप्रवेशाय प्रेक्षणीयं गोपुरं निर्माय, सभास्थानं विविधमण्डनैरलङ्कृतम्। महाविद्या-लयवृत्तनिवेदनानन्तरं फर्ग्युसनमहाशयैः स्वभाषणे टिळक-चिपळुणकर-आपटे-आगरकरप्रभृतीनां सगौरवं नामनिर्देशः कृतः। महाविद्यालयछात्राणा-मधिवेशनाय 'बुधवारप्रासादस्थलं' दत्त्वा शासनसंस्थयाऽऽत्मनः कर्तव्यमेव कृतम् इति। परम् एष समारम्भो विफलो जातः। कतिपयवत्सरानन्तरं सा कोणशिला तस्मात्स्थानादुद्धृत्य 'चतुःशृङ्गी'परिसरे स्थापिता।

महाविद्यालयेऽध्यापनकार्यं कुर्वाणाः सर्वे प्राध्यापकाश्छात्राणां मह-त्स्फूर्तिस्थानमभूवन्। आपटेमहाशयानामध्यापनं शिक्षणपद्धतिमनुसृत्यासीत्। विद्यार्थिजनोपयोगिन्यष्टिप्पण्यः स्थले स्थले तैरदीयन्त। गौरवर्णा रुचिरा-कारा गोखलेमहाशया नातिपरिस्फुटश्मश्रुराजिलेखाविभूषिता यौवनपदवी-मारूढा आत्मनः शालीनतया ज्ञानदानकौशलेन च छात्राणां मनांस्यावर्जे-यन्ति स्म। लोकमान्यटिळकमहाशया मितशब्दैर्विद्यार्थिनां शङ्कानिरसनेना-त्मनः प्रत्युत्पन्नमतित्वं कुशाग्रबुद्धिमत्त्वं च प्रकटयन्ति। केळकरमहाशयानां व्याख्यानमग्निरथ इव महावेगेन धावति। विद्यार्थिजनस्तानात्मनः शङ्कां प्रष्टुं नाधृष्णोत्, यतः केळकरमहाशयाः छात्रानुपहासपूर्वकमभाषन्त।

अतो रक्तापाङ्गेभ्यः पृथुललोचनेभ्यस्तेभ्योऽविभयुर्विद्यार्थिनः । शान्तस्वभावाः स्मिताननाः आगरकरमहाशया अध्यापने गाम्भीर्यमुत्पादयितुं लोचने ईषन्निमील्य विषयं न्यरूपयन्।

विद्यालये लोकमान्यैर्गणितविषयस्योदाहरणस्पष्टीकरणाय लेखनफलको न कदाप्युपयुक्तः। मुखेनैव ते सर्वं विशदीकुर्वन्ति स्म इति लिखितपूर्वमस्ति। सैव पद्धतिस्तैर्महाविद्यालयेऽनुसृता। तेन अल्पमतयश्छात्रा महता आयासेन विषयं जानन्ति स्म। भर्तृहरिविरचितं नीतिशतकं, कालिदासकृतिं मेघदूतं रसज्ञतया महता कौशलेन च लोकमान्या निरूपयन्ति स्म इति श्रूयते। बहूनामप्रलेखानां शीर्षकाणि नीतिशतकस्थानीति सुपरिचितमेव।

१८९२ संवत्सरे पदवीपरीक्षान्ताः सर्वे विषया विद्यापीठाज्ञया अध्यापिताः।

## ७ मित्रविग्रहः

'डेक्कन कॉलेज'नाम्नि महाविद्यालयेऽध्ययनं कुर्वाणयोः टिळक-आगरकरमहाशययोः दोषप्रचुरे, दृढबद्धमूले हिंदुसमाजस्थपरम्परागतरूढिविषये बहवो विवादाः समजायन्तेति प्रसिद्धमेव। धर्मशास्त्रविहितसंस्काराणां मूलतत्त्वानि विस्मृत्य तदङ्गभूता नैकप्रकारा रूढयो दोषप्रचुराः जनानामुपहासास्पदं प्राप्ता अपि लोकैरादरेणाचर्यन्ते इति तु गर्हणीयमेव। उपनयनविधौ विवाहविधौ वा आचरिताः काश्चिद्रूढयो विचित्राः सन्तीति यद्यपि लोकमतं तथापि ताः परित्यक्तुं न कोऽप्यधृष्णोत्। कन्यानां प्रथमरजोदर्शने गर्भाधानसंस्कारः शास्त्रविहितः। तदानींतना जनास्तमनुतिष्ठन्ति स्म। अनुतिष्ठन्तु नाम। परम् एतादृशी वधूस्तस्मिन् संस्कारे सवाद्यं, सवैभवं, समारम्भपूर्वकं राजमार्गेण लोकानां नयनपथं नेतव्या इति न केवलमुपहासास्पदम्, अपि तु तिरस्कारार्हं हीनरुचिप्रदर्शकं च। अवश्यमेव एतादृश्यो रूढयो जनैर्हातव्याः। यदि जनास्ताः स्वयं न त्यजेयुस्तर्हि शासनसंस्थया निर्बन्धं कृत्वा लोकैस्त्याजनीया इति आगरकरमहाशयानां मतम्।

लोकमान्यानां प्रतिपादनं तु एवंरूपम् "सत्यमेतत्सर्वम्। परम् अस्मिन् विषये शासनसंस्थानिर्बन्धो न आवश्यकः। लोकशिक्षणेन जनान् प्रबोध्य

तेषां मतपरिवर्तनं कर्तव्यम् । मतपरिवर्तनेन सञ्जातमाचारपरिवर्तनं बद्धमूलं सुप्रतिष्ठितं च भविष्यति" इति ।

केसरिपत्रे तदानीं परस्परविरुद्धमतप्रदर्शका लेखाः समागता दृश्यन्ते । विदितमेवेदं वाचकानां यत् केसरिपत्रे बहवो विद्वांसो लिखन्ति स्म । यद्यपि आगरकरमहाशया मुख्यसम्पादकास्तथाऽपि न केवलं तेषामेव मतप्रवाहः केसरिपत्रे दृश्यते । विद्यालयाध्यापकवर्गे यथा विद्वांसो जना अवर्तन्त तथा प्रभूता आचारविचारधारा आसन् । अस्मिन् समाजधारणाविषये जनप्रवाहो लोकमान्यमतानुसारी । बहवोऽध्यापकास्तन्मतानुवर्तिनः । अतः परस्परविरुद्धलेखनेनाध्यापकवर्गे तथा शिक्षणसंस्थासदस्येषु द्वौ पक्षौ आस्तामिति लोके विदितप्रायम् । तस्मादागरकरमहाशयानां मनसि लेखनविषये सङ्कोचः समुत्पन्नः । स्वमतप्रतिपादनं निःसङ्कोचतया कर्तव्यं तर्ह्यन्येषां विरुद्धलेखनं तस्मिन्नेव पत्रे मुद्रितं दृश्यते । मुख्यसम्पादकस्थानस्यैतदसाम्प्रतम् । स्वनामोल्लेखेन लेखो मुद्रयितव्यस्तर्हि तदप्ययुक्तं दृश्येत । स्वगृहे स्वयमेव प्राघूर्णिकः । अपूर्वेयं स्थितिः । किं कर्तव्यमिति प्रश्नः । इतो व्याघ्रः इतस्तटी ।

अनेन समयेन एको विवादः समुत्पन्नः । बालविवाहविषये प्रतिष्ठितविद्वज्जनानां मतं शासनसंस्थयाऽपेक्षितम् । तदा केनचित् 'मलबारीशेठ'-महाशयेन वृत्तपत्रेषु स्वमतं मुद्रितम् । ( १ ) प्ररूढः कुमारकुमारीविवाहो निर्बन्धेन रोद्धव्यः । ( २ ) विवाहितछात्रेभ्यो विद्यापीठे प्रवेशो न दातव्यः । ( ३ ) नृपसेवाकर्मणि स अयोग्यो मन्तव्यः । ( ४ ) एतद्विषयको निर्बन्धः शासनसंस्थया कर्तव्यः इति । अस्मिन् विषये पक्षद्वयं सञ्जातम् । 'माधवराव रानडे'प्रभृतीनामेकः सुधारकपक्षः । 'तेलंग'-प्रभृतीनामपरः सनातनपक्षः । केसरिपत्रव्यवस्थापकेष्वपि एवमेव स्थितिः । बहुमतं लोकमान्यानुकूलम् । अल्पमतम् आगरकरप्रभृतीनाम् । पुण्यपत्तने तथा मुम्बापुर्यामस्मिन् विषये महान् विवादः समजायत । लोकमतं प्रायेणेदमेव यद्धार्मिकविषये शासनसंस्थया हस्तक्षेपो न कार्यः इति ।

अन्यदप्येकं विवाहविषयकप्रकरणं समुद्भूतम् । तेनायं सामाजिकसुधारणावादश्चर्चाविषयो जातः । 'दादाजी'नाम्नः कस्यचिद्दरिद्रस्य रखमा-

नाम्न्या कन्यया सह धनलोभेन विवाहो जातः । स दादाजीनामा दारिद्र्यदोषाद्बाल्यादात्मनः श्वशुरगृहे एव वर्धितोऽभूत् । विवाहादूर्ध्वमपि स तत्रैव निवसति स्म । गच्छता कालेन श्वशुरेण सह तस्य कलहो जातः । अतस्तस्य निवासस्थानमधुना पृथगभूत् । तस्य भार्या रखमानाम्नी पुनःपुनराहूताऽपि पतिगृहं नायात् । अतो भार्याप्राप्त्यर्थमेतत्प्रकरणं न्यायालये प्रविष्टम् । वादमूले तु इदमेव । दादाजीनामकेन सह रखमानामिकाया विवाहस्तस्याः असम्मत्या जातः । अतो न्यायाधीशेन निर्णीतम् " विधिनिर्बन्धेन बलात् रखमानाम्नी दादाजीनामकस्य पत्नी तस्य सदनं न प्रेषयितव्या " इति । कनिष्ठन्यायालयनिर्णयो दादाजीप्रतिकूलो जातः । वरिष्ठन्यायालयेन रखमाप्रतिकूलो निर्णयो दत्तः । अतस्तया पतिगृहमाश्रयणीयं वा राजशासनं भोक्तव्यं वा इति सम्प्राप्तम् ।

लोकमान्यादिभिर्व्यवहारशास्त्रपण्डितैः ' दादाजी 'पक्षः स्वीकृतः । आगरकरादिभिरल्पसंख्याकैः रखमापक्षस्य पुरस्कारः कृतः । अनेन प्रकारेण ' डेकन एज्युकेशन सोसायटी 'नाम्न्याः शिक्षणसंस्थायाः सदस्येषु विद्यमानौ अस्फुटौ द्वौ पक्षौ स्फुटीभूतौ ।

' माधवराव रानडे 'प्रभृतिभिः पुरस्कृतायाः ' वसन्तव्याख्यानमालायाः ' समारोपकाले न्यायपद्धतिमाश्रित्य अस्य विषयस्य विवेचनं रानडेमहाशयैः स्वयं विस्तरेण कृतम् । आशयस्तु एवमेव, यद्धर्मशास्त्रेण स्त्रीणां पोषणविषये तासामाचारतः तारतम्यं दर्शितम् । अपराधानुसारेण न्यूनाधिकजीवनधनं स्त्रीभ्यो दातव्यम् । परं पतिगृहे पत्न्याः अनिच्छया वासो दण्डेन न कर्तव्यः इति । तदैव लोकमान्यैः केसरिपत्रे

" सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् "

( मनु० ८-१३ ) इति शास्त्रवचनमुद्धृत्य प्रमाणैस्तर्ककर्कशशब्दैश्च रानडेमहाशयकृतपूर्वपक्षस्य खण्डनं कृतम् । लेखद्वयेनायं विषयः प्रतिपादितो दृश्यते । लोकमान्या अलिखन् " साम्प्रतं यदि काचित्सुधारणा इष्यते तर्हि सा सुकरा, सयुक्तिका, आवश्यकी, एतावानेव विचारस्य भागः । न कोऽपि तस्य प्रत्यवायः । परं यदा वयोवृद्धा ज्ञानवृद्धाः स्वपक्षसमर्थनार्थं ज्ञानचातुर्येण लोकान् विमोहयन्ति तदा सम्यग्दर्शनार्थं सत्यान्वेषणपूर्वकं धर्मतत्त्व-

प्रतिपादनमस्मादृशानां कर्तव्यं भवति । शिक्षणसंस्थायां प्रतिपक्षीयसदस्या आपटेमहाशया अस्मिन् विषये लोकमान्यानुकूलाः । तैरेकं प्रबन्धं विलिख्य रानडेमहाशयदत्तप्रमाणानां शास्त्राधारेण खण्डनं कृत्वा लोकमान्यानां समर्थनं कृतम् ।

१८७६ वत्सरे 'यमुनाबाई×पँडसे' अभियोगे न्यायमूर्तिभिरेष निर्णयो दत्तः यत् पतिगृहे पत्न्याः वासो न कदापि परिहरणीयः । अपवादस्तु स्त्रियाः जीवितापायसम्भवे एव ।

'वसन्तव्याख्यानमालायां' 'डॉ. गर्दे' महाशयानां व्याख्यानावसरे उपवक्तॄणां महान् विवादः समजायत । आपटे-रानडेमहाशययोर्वाग्युद्धमभूत् । रानडेमहाशया अभाषन्त 'कलासु स्त्रीशिक्षणमर्यादा नृत्यगानवादनान्ताऽपि सम्भवेत् । आपटेमहाशयाः प्रत्यवदन् । एतादृशा अनुचितप्रकारा यदि स्त्रीशिक्षणक्षेत्रे प्रविशेयुस्तर्हि तासां जीवनं विफलं भवेत् । वयं पुरुषा यत्र हठात् आङ्ग्लभाषां पठामस्तत्राङ्ग्लभाषाशिक्षणविषये स्त्रीषु बलस्य प्रयोगः कथं कर्तव्यः' इति ।

इदानीं पञ्चसप्ततिहायनानन्तरमेतादृशो विवादो विनोदविषयोऽपि न स्यात् । चलच्चित्रपटेषु यौवनपदवीमारूढानां प्रमदानामुत्तानशृङ्गारप्रधानमभिनयकलापूर्णं नृत्यनाट्यादिकमवलोकयितुं यत्र जनाः प्रवेशपत्रिकाप्राप्त्यर्थं पङ्क्तिशः चित्रपटद्वारे सोत्साहाः सन्तः अविरतं तिष्ठन्ति तत्राधुना स्त्रीशिक्षणं चर्चाविषयः कथं भविष्यति ।

सामाजिकसुधारणाविषये 'डेक्कन एज्युकेशन सोसायटी' संस्थासदस्येषु एतादृशं मतवैचित्र्यं दृष्ट्वा जनानां मनांसि साश्चर्याण्यासन् । केसरिमराठावृत्तपत्रयोः स्वामित्वं संस्थासदस्यानाम् । संस्थायां प्रभुत्वं रानडेमहाशयानाम् । आजीवसदस्येषु एतादृशं मतवैचित्र्यम् । बहुमतं लोकमान्यानुकूलम् । आपटेमहाशयानामपि लोकमान्येषु पक्षपातः । किमेतद्रहस्यमिति लोकैर्न ज्ञायते । २८-६-१८८७ दिवसस्य केसरिपत्रे सम्पादकैरेकं स्पष्टीकरणं मुद्रितं दृश्यते — "केसरि-मराठावृत्तपत्रयोरसम्बन्धिनः प्राध्यापकाः यदा संस्थायां प्रविष्टास्तदाप्रभृत्येवेदं सुस्पष्टमभूत् यदेतद्वृत्तपत्रद्वयं सर्वेषां संस्थासदस्यानां मतप्रदर्शकं नासीत् । ये केचन तयोः

सम्बन्धिनस्तेषामेव मतप्रदर्शनं तस्मिन् दृश्यते। नान्येषाम्" इति। केसरिपत्रस्य सम्पादनं प्रकाशनं च आगरकरमहाशयानाम्। लेखेषु मतप्रदर्शनमन्येषाम्।

अन्ततः २५-१०-१८८७ दिवसस्य केसरिपत्रे प्रथममेव महत्त्वपूर्णं लघुनिवेदनं दृश्यते। "अद्यप्रभृति केसरिपत्रस्य सम्पादनप्रकाशनकार्यभरः 'बी. ए., एल्एल्. बी.'उपपदधारिणां 'बाळ गङ्गाधर टिळक'महाशयानां शिरसि वर्तते। न आगरकरमहाशयानाम्" इति।

एवं आगरकरमहाशयानां केसरिपत्रस्य सम्पादकत्वेन सम्बन्धो विलयं गतः। येन कारणेन लोकमान्यैः 'डेकन एज्युकेशन सोसायटी-' संस्थायास्त्यागपत्रं दत्तं तेनैव कारणेन आगरकरमहाशयैः केसरिपत्रं त्यक्तम्। तत्सरानन्तरं 'गोपाळराव गोखले'महाशयानां साहाय्येन आगरकरमहाशयैः 'सुधारक' इति नामधेयाङ्कितमन्यद्वृत्तपत्रं सम्पादितम्। एवं सामाजिकसुधारणाविषये आगरकरमहाशयैर्लेखनस्वातन्त्र्यं लब्धम्। सुधारकपत्रे आगरकरमहाशया मराठीभाषायां, गोखलेमहाशया आङ्ग्लभाषायां लिखन्ति स्म। पूर्वे वयसि वर्तमाना गोखलेमहाशया गणितशास्त्रे तथा आङ्ग्लभाषायामसाधारणप्रभुत्वमलभन्त। नैकवारं ते वदन्ति स्म 'लोकमान्यकृतस्वार्थत्यागस्फूर्त्या मया 'डे. ए. सो.'संस्थायाः सदस्यत्वं स्वीकृतम्' इति। परं प्रवेशानन्तरम् आगरकरमहाशयानामेव विचारसरणिर्गोखलेमहाशयैरुररीकृता। अग्रे रानडेमहाशयानां परिचये जाते केसरि-मराठापत्रविषये तेषां मतं प्रतिकूलं जातम्। सामाजिकसुधारणाविषये टिळक-आगरकरयोर्यद्यपि मतभेदस्तथापि लोकमान्यचेतसि आगरकरकृतस्वार्थत्यागविषयको महानादर आसीत्। उभयोश्च स्नेहो भृशमवर्धत। अन्तकाले आगरकरमहाशयैर्लोकमान्यानाहूयात्मनो दुःखं लघूकृतम्। उक्तं च कविकुलगुरुकालिदासेन —

स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति।

आगरकरमहाशयानां मृत्युलेखलेखनकाले धीरगम्भीरा अपि लोकमान्याः बाष्पपूर्णलोचनाभ्यामेव लेखनकार्यं समापयन् इति लोकमान्यान् परितो वर्तमाना जनाः कथयन्ति। सत्यस्य, त्यागस्य, निग्रहस्य, निष्ठायाश्च

एतावानेव महिमा यद्धनवन्तोऽपि निर्धनस्य देशसेवकस्य गुणगणान् मुक्तकण्ठेन गायन्ति ।

## ८ शिक्षणसंस्थात्यागः

'केसरि-मराठा'वृत्तपत्रयोः सम्पादनं सञ्चालनं च प्रथमं 'डेक्कन एज्युकेशन सोसायटी'सदस्यैः कृतमासीत् । अधुना तत्कार्यमन्तर्गतमतभेदेन लोकमान्यैः स्वीकृतम् । परं यथा सार्वजनिककार्येषु राजकीयसामाजिक-सुधारणावादेन केसरि-मराठादिवृत्तपत्रेषु 'डे. ए. सो.'सदस्यानां मतभेद-दर्शनं जातं तथा शिक्षणसंस्थायाः मूलतत्त्वप्रणाल्यामपि विविधविचार-प्रवाहा उदपद्यन्त । तेषां नैसर्गिकपरिणामस्तु कलिप्रवेशः । महाविद्यालये एतेषामाजीवसदस्यानामेकत्रावस्थानं विवादस्थलमभूत् । तत्त्वनिष्ठा लोक-मान्याः । असह्यपरिणामाश्च मतभेदाः । तेषां नैसर्गिको विपाको 'डेक्कन एज्युकेशन सोसायटी'नामिकाया संस्थायाः सदस्यत्वस्य लोकमान्यानां त्यागपत्रम् ।

अनवरतजायमानान्तर्गतकलहैर्निर्विण्णमानसाः परस्परकृतयाकृशर-प्रहारविद्धहृदयाः कृतबुद्धयो लोकमान्याः १८९० वत्सरस्य आक्टोबर-मासस्य चतुर्दशेऽहनि स्वहस्तप्रतिष्ठापितशिक्षणसंस्थायाः आजीवसदस्यत्वस्य त्यागपत्रविषयिणीं पूर्वसूचनां दत्त्वा मासद्वयानन्तरं डिसेंबरमासस्य पञ्च-दशेऽहनि अनिच्छया आत्मनस्त्यागपत्रं प्राहिण्वन् । स्वार्थत्यागपूर्वकं श्रद्धया धर्मबुद्ध्या प्रतिपालितस्य जीवितकार्यस्यायं परित्यागः कियान् कष्टप्रदः स्यादिति ज्ञातुं सुशकम् । 'केळकर विरचितलोकमान्यटिळकचरित्रे कारण-मीमांसापूर्वकं विस्तरेणोद्धृतमेतत् त्यागपत्रं संक्षेपेणात्रोल्लिख्यते ।

प्रारम्भे संस्थापरित्यागविषयकं दुःखं प्रदर्श्य लोकमान्या लिखन्ति "एकादशवर्षेभ्यः प्राक् जीवितध्येयप्रेरिताः केचन सदस्याः एकत्र समागत्य ध्येयपूर्तये अद्यावधि प्रायतन्त । विसोढस्तैर्लोकविरोधः । तिरस्कृतो जनो-पहासः । उपेक्षितं नैराश्यम् । अतः संस्थात्यागसमये कियद्दुःखं स्यादिति भवद्भिश्चिन्तनीयम् । आसीदयं मम जीवनोद्देशो यदस्यां संस्थायां मयाऽ-ध्यापनकार्यं यावज्जीवं कर्तव्यम् । तस्याः जीवननिष्ठायास्त्यागसमयः सम्प्राप्तः । अतो दुःखतरं नु किम् । केषांचन सदस्यानां मूलभूततत्त्व-

विरोधः तत्त्वत्यागवृत्तिश्च। यदा यदा सा तत्त्वत्यागवृत्तिर्मम दृष्टिपथमायाता तदा तदा तस्या अधिक्षेपो मया कृतः। तस्य विपाको मिथो वाक्ताडनं परस्परविरोधश्च। मूलतत्त्वपरित्यागो न कदाऽपि केनापि सोढव्यः। आयत्यामेतन्न सम्भविष्यतीति बुद्ध्या मयेदं लिख्यते। अस्मन्मतभेदनिदानं स्वभाववैचित्र्यम्। ततो विद्वेषवृत्तिः। आजीवसदस्यानां स्वीकारकालेऽस्माभिस्तारतम्यं न दर्शितम्। मूलतत्त्वानि धर्मतत्त्वानीति मत्वा श्रद्धापूर्वकं तेषां प्रतिपालनमावश्यकम्। अन्यथा सपद्येव संस्थात्यागः कर्तव्यः। अन्यच्च। अस्माकमेकोऽपि यदि नायकः स्यात्तर्हि समीचीनं भवेत्। तदपि नास्ति। सर्वे सेनापतयः। न कोऽप्याज्ञापालनपरः सैनिकः। भिन्नप्रकृतीनां नैकविचाराणां जनानामेकत्र मीलनस्य नैसर्गिकोऽयं विपाकः। संस्थास्थापकसदस्या वयं समानवयसः, तत्त्वनिष्ठाः कार्यार्थमेकत्र समागताः। ज्ञातेऽपि स्वभावभेदे स्वार्थत्यागपूर्वकं ध्येयसिद्ध्यर्थं यतमानानामस्माकं प्रकृतिभिन्नत्वं ज्ञानदानकार्ये विलयं गमिष्यतीति तदाऽस्माकं बुद्धिः। अङ्गीकृतकार्यं दुष्करम्। तत्फलदर्शनं तु दूरे एव। वयं सदस्याः लोकेषु सामान्यजनाः। अतो वयं यदि निरलसाः सोत्साहा निष्ठावन्तश्च स्याम, तर्हि यशोऽमृतं हस्तप्राप्यं भविष्यतीत्यस्माकं भावना। प्रथमं सर्वं निर्विघ्नमासीत्। द्रव्याभावेऽपि संस्था प्रतिष्ठामलभत। नैतिकबलमपि तया लब्धम्। परम् अग्रे तत्त्वबन्धनानि शिथिलीभूतानि। व्यक्तिगतस्वार्थवृत्तयो वृद्धिं गताः। अन्येऽपि व्यवसाया अस्मासु प्रविष्टाः। एतेनाचारविचारभिन्नता समुत्पन्ना। विवादाः प्रादुर्भूताः। पक्षाः सञ्जाताः। मत्सरः प्रवृद्धः। आयव्ययस्थितिः कठिनीभूता। स्वावलम्बनं, स्वार्थत्यागो, ध्येयनिष्ठा, सभ्यता सर्वेऽप्येते गुणा उपहासास्पदं प्राप्ताः। 'होळकर'नरेशदत्तसप्तशतरूप्यकमितं पारितोषिकमेतस्य निदर्शनम्।

संस्थाप्रवेशकाले मूलोद्देशस्तु मम बुद्ध्या एवमासीत्। ख्रिस्तधर्मप्रचारकपद्धत्या भारतीयैर्लोकशालाः किमर्थं न स्थापयितव्या इति विषयमधिकृत्य विधिव्यवहारशास्त्राध्ययनार्थं महाविद्यालयवसतिगृहे वसता मया 'आगरकर-करंदीकर-भागवत'महाशयैस्सह चर्चा कृता। स्वार्थत्यागेनैवायमुद्देशः सफलो भवेदिति तु सूर्यप्रकाश इव सुस्पष्टम्। सर्वैरेकमेव कार्यं

समानाधिकारेण श्रमविभागतत्त्वेन करणीयम् । वैयक्तिकलाभो हानिर्वा न द्रष्टव्या । यद्यपि कष्टतरस्तथाप्येष एव मार्गो ध्येयसफलतायाः इत्यत्र सर्वेषामैकमत्यम् । पुण्यपत्तनस्थमेकं लोकाग्रण्यं वयमेवं न्यवेदयाम " यदि पञ्चसप्ततिरूपकपरिमितं धनं वेतनरूपेण प्रतिमासं प्राप्नुयाम तर्हि वयं सर्वे आजीवितमध्यापनकार्यं कर्तुकामा भवेम । एतावान् द्रव्यसंग्रह आवश्यकः । यद्येवं स्यात्तर्हि अध्ययनमपि विनामूल्यं सम्भवेत् " इति । स लोकधुरीणोऽब्रवीत् । कार्ये समारब्धे जना द्रव्यदानाय अहमहमिकया पुरत आगमिष्यन्ति । नान्यथा । अनेनोत्तरेण नैराश्यं गतैरस्माभिर्निजोद्देशो न परित्यक्तः ।

अनेन समयेन ' विष्णुशास्त्रिचिपळुणकर'महाशया राजसेवां विहाय नूतनविद्यालयं स्थापयन्तीति वार्ता निशम्य तेभ्योऽस्माकं मनीषा निवेदिता । तैरपि स्वागतपूर्वकमात्मनोऽनुमतिः प्रदर्शिता । खिस्ताब्दस्य १८८० वत्सरस्य प्रारम्भे विद्यालयस्योद्घाटनं निश्चितम् । अत्रान्तरे ' करंदीकर-भागवतयो'श्चित्तं दोलाधिरूढं जातम् । अतश्चिपळुणकरमहाशयैः स्वनाम्ना एवैकं पत्रकं मुद्रितम् । स्तुतिवादं विनैव तस्मिन् पत्रके मूलोद्देशं प्रकटीकृत्य ज्ञानलाभं सुलभोपायेनाल्पमूल्येन च कर्तुमयं यत्नो भविष्यतीति ध्येयमपि कथितम् । शास्त्रिमहाशयैरेतत् साधु कृतम् । चलमतिस्तु मानवः । उक्तं च भगवद्गीतासु—

' चञ्चलं हि मनः कृष्ण ' इति ।

करंदीकर-भागवतमहाशयौ एतस्य निदर्शनम् । आगरकरमहाशया अपि ' डेकन कॉलेज'नाम्नि महाविद्यालये 'फेलो' इति प्राप्तं वरिष्ठस्थानं स्वीकृत्य वत्सरान्ते समागताः । तस्मात् १८८० संवत्सरे जानेवारीमासस्य प्रथमेऽह्नि शास्त्रिमहाशयः अहं च द्वौ एव आस्व । अनन्तरं नामजोशीमहाशयाः सङ्गताः । तेषां विषये विरुद्धं लोकमतमविगणय्य चिपळुणकरमहाशयैस्ते सदस्यत्वेन स्वीकृताः । मया 'वामनराव आपटे'महाशयाः संस्थासदस्यत्वस्वीकरणाय विज्ञप्ताः । प्रथमं तैरस्माकं विज्ञप्तिरवमानिता । परम् अन्यस्मिन् स्थले प्रभूतधनलाभपदमप्राप्य ते अस्मान् प्रति आगताः । अन्येभ्योऽधिकतरं वेतनं वयं तेभ्योऽदाम । आपटेमहाशयानां मनोरथस्तु

कमप्यन्यं व्यवसायं समकालमेव कृत्वा विपुलं धनमर्जयितव्यमिति । तेषामेवोपक्रमेण 'नामजोशी'महाशयानां 'स्टार'नामकवृत्तपत्रस्य नामान्तरं विधाय अस्माभिः 'मराठा' इति वृत्तपत्रम् आङ्ग्लभाषायां सम्पादितम् । १८८१ वत्सरारम्भे आगरकरमहाशयाः समागताः । चिपळुणकर-टिळक-नामजोशी-आपटे-आगरकरमहाशया इति वयं पञ्च एकत्र समागत्य एकं विद्यालयं, द्वे वृत्तपत्रे च समपादयाम । चिपळुणकरशास्त्रिणो मुख्याध्यापकपदं व्यभूषयन् । परम् आपटेमहाशयानां कृतेऽस्माभिरन्यत् 'सुपरिंटेंडंट'-इत्यधिकारस्थानं विनिर्मितम् । अत्रैव प्रथमं तत्त्वभिन्नता गोचरीभूता । सर्वेऽपि बहुकालं निरलसवृत्त्या कार्यमकुर्वन् । कर्मविभागोऽपि योग्यतानुसारतः कृतः । कश्चिन्मतभेदो जातः । कश्चिद्विवादोऽपि सम्भूतः । परं सर्वेषां पुरतो ध्येयं तु एकमेव 'विद्यादानम्' इति । तस्मिन् सर्वैरात्मनः प्रयत्नाः खिलीकृताः । तस्मान्न कलिप्रवेशः । कार्यानुरूपं सदस्येभ्यो न्यूनाधिकं धनमपि दत्तम् । आद्ये वर्षे चिपळुणकरमहाशयैर्मयाऽपि च एका कपर्दिकाऽपि न स्वीकृता । १८८२ वत्सरे माघमासे 'कोल्हापुरप्रकरणं' समुद्भूतम् । तेन वयं समीपतरं प्राप्ताः । लोकैरपि द्रव्यसाहाय्यं दत्तम् । समानाधिकारप्रभोऽथापि नोपस्थितः । अतोऽभियोगे जातेऽपि संस्था सङ्कटात् समुत्तीर्णा । अभियोगकाले केळकरमहाशयैस्सहास्माकं परिचयो जातः । 'माधवराव गोळे'महाशयाः १८८३ संवत्सरे सदस्या जाताः । परं १८८२ वत्सरे कारावासान्मुक्तयोरावयोः सत्कारवेलायामेव आपटेमहाशयाः स्पष्टमब्रुवन् 'वृत्तपत्रसम्बन्धं परित्यज्य पाठशालासूपयोक्ष्यमाणानि पुस्तकान्यहं लिखामि' इति । वृत्तपत्रसम्पादनं यद्यपि कार्यान्तरं तथापि संस्थायाः मूलतत्त्वानां पोषकं तत् । पाठ्यपुस्तकलेखनं धनलाभकरम् । परं तन्मूलतत्त्वविरुद्धम् । शिक्षणसमित्याः पुरतोऽपि आपटेमहाशयैः स्वनिवेदनपत्रे लिखितम् 'संस्थायाः आद्यतत्त्वम् एवमेव; यथा धर्मप्रचारकाः स्वार्थत्यागपूर्वकं धर्मप्रचारं कुर्वन्ति, तथा वयमपि स्वार्थनिरपेक्षं ज्ञानदानाय स्थाने स्थाने विद्यालयानुद्घाटयेम' इति ।

प्रथमं वर्षत्रयं विद्यालयस्य वृत्तपत्रयोश्च दृढीकरणे व्यतीतम् । तत्कृतेऽस्माभिरुपहासोऽपि सोढः । आयत्यां समागताः सदस्याः कथमेत-

ज्ञानीयुः । कोल्हापुरप्रकरणस्य ऋणं शेषमासीत् । ऋणकाले कलहा अपि न सम्भवन्ति । १८८४ वर्षे ' सर् जेम्स् फर्ग्युसन्'महाशयाः संस्थां द्रष्टुं समागताः । अनेन समयेन " आबासाहेब घाटगे-कागलकर "महाशयै-रुदारमनसा द्रव्यसाहाय्यं दत्तम् । राजप्रतिनिधये उद्देशकथनकाले एव-मुद्घोषितम् यदल्पवेतनं स्वीकृत्य महाराष्ट्रेषु विद्यालया महाविद्यालयाश्च स्थापनीया इति । संस्थाघटनायां सदस्यैः प्रतिमासमल्पवेतनं ग्रहीतव्यम् । विशेषप्रसङ्गे अधिकं ग्राह्यमिति निर्देशो वर्तते । सर्वाः सूचना मया पुरस्कृताः सर्वैः स्वीकृताश्च । उद्देशत्रयमेव । सर्वे सदस्या एकचित्तीभूय संस्थाकार्यमेव कुर्युः । व्यवसायान्तरेण न धनलाभमिच्छेयुः इति । एषा शिक्षणसंस्था शासनसंस्थायाः सम्मता । १८८५ वत्सरे फर्ग्युसनमहाविद्या-लयः प्रतिष्ठापितः । १८८९ हायनान्तं सर्वं कार्यं सुव्यवस्थितं जातम् । अल्पसुखानुभवानन्तरम् अस्माभिर्दारिद्र्यं तिरस्कृतम् । अधिकधनलाभ-वाञ्छा मनसि समुदपद्यत । सा नूतनसदस्यानधिकं बबाधे । तत्त्वनिष्ठ-संस्थापकानामल्पमतं जातम् । नूतनानां बहुमतम् । एतत् कलहनिदानम् । कलहे समुत्पन्ने कानि साधनानि केनोपयोजितानि इति विवादोऽप्रस्तुतः । प्रधानप्रश्नस्तु किमर्थं कलहाः समुत्पन्ना इति । वत्सरान्ते न्यूनाधिकद्रव्य-विषये कलहो जातः ।

१८८६ वत्सरे मुद्रणालयविषयको विवादः समुत्पन्नः । मुद्रणालयः ऋणमुक्तो नासीत् । अस्मासु केचन विनामूल्यमात्मनः सर्वं कालं मुद्रणकार्ये अयापयन् । अन्ये धनलाभार्थमन्यं व्यवसायं प्रारभन्त । वृत्तपत्रेषु प्रसिद्धिं गताः सामाजिकमतभेदाः कलहकारणमासन् । संस्थायाः विज्ञप्त्या मया आयव्ययनिरीक्षणं कृतम् । १८८६ वत्सरान्ते मुद्रणालयः वृत्तपत्रद्वयं तदर्थं जातं ऋणं च केळ्करमहाशयैरङ्गीकृतम् । आगरकरमहाशयैः परि-त्यक्तम् । मुद्रणालयव्यवस्थां कर्तुं ' हरि नारायण गोखले'महाशया मुम्बा-पुरीत आहूताः । परं साहाय्यदाने यद्यहं प्रतिशृणुयां तर्हि गोखलेमहाशया आगन्तुमैच्छन् । अतः केळ्करमहाशयैस्सह ममापि नाम सङ्गृहीतम् । तथापि गोखले-केळ्करमहाशययोः स्वतन्त्रः समयो जातः । मम समावेश-स्तस्मिन् न कृतः ।

मुद्रणालयस्य वृत्तपत्रद्वयस्य पृथक्करणेन कलहोऽन्ततां गमिष्यतीति तदा कल्पना । सर्वैरप्येषा व्यवस्था स्वीकृता । परं सामाजिकविषयकमतप्रदर्शनसाधनं नष्टमिति आगरकरमहाशयानां चेतसि महान् विषादः समुत्पन्नः । 'गोखले'महाशया इव यूयमपि स्वनामोल्लेखपूर्वकं लेखनं केसरिपत्रे मुद्रयत इति आगरकरमहाशया विज्ञप्ताः । परं वस्तु असमीचीनम् । भवतु । वृत्तपत्रं गृह्यतामित्युक्ते ऋणमस्वीकार्यमिति वदन्ति स्म । एतत् कथं संवदेत । अन्ततो गोखले-आगरकरमहाशयैः 'सुधारक'इति वृत्तपत्रं सम्पादितम् । एवं द्वयोः पत्रयोर्विग्रहे जाते तृतीयस्य प्रसूतिः ।

तस्मिन्नवसरे 'गण्डस्योपरि पिटकः संवृत्तः' । तदानीं केवलम् आपटेमहाशयाः शालोपयोगीनि पुस्तकानि समपादयन् । अधुना मुद्रणालयव्यवस्थापका गोखलेमहाशया अपि मनस्येयमकुर्वन् यदेकः संस्कृतकोशो मया सम्पादयितव्य इति । प्रथमं तैः आपटेमहाशयाः पृष्टाः । तैर्नेत्युक्ते मुम्बापुरीस्थः कोऽपि वैद्यमहाशयः पृष्टः । तेनापि आपटेमहाशयसम्मत्याऽऽत्मनः सम्मतिः प्रदर्शिता । आपटेमहाशयैरादावेव एको बृहत्संस्कृतकोशः समारब्धः । अधुना लघुकोशमत्सरेण तैरपि अन्यो लघुकोशः सम्पादितः । मुद्रणालयस्य शिक्षणसंस्थायाश्च पुनः कलहः समुत्पन्नः । मया मध्यस्थस्य भूमिका स्वीकृता । अतः आगरकरमहाशयैरुक्तम् 'यूयं आपटेमहाशयान् अद्विष्ट'इति । संक्षेपतस्तु मुद्रणालये पृथक् कृतेऽपि कलहो न नष्टः । तत्कारणं संस्थासदस्यैरङ्गीकृतमन्यकार्यम् । 'होळकर'नरेशदत्तसप्तशतरूपकमितस्य पारितोषिकस्य इयमेव कथा । अतोऽयं नियम आवश्यकः यत् संस्थासदस्यैरन्यथार्यं न करणीयमिति । स्वीकृतेऽन्यकार्ये प्राप्स्यमानद्रव्यं संस्थायै समर्पणीयम् इति । ख्रिस्तधर्मप्रचारकाणां संस्थासु एतदर्थमेवायं निर्बन्धः ।

शालोपयोगिपाठ्यपुस्तकविषये कलहो न जायेतेति बुद्ध्या अयं नियमः कृतः यत् प्रसिद्धिपत्रकेण पाठ्यपुस्तकानि आनेतव्यानि । तेषु यत् सम्मतं भवेत् तन्नियोक्तव्यमिति । परमस्मिन्नेव हायने गोखलेमहाशयानाम् 'अंकगणित'नामकं पुस्तकं सम्मतम् ।

संस्थासदस्यैः केवलं जीवनवेतनं ग्रहीतव्यमिति प्रथमं निश्चितम्। तद्वेतनं पञ्चसप्ततिरूपकपरिमितमासीत् । तदप्यग्रे रूपकशतं कृतम् । इतरेषामेव कृते इयं वेतनवृद्धिः कृता। आगरकरमहाशया अहं च चत्वारिंशद्रूपकानेव ग्रहीतुमैच्छाम। प्रथमं कतिपयदिवसान् तदपि वेतनमस्माभिर्न स्वीकृतम् । परम् अग्रे आगरकरमहाशयानां मतान्तरं जातम्। जीवनवेतनतत्त्वं परित्यज्य संस्थायाः सुस्थितिं विलोक्य वेतनं निश्चेतव्यमिति नूतनं तत्त्वमङ्गीकृतम् । प्रथमकृतस्वार्थत्यागस्यैतत् फलं किम् ? इति निर्दिष्टे पूर्वमपि युष्माकं शेषं वेतनं युष्माभिर्ग्रहीतव्यमित्यस्माकमुपहासोऽपि कृतः । अनेन प्रकारेण महान् कलहः समुत्पन्नः । संस्थासदस्यैर्विद्यालयाद्बहिः कथं वर्तितव्यम्, आयव्ययलेखनं कथं कर्तव्यम्, व्यवसायवर्गाः स्थापयितव्या न वा, आङ्ग्लदेशीयः प्राध्यापको महाविद्यालये नियोक्तव्यो न वा, एवमन्येऽपि बहवो वादविषया आसन्। ध्येयं तु इदमेव । येन केन प्रकारेण महाविद्यालयः प्रतिष्ठां लभेत। मूलतत्त्वानां हानिस्तु अप्रधाना ।

अतीते वर्षचतुष्टयेऽविरतमहं सन्धिं कर्तुं प्रयते। परं परिणामस्तु केवलं विवादः । विद्यालयाद्बहिः किमप्यन्यत्कार्यं सदस्यैर्न स्वीकर्तव्यमिति नियमः सम्मतः । तथापि गोखलेमहाशयैः सार्वजनिकसभायाः कार्यवाहपदं स्वीकृतम् । तत्पदं स्वीकर्तुं प्रथममहं विज्ञप्तः। परं मया तन्न स्वीकृतम्।

अन्ते संस्थायाः सभायां मद्विषयको निन्दाव्यञ्जकः प्रस्तावः कृतः । तेन संस्थायां ममास्तित्वमशक्यं जातम् । सर्वेषां मार्गे अहमेवैकः कण्टकः । परमाणुरिव मे दोषः पर्वतीकृत्य दर्शितः । अध्यापनकर्मण्यपि अयोग्योऽहमित्यपि कैश्चिदुक्तम् । एतादृशी यत्र स्थितिस्तत्र कथं, किमर्थं वा स्थातव्यम्? केचित् वदन्ति 'स्वार्थत्यागो नाम केवलं दम्भः । आन्तरः कोऽपि हेतुस्तु आत्मश्लाघा, आत्मप्रतिष्ठा' इति । परं तत्त्वभ्रष्टाः के इति कोऽपि मतिमान् विमृशतु । अन्यच्च । मूलतत्त्वविरुद्धं बहुमतं मन्तव्यं चाऽवमन्तव्यमित्यपि प्रश्न एव । बहुमते जाते संस्थात्याग आवश्यकः। युष्माभिस्तत्त्वानां परिवर्तनं विधीयते । परं तेषामपि परिपालनं न क्रियते। तत्त्वविरुद्धवर्तनं यथा युष्माभिः क्रियते तथाऽस्माभिरपि इत्यारोपो मयि क्रियते । सोऽप्यसत्य एव ।

ममापि केचन दोषा विद्यन्ते एव। वाक्शरैरहमन्यांस्ताडयामि। परं तत् तत्त्वप्रतिपादनार्थं संस्थाहितार्थं च। ममास्तित्वे सति संस्थायां यदि निरन्तरं कलहा एव भवेयुस्तर्हि मम संस्थापरित्यागः एव योग्यः। अद्य महाविद्यालयत्यागेन मया जीवितसर्वस्वं परित्यक्तमित्यहं मन्ये। परं नान्यागतिः इत्यलम्"।

सुविस्तरमेतत्त्यागपत्रम्। वादविषयस्तु मूलतत्त्वानि। एकं मूलतत्त्वमिदम् 'संस्थासदस्यैः सर्वकालं देहबुद्धिवल्लमर्पयित्वा–कायेन, वाचा, मनसा संस्थाकार्यं कर्तव्यम्। व्यवसायान्तरेण लब्धं धनं संस्थायाः। न सदस्यस्य' इति। एतत्तत्त्वविरुद्धा आपटे–गोखलेमहाशयाः। तत्त्वखण्डनं न केनापि कृतम्। लोकमान्यमतं न्यायतो युक्तमेवासीत्। परं लोकसत्तायुगे बहुमतेन किं न परिवर्त्यते। बहुमतस्याग्रे लोकमान्या अपि हताशाः। अतः संस्थापरित्याग एव वरम्। स त्यागो लोकमान्यैः कृतः। संस्थापकानामुद्देशस्तु एषः– 'जेसुइट'लोकानां धर्मसंस्था इवेयं शिक्षणसंस्था स्वार्थनिरपेक्षं लोकशिक्षणकार्यं विदध्यात् इति।

अनया शिक्षणसंस्थया शासनसंस्थायाः द्रव्यसाहाय्यं स्वीकार्यं न वा इत्यप्येको वादविषयः। द्रव्यसाहाय्यग्रहणे वादो व्यर्थः। शासनसंस्थायाः धनं प्रजानामेव। लोककल्याणार्थं शासनसंस्थातः प्रजाधनस्यादानं न दोषावहम्। तस्य स्वीकारेण कियती स्वातन्त्र्यहानिः स्यादित्येव प्रश्नः। स्वीकरणमप्रधानम्। ज्ञानदाने यदि स्वातन्त्र्यहानिः स्यात्तर्हि साहाय्यस्वीकरणमनुचितमेवेति लोकमान्यानामभिप्रायः।

संक्षेपेणात्रापि इदमेव दृश्यते—

'अतिपरिचयादवज्ञा संततगमनादनादरो भवति।'

प्रारम्भे प्रथमश्रेण्यां वर्तमानाः केचन विद्वांसः समानोद्देशेन लोकहितबुद्ध्या, स्वयंस्फूर्त्या किमपि राष्ट्रकार्यं कर्तुकामा एकत्र समागताः, समान-

ध्येयपूर्तये विद्यालयं तथा महाविद्यालयं स्थापयित्वा विद्यादानेन, मुद्रणालयं संस्थाप्य वृत्तपत्रसम्पादनेन, धनसम्पादनयोगं परित्यज्य स्वार्थत्यागेन, कार्यान्तरं संन्यस्य कर्तव्याचरणेन, निष्ठापूर्वकं लोकशिक्षणकार्यं कंचित्कालं विधाय, परस्परगुणावगुणज्ञाने समुत्पन्ने, प्रकृतिभिन्नत्वात् राजकीयसामाजिकधार्मिकविषयेषु मतभेदे तीव्रे जाते, मिथः अनादरेण कायेन वाचा मनसा च सुदूरमपयातौ । उक्तं च—

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥

---

# ३ प्रजागरपर्व

## १ क्राफर्डमहाशयः

'डेक्कन एज्युकेशन सोसायटी'संस्थापरित्यागे किं कर्तव्यमिति लोकमान्यैर्मनसि निश्चितं दृश्यते । राष्ट्रियसभाकार्यमासीत् । परं तत्कार्यं प्रथमं शिथिलतां गतम् । मुम्बईप्रदेशपरिषदोऽधिवेशनं पुण्यपत्तने जातम् । तदपि न विशेषकार्यप्रवणमभूत् । अतस्तस्याः कार्यवाहपदे टिळक-नामजोशी-गोखले इति त्रयो युवानो नियुक्ताः ।

अन्यदेकं प्रकरणं समुद्भूतम् । क्राफर्डनामकः कश्चित् प्रशासको न्यायाधिकारिभ्यः उत्कोचं स्वीकरोति स्म । उत्कोचदाता ग्रहीता च उभावपि दोषार्हौ दण्डयतां गतौ । उत्कोचदानापराधस्वीकारविषये शासनसंस्थया न्यायाधिकारिभ्यः प्रतिश्रुतम् 'यदि न्यायाधिकारिणः सत्यं कथयेयुस्तर्हि ते दण्डार्हा न भवेयुः' इति । अतः शासनसंस्थाभिवचनानुसारतो न्यायाधिकारिभिरात्मनो दोषोऽङ्गीकृतः । अतो न ते दण्डनीया इति केसरिपत्रे लोकमान्यैः प्रतिपादितम् । उत्कोचदानदोषेऽङ्गीकृते न्यायाधिकारिणामधिकारस्थानं नष्टम् । तेषां सेवावेतनमप्यवरुद्धम् ।

क्राफर्डनामा प्रशासको बुद्धिमानुदारमनस्कः सुदासीनः । परम् उत्कोचग्रहणशीलः । रत्नागिरिभूमिभागं स आत्मनो जन्मभूमिममन्यत । 'कोंकणी'भाषा तेन लीलयाऽऽत्मसात् कृता । विनाऽऽयासं स तस्यां वक्ति स्म । फडकेनामकस्य कस्यचिद्धनिकस्य गृहे स बहुवारं गत्वा तत्र यथेच्छं लेह्यपेयचोष्यखाद्यपदार्थानुपभुज्य प्रत्यागच्छति स्म । एतादृशोऽस्य स्वभावः । आङ्ग्लदेशीयप्रमदाभ्यः स मौक्तिकहारोपायनं यच्छति स्म । उत्कोचस्वीकारेणैतत्सर्वं कर्तुं स समर्थोऽभूत् ।

'पॅड्से'नामकः क्राफर्डमहाशयस्य परिचितः कश्चित् पुरुषः उत्कोचदानग्रहणपरीक्षणे शासनसंस्थया नियुक्तः । आत्मनो निर्देशात्तेन निःपक्षपातबुद्ध्याऽनुष्ठितः । न्यायाधिकारिभिरात्मनः उत्कोचदानदोषोऽङ्गीकृतः । तेभ्यः क्षमाऽपि प्रतिश्रुता । हणमंतरायनामा कश्चित् पुरुषः अनेनापराधेन

दण्डितः। अधिकारभ्रष्टः क्राफर्डमहाशयः पलायने मतिं कृत्वा मुम्बापुरीं गतः। परं राजपुरुषैस्तत्र स निगृहीतः। तस्यापराधपरीक्षणेऽभियोगमकृत्वा एका समितिर्नियुक्ता।

लोकमान्यैर्न्यायाधिकारिणां पक्षः स्वीकृतः। 'सीतारामपंत चिपलुणकर –श्रीधर विठ्ठल दाते–ज्ञानप्रकाशवृत्तपत्र'मित्यादिभिरन्यः पक्षोऽनुगृहीतः। समित्या क्राफर्डमहाशयो दोषान्मुक्तः। परं स्वकीयपुरुषैर्लोकेभ्यः ऋणं स्वीकृतमितिदोषेण स राजसेवावृत्तितो दूरीकृतः। एवम् उत्कोचदाता अपराधी, ग्रहीता च निरागाः! न्यायाधिकारिणोऽपराधस्वीकारेणाभियोग-भीतिग्रस्ता अभूवन्। तेभ्योऽभयं दातुमेका लोकसभा निमन्त्रिता। तस्यां लोकमान्यैर्न्यायाधिकारिणां पक्षः सम्यक् प्रतिपादितः। इदमेव लोकमान्यानां सभायां प्रथमं व्याख्यानम्।

अनन्तरं शासनसंस्थाकृतप्रस्तावेन केचन न्यायाधिकारिणोऽधिकारपदे पुनः प्रस्थापिताः। केचन पदभ्रष्टाः। अस्मिन् प्रकरणे लोकमान्यैराङ्ग्लदेशेऽपि लोकसभायां परिप्रश्नविषये प्रारब्धः समुद्योगोऽवसराभावे विफलो जातः। कालान्तरेण शासनसंस्थादृष्टिरपि सौम्या बभूव। गच्छता कालेन कैश्चिन्न्यायाधिकारिभिः 'रावसाहेब,रावबहादूर' इति सम्मानपदमपि लब्धम्।

## २ 'केसरि–मराठा'–वृत्तपत्रद्वयम्

शिक्षणसंस्थापरित्यागानन्तरं जीवनार्थं कश्चन धनोत्पादनोद्योगो लोकमान्यैः समाश्रयणीय इति सम्प्राप्तम्। अतस्तैः ऋणं कृत्वा एका कर्मशाला स्थापिता। तस्यां कार्पासबीजानि तूलादपाकुर्वन्ति। एको विधिव्यवहाराध्यापनवर्गः समारब्धः। १८८९ वत्सरादारभ्य १८९७ हायनं यावदेतदेव द्रव्यलाभसाधनं लोकमान्यानां जीवनायासीत्। तदनन्तरं ग्रन्थिज्वरकाले स विधिव्यवहारवर्गो विरामं प्राप्तवान्।

अस्य विधिव्यवहारवर्गस्य सञ्चलने सहायका आवश्यकाः। तेभ्यो मासिकवेतनं दत्त्वा लोकमान्याः प्रतिमासं सार्धशतरूपकान् प्राप्नुयम्। काले काले 'विष्णुपंत गोखले-विष्णु अनंत पटवर्धन-दिनकर हरि वाकनीस-लक्ष्मण रघुनाथ गोखले-नरसिंह चिंतामण केळकर'प्रभृतयो विधिव्यवहार-

शिक्षणे लोकमान्यानां सहायकाः । मनुयाज्ञवल्क्यादिप्रणीतस्मृतिशास्त्रपारङ्गतानां तेषां तद्विषयकव्याख्यानश्रवणार्थमन्येऽपि नागरिकाः समायान्ति स्म ।

अन्यदुपजीविकासाधनं द्रष्टुमेतत्कारणं यदेतावत्कालपर्यन्तं केसरिपत्रस्य सम्पूर्णस्वामित्वं न लोकमान्यानाम् । केसरिपत्रं तैः सम्पादितम् । मराठापत्रं केळ्करमहाशयैः । मुद्रणालयकार्यावेक्षणं गोखलेमहाशयानाम् । बहुग्राहकं केसरिपत्रम् । न तथा मराठापत्रम् । तत्तु सदैव व्ययकारि । मुद्रणालयकार्यं लाभकरम् । ऋणग्रस्तमेतत्सर्वम् । पत्रद्वयं मुद्रणालयश्च सर्वं केनाप्येकेन एव ग्राह्यमिति सर्वेषां मतम् । पण्डिता रमादेवीप्रकरणे पुनरेकदा केसरि-मराठापत्रयोर्लेखने विसङ्गतिर्दृष्टा । अत एवैतन्निश्चितम् । एकतः केसरिमराठावृत्तपत्रद्वयं सप्तसहस्ररूपकाणाम् ऋणं च । अन्यतो मुद्रणालयः चतुर्दशसहस्ररूपकाणाम् ऋणम् । कोऽपि विभागः केनापि ग्रहीतव्यः । अन्योऽप्येकः समयोऽवर्तत । मुद्रणालयं यो ग्रहीष्यति तेन नान्यद्वृत्तपत्रं सम्पादनीयम् । गोखलेमहाशयानां मनस्येवं महाभीतिरासीत् यल्लोकमान्या मुद्रणालयं गृहीत्वाऽन्यत् पत्रं सम्पादयिष्यन्ति । तथाभूते आगरकरमहाशयानां ' सुधारक'पत्रमिव केसरिपत्रमपि विलयं गमिष्यतीति । लोकमान्यसम्पादितं केसरिपत्रमतीव लोकप्रियं जातम् । वृत्तपत्रसम्पादने गोखलेमहाशयानां न तथा शक्तिर्यथा लोकमान्यानाम् । अतोऽयं समयः । स्वमतप्रचाराय महत्साधनं वृत्तपत्रमिति लोकमान्यैर्निश्चित्य केसरि-मराठावृत्तपत्रद्वयं तथा सप्तसहस्ररूपकाणामृणं स्वीकृतम् । एवं समये जाते वृत्तपत्रयोः सम्पूर्णं स्वामित्वं लोकमान्यानां जातम् ।

लेखनविषयिणी पूर्वोल्लेखिता विसङ्गतिरप्यन्यद्विभागकारणमासीत् । किंचिद्विस्तरेणान्यत्र तन्निरूपयिष्यते । पण्डिता रमादेवीप्रकरणे केसरि-मराठापत्रयोर्विवादः । प्राध्यापककेळ्करमहाशयैर्मराठापत्रे एवं लिखितम् " शारदासदनविद्यालयेऽध्ययनं कुर्वतीभिर्बालिकाभिरपि ख्रिस्तधर्मो न स्वीकृत । तस्माद्बालिकानां शिक्षणहानिः किमर्थं कर्तव्या ? न कोऽपि लाभोऽनया विरुद्धटीकया । परं तासां मातापितरौ अनया टीकया ताः पाठशालां न प्रेषयिष्यन्ति " इति । केसरिपत्रमुद्दिश्य एतदुपदिष्टम् ।

सनातनमतानुसारतः शारदासदनेऽध्यापनं कर्तव्यमित्यपि तैः कथमपेक्ष्यते। न कुर्वन्ति ते ईषदपि द्रव्यसाहाय्यम् । रमादेवीमुद्दिश्यैतत् सूचितम् " शारदासदनसंचलनार्थं प्रतिष्ठितविदुषामेकं मण्डलं स्थापयितव्यम् । तथैव धर्माचारपालने कियत् स्वातन्त्र्यं बालिका लभन्ते, ख्रिस्तधर्मप्रचारे तासां कियान् सम्बन्धः, इत्यपि उद्घोषितव्यम् " इति ।

अस्योपरि केसरिपत्रेण स्पष्टं लिखितम् "शारदासदनसंस्थां ख्रिस्तधर्मप्रचारिणीं मत्वा ये केचन स्वबालिकाः शिक्षणार्थं तत्र प्रहितुमिच्छन्ति तैरेवं मनसि निधाय तथा कर्तव्यम्" इति । इदं लेखनमन्ततो विधिवशात् सत्यं जातम् । शारदासदनसंस्था ख्रिस्तधर्मप्रचारिण्यासीत् इति तु सूर्यप्रकाश इव स्पष्टमभूत् ।

अनेन कारणेनैतन्निश्चितं यत् केसरि-मराठापत्रयोर्विरोधः परिहर्तव्य इति । अथ स परिहर्तव्यश्चेत् प्रथमनिर्दिष्टविभागोऽवश्यो भवति । एवं 'केसरि-मराठा' इति वृत्तपत्रद्वयं सम्पूर्णतया लोकमान्यैर्ऋणसहितं स्वामित्वेन स्वीकृतम् । मुद्रणालयो गोखलेमहाशयैः ।

## ३ विवाहकालमर्यादा

लोकमान्यकृतान्दोलनानि कानिचिन्नूतनानि कानिचित् पूर्वकालविवादविषयकाणि । सर्वाणि तानि लोककल्याणदृष्ट्या अपरिहार्याणि । लोकमान्यास्तेषु सर्वेषु यशस्विनोऽभूवन्निति तेषां वैशिष्ट्यम् । यावतांशेन प्रतिपक्षः प्रबलः, दुर्बलश्च स्वपक्षः, तावतांशेन लोकमान्यानां तेजो, धैर्यं, कुशाग्रबुद्धित्वं, प्रत्युत्पन्नमतित्वमित्यादयो गुणाः प्रकर्षेण प्रकाशन्ते । साम्प्रतमेते विषया ऐतिह्याः । परं तत्कालीनसमाजस्य सम्यग् ज्ञानाय तथा लोकमान्यानां गुणदर्शनाय कर्तृत्वविकासाय चैतेषां ज्ञानमावश्यकम् । ईदृशैरेव प्रसङ्गैर्लोकमान्या मान्यतां गताः । एते ते केचन विषयाः ( १ ) विवाहकालमर्यादानियमः ( २ ) 'चहा'प्रकरणम् ( ३ ) रमादेव्याः शारदासदनम् ( ४ ) हिन्दुधर्मिणां महम्मदधर्मिणां च कलहः ( ५ ) राष्ट्रियसभामण्डपप्रकरणम् इति ।

'मलबारी'श्रेष्ठिना आङ्ग्लभूमौ प्रसिद्धिं नीते कार्यक्रमे एते विषया आसन् ( १ ) द्वादशवर्षीयया विवाहितकन्यया सह सम्भोगे कृते भर्ता

विधिना दण्डनीयः। (२) बलेन पतिगृहवासाय भर्त्राऽभियोगो न कर्तव्यः। (३) कन्यायाः पुत्रस्य वा विवाहो जनकेन कदाऽपि कार्यः। अस्मिन् विषये ज्ञातिजनैर्न किमपि वक्तव्यम्। (४) विवाहे शैशवे जाते मिथः अप्रिययोः पतिपत्न्योर्विवाहभङ्गः सम्मतो भवेत् इत्यादयो विषयाः।

कार्यक्रमपत्रिकास्थितप्रथमविषये एव महान् संघर्षः समजायत। विवाहकालमर्यादायाः इदमेवान्दोलनम्। तेन अन्यप्रदेशेष्वपि लोकमान्यां लब्धकीर्तयोऽभूवन्। 'बाव्लासाहेब नातू'प्रभृतिसनातनधर्मवादिभिरेका सभा निमन्त्रिता। तस्याः मतं जनानां सामाजिकरूढिषु तथा धर्मविषयेषु शासनसंस्थया परिवर्तनं न कार्यम् इति।

कैश्चित् सुधारकैरुपसूचनाः प्रहिताः। रूढिषु वा धर्मविषयेषु वा शासनसंस्थाकृतपरिवर्तनमसम्मतं तेषाम्। परं कालोचितसुधारणा आवश्यकी। सूचनानामाशयस्तु अयम् (१) आषोडशवर्षात् बालिकानां विवाहो न कार्यः, विंशतिवर्षात् प्राक् बालानाम्। (२) चत्वारिंशत्समाभ्यः ऊर्ध्वं पुरुषेण विवाहो न कार्यः। यदि कार्यः स्यात् तर्हि विधवया सहैव। (३) मद्यपाननिषेधनियमाः। (४) वरदक्षिणारूढिः नियमेन प्रतिषेद्धव्या इति।

शासनसंस्थायै निवेदनं प्रेषणीयमिति सभायां निश्चितम्। सभायां महान् विवादः समजायत। सुधारकैरन्या सभा निमन्त्रिता।

विधिमण्डले विधिप्रस्तावः 'स्कोबल'महाशयैः पुरस्कृतः। पूर्णद्वादशवर्षाणि विवाहकालमर्यादा। तत्समर्थने कारणद्वयं दत्तम्। एकं व्यभिचारप्रतिषेधः। अन्यत् बाल्ये सम्भोगनिषेधश्च। धर्माचरणे विना हस्तक्षेपं भारतबालिकानां सम्यग्रक्षणं भवेदित्यपि तैः प्रतिपादितम्। 'रमेशचन्द्र मित्रैः' विरोधः प्रदर्शितः। नूल्करमहाशयैः सम्मतिः प्रदर्शिता। राजप्रतिनिधिना कथितम् 'सम्राज्ञ्याः आज्ञापत्रके प्रतिश्रुतानां वचनानामनेन न भङ्गो न वा धर्माचरणे हस्तक्षेपः। तस्मात् विधिप्रस्तावो विचारार्हः' इति।

केसरिपत्रे लोकमान्यैः प्रदर्शितः राजप्रतिनिधिभाषणदोषः। द्वादशवर्षात् प्राक् ऋतुमत्याः वध्वाः गर्भाधानसंस्कारोऽनेन न सम्भवति। एते संस्कारे विधिभङ्गः। अतएव धर्महानिः। अयमेव धर्माचारे हस्तक्षेपः। 'स्कोबल'महाशयेन कथितम् 'प्रतिज्ञातं यत्र कन्याः द्वादशवर्षात् प्राक्

ऋतुमत्यो भवन्ति'। तेनैवाधारेण केसरी गर्जति 'प्रतिशतं पञ्च भर्तारः कारणं विना अनेन विधिना दण्डार्हा भवन्ति। राजनियमाद्धर्मशास्त्रं बलीयः'। तेलंग-नूलकरादयः वदन्ति 'परित्याज्या रूढयः'। 'भाण्डारकर'महाशयास्तदेव शास्त्राधारेण प्रतिपादयन्ति। तेषां खण्डनं कष्टतरम्। तथापि स एव लोकमान्यानां बुद्धिप्रकर्षनिकषः। महताऽऽदरेण क्षमां याचित्वा लोकमान्या लिखन्ति—

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥

एतदवतरणं दत्वाऽग्रलेखे लोकमान्यैर्भाण्डारकरमहाशयानां खण्डनं कृतम्।

प्रथमः प्रश्नः विवाहकालस्य। यद्यपि सूत्रकालात् प्राक् प्रौढवधूनां विवाहा जातास्तथाऽपि सूत्रकालानन्तरमेषा विवाहकालमर्यादा सङ्कोचं गता। ऋतुप्राप्त्यनन्तरं वर्षत्रयं कन्यया प्रतीक्ष्यताम्। तदनन्तरं सा स्वयमेव वरं विन्देत। नायमस्यार्थः यद् ऋतुकालात्पूर्वं कन्यानां विवाहा मा भूवन्। कन्यानुरूपवरसम्भवे अष्टवर्षदेशीयानां कन्यानामपि विवाहः शास्त्रविहितः।

द्वितीयः प्रश्नः गर्भाधानकालस्य। अस्मिन् विषये भाण्डारकरमहाशयानां प्रधानाधारः आश्वलायनगृह्यपरिशिष्टम्। तद्गतवचनानामेभिरर्थविपर्यासः कृतः। गर्भाधानसंस्कारः प्राजापत्यहोमश्चैकस्मिन् एव काले कर्तव्यौ। भाण्डारकरमहाशयाः प्रतिपादयन्ति 'एतौ द्वौ विधी पृथक् स्तः'। अयमेव तेषां मिथ्याग्रहः। यदि द्वादशवर्षेभ्यः प्राक् कन्या ऋतुमत्यो भवन्ति तर्हि प्रथमे ऋतौ कर्तव्यः संस्कारो द्वादशवर्षेभ्यः प्रागेव कर्तव्यः। धार्मिकोऽयं विधिः शास्त्रविहितः। अनेन विधिनियमेन एतादृशः पतिः अपराधी भविष्यति। अयमेव धर्माचरणे हस्तक्षेपः। शोभनो दृष्टान्तो लोकमान्यैर्दत्तः—"अग्निरथानां वेलापत्रके लिखितम् 'एकोऽग्निरथः पुण्यपत्तनात् भौमवासरे प्रस्थाय भौमवासरे सायं मुम्बापुरीं गमिष्यति'। अस्मिन् वाक्ये द्विर्निर्दिष्टो भौमवासरः एक एव। न अन्यसप्ताहे वर्तमानः। तस्मात् एकतो धर्मलोपः। अन्यतः शासनसंस्थानियमभङ्गः। नियमभङ्गात् शास्त्रभङ्गो बलीयान्" इति।

एवं स्वमते केसरिपत्रेण प्रकटीकृते सनातनपक्षीया धर्ममार्तण्डास्तथा सुधारकपक्षीयधुरीणाः सभासु अनुकूलं प्रतिकूलं भाषमाणा निजपक्षसमर्थनमकुर्वन् । वङ्ग-विदर्भ-महाराष्ट्रादिदेशविभागेषु अस्मिन् विधिप्रस्तावविषये महान् सङ्घर्षोऽभूत् । स्थाने स्थाने धर्मशास्त्रसभासु एष एव विदुषां निर्णयो यदेष विधिप्रस्तावः शास्त्रविरुद्धः ।

सुधारकैः पुण्यपत्तने एका सभा निमन्त्रिता । प्रवेशद्वारे निवेदने स्वनाम लिखित्वा शासनानुकूलैरेव सभा प्रवेष्टव्या इति नियमेन सभास्थानं जनः प्रविष्टः । अल्पसङ्ख्योऽयं जनः । बहिश्च महान् जनसम्मर्दः । अस्यामेवावस्थायां निवेदनं वाचयित्वा सभा विसर्जिता । परं तत्रापि महान् कलहः सम्भूतः । स कलहः कंचित् कालं विवादविषयोऽभूत् ।

अन्येद्युः पञ्च पुरुषा राजपुरुषैर्निगृह्याभियोगेन न्यायालयं नीताः । परं प्रमाणाभावेन ते सर्वे न्यायाधीशेन दोषान्मुक्ताः ।

अनुकूलप्रतिकूलमतप्रदर्शने प्रतिकूललोकमतमधिकम् । तदुपेक्ष्य शासनसंस्थया विवाहकालमर्यादाप्रस्तावो विधिमण्डले सम्मतः कृतः ।

एवं दूरीभूतेऽस्मिन् वादविषये मुम्बापुर्यामन्यो वादविषयः समुत्पन्नः । भाण्डारकरमहाशयानां द्वादशवर्षदेशीयकन्यायाः पतिर्विवाहादूर्ध्वमचिरात् दुर्दैववशात् पञ्चत्वं गतः । 'पागंदीकरमहाशयेन सह तस्याः पुनर्विवाहो भाण्डारकरमहाशयैः कृत. । अनेन पुनर्विवाहेन प्रक्षुब्ध. सारस्वतसमाजः सभामेकां निमन्त्रितवान् । तस्यां सभायां धर्मगुरुणा दास्यमाननिर्णयः सर्वैर्मन्तव्य इति सूचिते केनापि आततायिना तरुणेन सभाध्यक्षं प्रति पादत्राणं प्रक्षिप्तम् । प्रक्षुब्धश्रोतृगणेन सभा उद्ध्वस्ता कृता ।

एवमुभयपक्षीयजनैर्मर्यादाऽतिक्रमणं कृतम् । राजशासननिर्बन्धेन सामाजिकसुधारणा कर्तव्या इति सुधारकप्रणीतं मतं लोकरुचये नाभूत् । अस्मिन् विषये लोकमान्या अधिकं दोषार्हा इति सुधारकाणां मतम् । यतस्तैः प्रतिपादितम् ' सामाजिकविषये लोकमतपरिवर्तनमावश्यकम् । राजशासनं लोकक्षोभाय कल्पेत ' इति । स्वमतसमर्थने अयं पादत्राणप्रक्षेपणप्रसङ्गः सुधारकाणां प्रभूतमुपकारको जातः ।

## ४ 'चहा'पानम्

'चहा'पानम्। अहो श्रुतिमनोहरोऽयं शब्दः। अस्य श्रवणमात्रेणैव केषांचिन्मुखं लालायते। साम्प्रतं प्रतिगृहं वर्तमानः साधारणोऽयं विषयः। प्रभाते उत्थाय किं कर्तव्यम् इति प्रश्ने तस्य प्रथममुत्तरम् 'मुखप्रक्षालनं कृत्वा, अकृत्वाऽपि प्रथमं चहापानं कर्तव्यम्। पश्चात् प्रातःस्मरणम्' इति। 'प्रातःकाले लघुलघूत्थाय अग्निं (स्टोव्हं) प्रज्वाल्य, तदुपरि चहापात्रं निधाय, तस्मिन् किञ्चित् शर्करां निक्षिप्य, समीपे चहाचूर्णं दुग्धपात्रं च संस्थाप्य, मुखं प्रक्षालयेत्' इति चहापानस्मृतिः। कतिवारं चहापानं कर्तव्यमित्यस्मिन् विषये अनियमोऽस्तु। शान्ति-विश्रान्ति-आराम-विश्राम-सदनादिषु खाद्यपेयादिपदार्थविक्रयस्थानेषु जना यथारुचि, यथाशक्ति, यथाकालं चहापानं कुर्वन्ति। कश्चिन्नरः कस्यापि जनस्य दर्शनार्थं गच्छेत्तर्हि तस्य स्वागतार्थं चहापानं प्रथमम्। अध्ययनं कुर्वाणाश्छात्राः परीक्षाकाले रात्रौ जाग्रतः प्रतिमुहूर्तं चहापानार्थं व्याकुलीभवन्ति। काचित् गृहिणी कार्यार्थमन्यगृहं गच्छेत् चेत् गमनकाले सौभाग्यतिलकार्थं यथा कुङ्कुमं दीयते तथा स्वागतार्थं चहापूर्णपात्रमपि दातव्यमिति नियमः। कुपिताय कान्ताय प्रसादयितुकामया कान्तया चहापूर्णं पात्रं प्रदेयम्। प्रक्षुब्धयोर्दम्पत्योरपत्याभावे चहापानेन सम्मीलनं भवति। शिष्टसम्प्रदाय एषः। प्रतिष्ठास्थानमेतत्। कार्यसम्पादनसाधनमिदम्। कार्यफलनिष्पत्तेः प्रसादोऽयम्। यज्ञीयसोमरसस्य नूतनावतारोऽयम्। देवपूजनार्थं समागताय श्रोत्रियाय पूजनान्ते चहादानेन यजमानः पूर्णकामो भवति। बहुविस्तृतमेतच्चहाशास्त्रम्।

लोकमान्यकालेऽपि चहापानस्य एतादृशं माहात्म्यं दृश्यते। धर्मविषयेषु समाजविषयेषु अनेन प्रतिष्ठास्थानं सम्पादितम्। लोककार्यधौरेयेषु अनेन चहापानेनाकस्मादेव महान् सङ्घर्षः समुत्पन्नः।

'गोपाळराव जोशी'नामा कश्चिन्नरो विनोदमूर्तिरिति प्रथित आसीत्। परम् उपद्रवकारी तस्य विनोदः। समाजोपकारकं तस्य कृत्यं तु एवम्। तेन स्वपत्नी 'आनन्दी'नाम्नी वैद्यकशास्त्राध्ययनार्थम् 'अमेरिका'देशं प्रहिता। तयाऽपि तत्र महता कष्टेन 'एम. डी.' इति पदवी सम्पादिता।

भाषणे आचरणे च विक्षिप्तोऽयं पुरुषः । हिन्दुधर्मोपहासाय तेनैकदा खिस्तधर्मं स्वीकृत्य पुनः हिंदुधर्मपद्धत्या भालप्रदेशे सुदीर्घं चन्दनतिलकं कृत्वा खिस्तधर्मप्रचारकैः सह विवादः कृतः । अनेन तस्य विक्षिप्ताचरणेन न हिन्दुधर्मी न वा खिस्तधर्मी एतादृशी तस्यावस्था जाता । सनातनधर्मिणस्तथा सुधारकान् स भीरूनमन्यत ।

अथैकदा अस्य जोशीमहाशयस्य मनसि सुशिक्षितसुधारकाणां परिहासार्थैका लोकविलक्षणकल्पनाऽस्फुरत् । खिस्तधर्मप्रचारकैः सह तस्य दृढपरिचय आसीत् । अतः स खिस्तधर्मप्रचारकाणां विद्यालयस्य मुख्याध्यापकमुखेन सुधारणाप्रियेभ्यः सुशिक्षितेभ्यः कस्यचित् खिस्तधर्मप्रचारकस्य व्याख्यानश्रवणार्थं निमन्त्रणमदापयत् । आङ्ग्लभाषाप्रिया 'माधवराव रानडे लोकमान्यटिळक'प्रभृतयः सर्वे सुधारकाः ज्ञानलोलुपाः 'पञ्चहौद-मिशन'-नामिकायां खिस्तधर्मप्रचारिण्यां संस्थायामुपस्थिता अभूवन् । उपस्थितेषु प्रतिष्ठितेषु न केनापि किञ्चिदपि अशङ्क्यत । व्याख्यानावसाने सर्वेषामग्रतः अपूपसहितं चहापात्रं प्राशनार्थं निहितमासीत् । अधुना किं कर्तव्यमिति प्रश्नः श्रोतृगणस्य मनसि समुद्भूतः । उक्तं च भगवद्गीतासु--

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।

इति । केचिदैच्छन् 'यद्येतच्चहापात्रं पुरतः स्थापितं न स्यात्तर्हि वरम्' । अन्येऽमिलपन् 'पुरतः स्थितमेतच्चहापात्रं यदि केनाप्यपनीतं स्यात्तर्हि वरम्' । अपरेऽचिन्तयन् 'यद्येतच्चहापात्रमस्माभिर्न स्वीकृतं तर्हि एते धर्मप्रचारका अस्मानुपहसेयुः' इति । एवं स्थिते कानिचिच्चहापात्राणि रिक्तान्यभवन् । कानिचित्तथैवातिष्ठन् । परम् 'गोपाळराव जोशी'महाशयेन 'पुणे वैभव'नामके वृत्तपत्रे 'पञ्चहौद-मिशन'संस्थायां व्याख्यानश्रवणायोपस्थितानामनुपस्थितानामपि सुधारकाणां नामानि मुद्रितानि । चहापानमपि तत्राभूदिति सन्दिग्धोल्लेखः कृतः ।

अनया पुणेवैभववृत्तपत्रस्थवार्तया महाननर्थः सम्भूतः । सनातनधर्माभिमानिना 'नातू'प्रभृतीनामेकः पक्षः । माधवराव रानडेप्रभृतीनां प्रति-

ष्ठितसुधारकाणामन्यः पक्षः । बुद्धिमन्तो दक्षिणा अपि लोकमान्या अस्मिन् चहापानप्रकरणे जोशीमहाशयेन वञ्चिताः ।

धर्मप्रकरणमिदं निर्णयार्थं श्रीमच्छङ्कराचार्यपादपीठं गतम् । सनातनपक्षीय'नातु'प्रभृतीनां कृपादृष्टिः लोकमान्यानामोष्ठश्मश्रुराजिषु । परम् आचार्यपादनियुक्तपण्डितसमित्या लोकमान्या न प्रायश्चित्तार्हा इति निर्णीतम्। यतस्तैः पूर्वमेव काशीक्षेत्रे प्रायश्चित्तं गृहीतमिति प्रमाणपत्रं दर्शितम् । अतस्ते दोषान्मुक्ताः । रानडेप्रभृतिभिरष्टभिः स्वयमेव ज्ञाताज्ञातदोषनिरसनार्थं प्रायश्चित्तं ग्रहीतव्यमिति निर्णयः कृतः । कैश्चिदेष आदेशोऽनुष्ठितः । कैश्चित्तिरस्कृतः । राजसत्तापुरस्काराभावे धर्माधिकारिणामधिकारा दुर्बलाः । अतः शुक्लकृष्णाविति द्वौ पक्षौ समुद्भूतौ । सनातनपक्षीयाः शुक्लपक्षेन्दुवत् शुक्लाः, शुद्धाः यतस्तैः पञ्चहौदमिशनसंस्थायां पदमपि न निहितम् । व्याख्यानश्रवणलोलुपा ये तत्र गतास्ते कृष्णा अभूवन्, यतस्तैर्धर्मभ्रष्टकरं चहापानं कृतम् । कृष्णाः शुक्लैर्बहिष्कृताः ।

अस्मिन् विवादे आगरकरमहाशयैर्लिखितम् " वैदिकधर्माभिमानिनो लोकमान्या न केवलं ख्रिस्तधर्मप्रचारकाणां गृहे चहापानं कुर्वन्ति, अपितु अग्निरथविश्रान्तिस्थाने यवनैः पाचितमोदनमपि भक्षयन्ति " इति । अयं नवीनो दोषारोपो लोकमान्यैः सपद्येव निराकृतः । महदेतत् प्रकरणं जातम् अन्ते प्रमाणाभावे आगरकरमहाशया लोकमान्यान् क्षमामयाचन्त ।

अनेन चहापानप्रकरणेन लोकमान्यानां गृहजीवनं कष्टतरमभूत् । श्राद्धादिकर्मणे ब्राह्मणा लोकमान्यगृहं नागच्छन्ति । उत्सर्जनोपाकरणविधये न कोऽपि विप्रः आचार्यत्वं स्वीकरोति । कन्यापुत्रयोर्विवाहोपनयनकाले न कोऽपि द्विजः पौरोहित्यमङ्गीकरोति । एतानि सङ्कटानि कथमपि निरस्तानि । परं भोजनादिविषये पाकनिष्पत्तये सूदा अपि दुर्लभा जाताः । विवाहादिमङ्गलकार्येषु समागतानां मित्रबान्धवानां स्वागतं भोजनं विना कथं स्यादित्ययं कठिनः प्रश्नः । सर्वाण्यपि एतानि सङ्कटानि महता धैर्येण लोकमान्यैः विसोढानि । जनानां विवाहादिसंम्बन्धाः कष्टसाध्याः । विवाहितवधूनां पितृगृहगमनं दुर्लभं जातम् । पुरोहितवर्गस्य पौरोहित्यं द्विधा भूतम् ।

रानडेमहाशयैश्चहापानदोषनिरासार्थं प्रायश्चित्तं स्वीकृतम् । तदपि लोकसङ्ग्रहार्थम् । वस्तुतस्तु बिन्दुमात्रोऽपि चहारसस्तैर्नास्वादितः । लोकमान्यैः सर्वप्रायश्चित्तं गृहीतम् । परं न केवलचहापानदोषनिरसनार्थम् । तैरपि अनेन लोकसंग्रहः साधितः । धार्मिकसामाजिकमिश्रस्वरूपेऽस्मिन् चहापानविषये लोकमान्यैः केसरिपत्रे रानडेपक्षः शास्त्रवचनैः प्रमाणीकृतः । पुण्यपत्तने महदान्दोलनं जातमनेन सामान्यविषयेण । गच्छता कालेन लोकक्षोभकरोऽयं विषयः स्मृतिशेषं गतः ।

## ५ पण्डिता रमादेवी

शारदासदनम् । कीदृशं सात्त्विकं, यथार्थं, श्रुतिमनोहरं खल्विदं नाम । परं राजसप्रकृतिभिः ख्रिस्तधर्मप्रचारकैः शिक्षणप्रसारमिषेण हिन्दुधर्मिणां धर्मान्तरार्थमस्य सदनस्य दुरुपयोगः कृतः । सनातनधर्माभिमानिनां सुधारणाप्रियसुधारकाणां चेदं शारदासदनं विवादविषयं जातम् । पुण्यपत्तने महदान्दोलनमनेन कृतम् । जनानां सावधानार्थं केसरिपत्रे लोकमान्यैः स्पष्टमेव लिखितम् ।

किमिदं शारदासदनम् ? केन तत्संस्थापितम् ? कथमनेन धर्मान्तरप्रचारः कृतः ? इति विषयोऽस्मिन् प्रकरणे द्रष्टव्यः ।

'मंगळूर'नगरवासिनो 'डोंगरे'कुलोत्पन्नस्य 'अनंत'शास्त्रिणः एका कन्या रमानाम्नी । शैशवे एव तस्या जनकोऽन्तकातिथिः सञ्जातः । तद्दुःखदुःखिता रमाजनन्यपि अल्पेनैव कालेन पतिदर्शनसुखार्थं दिवं गता । कनिष्ठभ्रात्रा श्रीनिवासेन सह भैक्ष्येणोपजीविकां कुर्वाणा रमा देशत्यागं कृत्वा ग्रामाद्ग्रामं परिभ्रमन्ती 'कलकत्ता'नगरीं सम्प्राप्ता । श्रीनिवासः पितुः सकाशात् स्वल्पं शास्त्राभ्यासं कृतवान् । बुद्धिमती रमाऽपि संस्कृतसाहित्ये व्युत्पन्ना । पितृसान्निध्यात् सहस्रशः श्लोकान् सुरवेण गायन्ती रमादेवी गच्छता कालेन यौवनपदवीं समारूढा ।

महाराष्ट्रिया काचित् पण्डिता प्रमदा प्रतिभासम्पन्ना कलकत्तानगरीं समागताऽस्ति । तस्या वैदुष्येण विद्वांसोऽपि जनाः साश्चर्या बभूवुरिति वार्ता मुम्बापुरीमागता । पण्डितायाः रमादेव्याः गौरवार्थं कलकत्तानगर्यां-

मेका सभा निमन्त्रिता । व्याख्याने रमादेव्या तत्कालोचितस्त्रीशिक्षणबाल-विवाहादिविषयाश्चर्चिताः । गीर्वाणभाषायां प्रश्नोत्तराणि जातानि । दैव-दुर्विपाकात् रमादेवीभ्राता श्रीनिवासस्तत्र पञ्चत्वं गतः । अतो रमादेवी 'आसाम'प्रदेशं गता । तत्र 'विपिन विहारीदास मेधावी'नाम्ना केनापि यूना तस्याः पाणिग्रहणं कृतम् । तस्मात् रमादेव्याः मनोरमानाम्नी एका कन्या जाता । परं वर्षद्वयात् प्रागेव रमादेवीपतिः 'मेधावी'नामा दिवं गतः ।

अनया दुःखपरम्परया भृशं दुःखिता रमादेवी प्रथमं मुम्बापुरीं गता, अनन्तरं पुण्यपत्तनं समायाता । तस्यास्तेजसा, यौवनेन, वैदुष्येण, वैधव्येन च मुग्धाः समाजधुरीणाः स्त्रीशिक्षणायेदं महन्निधानं सम्प्राप्त-मित्यमन्यन्त । सनातनधर्मिणस्तु अन्यथा व्यमृशन् ।

पुण्यपत्तने रमादेवी आङ्ग्लभाषामधीतवती । ख्रिस्तधर्मप्रचारकाणां सहवासेन साहाय्येन च आङ्ग्लदेशं गत्वा तत्रस्थस्त्रीशिक्षणसंस्थानां सुस्थितिदर्शनेन च विमोहिता रमादेवी कन्यया सह धर्मान्तरं कृतवती । ततः सा 'अमेरिका'देशं गता । तत्र ख्रिस्तोपदेशकसंस्थानां साहाय्यं सम्पाद्य ख्रिस्तधर्मप्रसाराय सा मुम्बापुरीमागत्य तत्र शारदासदनं स्थापितवती । प्रथमं विधवाः, पश्चान्निराधाराः स्त्रियः सदने प्रवेशं लभेरन्निति तयोद्घोषितम् । शारदासदने वासः शिक्षणम् इत्यादि सर्वं विना मूल्यम् । यदि काचित् विधवा धनं दद्यात् तर्हि वरम् । यदि न दद्यात्तथापि न हानिः । सदनस्य मन्त्रिमण्डले रानडे-भाण्डारकरादयः समाजनेतारः सुधारका अवर्तन्त । परं सामान्यजना अस्मिन् विषये साशङ्का आसन् ।

'अमेरिका'देशे 'न्यूयॉर्क'नगरे मुद्रितेन 'ख्रिश्चन वुइकलि'नामकेन साप्ताहिकेन वृत्तपत्रेणैका वार्ता उद्धृता । "शारदासदने साम्प्रतं सप्त विधवाः शिक्षणार्थमागताः । तासु द्वाभ्यां ख्रिस्तधर्मे भक्तिः प्रदर्शिता" इति । इमां वार्तामुल्लिख्य केसरिपत्रेण सूचितम् । "शारदासदनं यद्यपि स्त्रीशिक्षणार्थं वर्तते तथापि प्रसङ्गेऽप्रसङ्गे यदि तत्र ख्रिस्तधर्मविचाराः प्रतिपादिताः स्युर्तर्हि तेषां नैसर्गिको विपाको धर्मान्तरस्वीकरणम्" इति ।

वृत्तपत्रेष्वयं विषयः सर्वैश्चर्चितः । द्रव्यसाहाय्यं मा भवतु । प्रति-ष्ठितसमाजधुरीणानां नैतिकसाहाय्यमावश्यकमित्यमन्यत रमादेवी । अतो

मन्त्रिमण्डलसूचितानि कानिचिद्बन्धनानि तया स्वीकृतानि ।

अस्मिन्नेव काले 'गोपाळराव जोशी'नामकस्य धर्मान्तरप्रकरणं जातम् । अस्योल्लेखः पूर्वं कृत एव । केसरिपत्रेण लिखितम् "येन पुरुषेण धर्मान्तरं विना पृथ्वीप्रदक्षिणा कृता, येन व्याख्यानेषु आर्यधर्मतत्त्वानि प्रतिपादितानि स धर्मान्तरं कर्तुं प्रवृत्तो भवेदिति वयं न विश्वसिमः । पुरा पितृपितामहादीनां दोषेण वा स्वयं वा यैर्धर्मान्तरं कृतं तैस्तद्धर्मं परित्यज्य पुनः हिंदुधर्मः प्रवेष्टव्य इत्यनेन सूचितं भवति" इति ।

धर्मान्तरस्यास्य परिणामः शारदासदनसंस्थायां जातः । 'हॅमूलिन'-नामिका काचित् प्रचारिका पुण्यपत्तनमागता । सुधारकाग्रणीनां साहाय्यं तया शारदासदनाय सम्पादितम् । पुण्यपत्तनेऽप्येका शारदासदनशाखा स्थापिता । तस्याः मन्त्रिमण्डले रानडेमहाशया आसन् । तेषामेतन्मतम् "को दोषो यदि विधवानां शिक्षणसंस्था खिस्तधर्मप्रचारकैः सञ्चालिता ? शिक्षणेन ताः कल्याणमेव पश्येयुः । पण्डितया रमादेव्या यदि धर्मान्तरं कृतं तर्हि तस्या अध्यापनेन किं विपरीतं भविष्यति" इति ।

केसरिपत्रेण लिखितम् "अनेन मन्त्रिमण्डलशिरसि जनवञ्चनदोषः पतिष्यति । ज्ञानदानमिषेण खिस्तधर्मप्रचारकान् तथैव तेषां साहाय्यकान् वयं हिंदुधर्मस्य हिन्दुसमाजस्यापि शत्रून् मन्यामहे" इति । रमादेव्याः भगिनी कृष्णादेवी एकस्मिन् पत्रे लिखति स्म 'सदनस्थितानां नारीणां तुलसीपूजने वा देवालयगमनेऽपि वा प्रतिषेधः उपवासादिव्रतेष्वपि निषेधः' इति ।

लोकमान्यैः केसरिपत्रे परिच्छेदद्वयमुद्धृतम् । एकस्मिन् परिच्छेदे इदं वाक्यमासीत् "रमादेव्याः मनसि एवमासीत् 'हिंदुविधवाः शिक्षयित्वा यत्र खिस्तधर्मसुखं मयाऽनुभूतं तदुपदेष्टुम् एताः शिक्षितविधवाः प्रेषितव्याः" इति । अन्यस्मिन् परिच्छेदे रमादेव्या लिखितम् "खिस्तधर्मप्रसारं सुकरं कर्तुमस्माकं प्रथमं कर्तव्यं तु इदमेव यत् हिंदुस्त्रीणां सामाजिकबन्धनानि विच्छिद्य ताभ्यः स्वातन्त्र्यप्रदानम् । अतो मया द्रव्य-साहाय्यं याचितम्" इति ।

एवं निखिलं प्रकारं लोकमान्या कठोरशब्दैर्वर्णयन्ति " हिन्दुधर्मं भस्मसात् कर्तुं नेच्छति रमादेवी। सानन्दं शिशुजनपूर्णं गृहं विलोक्य तत्राग्निं प्रक्षिप्य सा सदयं केवलं प्रार्थयते 'हे प्रभो, मानवेन कर्तुं यच्छक्यं तन्मया कृतम्। अतः परं सर्वं त्वदधीनम्" इति। प्रार्थनाकाले रावबहादुर-महाशयाः पटहं निनादयितुं सज्जाः सन्ति। घृतकुम्भं तप्ताङ्गारं च एकस्मिन् स्थले स्थापयित्वा नरो ब्रूते 'भोः परमेश्वर, न मे दोषो यदीदं घृतं द्रवीभविष्यति। ईदृशी रमादेवी। बालिकानां धर्मान्तरदोषो रानडेमहाशयानां शिरसि आपतेत्' इति। अग्रे केसरी गर्जति " शासनसंस्थायाः वा ख्रिस्तधर्मप्रचारकसंस्थायाः वा पाठशालाभ्यो रमादेव्याः शारदासदनं दुष्टतरं यतः शासनसंस्था धर्मशिक्षणे उदासीना। ख्रिस्तधर्मप्रचारकाः स्पष्टमेव निजोद्देशं कथयन्ति। परं रमादेवी स्त्रीशिक्षणावगुण्ठनेन आत्मनो धर्मान्तरोद्देशं साधयितुमिच्छति" इति।

अन्ततो रानडे-भाण्डारकरादयो मन्त्रिमण्डलस्य त्यागपत्रमदुः। आगरकरादयोऽप्यमन्यन्त 'शारदासदनं ख्रिस्तधर्मस्य प्रचारस्थानं वा कर्मशाला वा' इति। धर्मान्तरे महान् दोष इति सिद्धमभूत्। अस्मिन् काले दश वा द्वादश वा स्त्रियो रमादेव्या ख्रिस्तधर्मेण दीक्षिताः इति वार्ता प्रसृता। अमेरिकाखण्डस्थख्रिस्तधर्मप्रचारकैः सह कृतो द्वादशवर्षसमयोऽपि एतेन कालेन पूर्णः। शारदासदनेन 'मुक्तिसदनम्' इति नामान्तरं कृतम्। रमादेव्यपि पुण्यपत्तनं परित्यज्य 'केडगाव'नामकं ग्रामं गता। एवं तेजस्विनी, मेधाविनी, मधुरभाषिणी, कर्तृत्वशालिन्यपि रमादेवी राजसबुद्ध्या आङ्ग्लभाषाशिक्षणविमूढा सत्सङ्गाभावात् संस्कारहीना भारतस्य तथा आर्यधर्मस्य शत्रुर्जाता। अवितथं जातं लोकमान्यकृतं भविष्यम्। एतादृशी दूरदृष्टिर्लोकाग्रणीनाम्।

## ६ हिन्दु-यवनसंक्षोभः

खण्डप्रायो भरतखण्डः। प्राचीनकाले अत्र बहूनि राज्यान्यासन्। भारतदेशमभितो वर्तमानानां हूणशकयवनानां धनकनकसम्पन्नेऽस्मिन् देशे सामिलाषा दृष्टिपाताः। अतीतेषु वत्सरेषु न्यूनाधिकवर्षसहस्रपर्यन्तं

हिंदुधर्मिणो माहम्मदाश्चात्र निवसन्ति । तेषु परधर्मिषु कतिचिद्राज्यलोभाकृष्टा अत्रागत्य नृपतयोऽभूवन् । त्रिचतुःशतसंवत्सरपर्यन्तं यथा दिल्लीप्रान्ते यवनानां राज्यं तथा दक्षिणस्यां दिश्यपि केचन यवनराजान इतस्ततो राज्यान्यशासुः । हिंदुधर्मिणां माहम्मदानां च तत्त्वज्ञानं भिन्नम्, आहारविहाराद्याचारा अपि भिन्नाः ।

त्रिशतसंवत्सरेभ्यः प्राग्दक्षिणस्यां दिशि महाराष्ट्रेषु महदुत्थानं सम्भूतम् । तस्य विपाको महाराष्ट्रदेशे गोब्राह्मणप्रतिपालकशिवछत्रपतीनामधिराज्यम् । ततः प्रभृति हिंदुधर्मिणां महम्मदधर्मिणां च धर्मविषयकाः कलहाः । छत्रपतिराज्ये महम्मदधर्मिणां प्रार्थनामन्दिराणि सुरक्षितान्यासन् । तेभ्योऽग्रहारा अपि दत्ताः । परं महम्मदधर्मिणः प्रकृत्या तामसा । गोवधविषये तथा सवाद्यप्रस्थानसमारम्भे सदैव तेषां कलहाः । अनन्तरमाङ्ग्लभूपतीनां राज्यं जातम् ।

लोकमान्यकाले भारतदेशे दक्षिणस्यामुत्तरस्यां च दिशि संक्षोभाः समुत्पन्नाः । पुण्यपत्तने समुत्पन्ने संक्षोभे लोकमान्यानां न कोऽपि सम्बन्धः । संक्षोभान् समुत्पन्नेषु अभियोगेषु तेषां नामापि न श्रूयते । परं कलहोत्पन्ने राजकीयान्दोलने लोकमान्यानां नाम प्रामुख्येन विराजते । अतः प्रथमं महम्मदधर्मिणां तथा सुधारकाणामपि शत्रुस्थानीया लोकमान्याः ।

१८९३ संवत्सरे प्रभासतीर्थे 'ताबूत'विषये महान् संक्षोभः समुत्पन्नः । सज्जना असज्जनाः तापसाः तीर्थयात्रिकाः शरीरेषु तैलं निक्षिप्य यवनैर्वह्निना भस्मसात् कृताः । प्रक्षुब्धा भयग्रस्ता जना अस्य प्रकरणस्य निर्णयार्थमधिकारिणं गताः । परं तत्र न केनापि किञ्चिदपि श्रुतम् । आङ्ग्लाधिकारिणामेषा व्यवस्था ।

मुम्बापुर्यां गुर्जरदेशीयैरेका परिषन्निमन्त्रिता । प्रभासपत्तनं तेषां पवित्रं स्थानम् । अतो न्यायार्थं तैः प्रार्थितम् । महम्मदधर्मिभिरपि एकस्यां सभायां स्वजनरक्षणार्थं प्रस्ताव कृतः । परं सभायां जातानि आवेशपूर्णव्याख्यानान्येव जनानां धर्मभावनामुद्दीपयन्ति । माहम्मदधर्मगुरुभिर्मुम्बापुर्यां तथाऽन्यानपि प्रदेशान् दूताः प्रेषिताः । उद्देशस्तु क्षोभविस्तारो महान् भवेदिति ।

मुम्बापुर्यां १८९३ संवत्सरे ऑगस्टमासे "जुम्मा मशीद"नामकात् प्रार्थनामन्दिरात् बहिरागत्य महम्मदधर्मिभिः समीपस्थे शिवालये आक्रमणं कृतम्। रक्षापुरुषसङ्घेन तेषां प्रतिरोधः कृतः। परम् इदमाक्रमणं केवलं पूर्वसूचना। प्रार्थनामन्दिरे काष्ठदण्डसङ्ग्रहः पूर्वमेव कृत आसीदिति पश्चात् कृतेनाभियोगेन निर्णीतम्। दण्डहस्ता यवना हिन्दुधर्मिणां घातार्थं प्रार्थनामन्दिरान्निर्गताः। "भेंडीबझार-कामाठीपुरा-ग्रँटरोड"प्रभृतिषु प्रमुखस्थानेषु महान् संक्षोभः समजायत। हिंदुधर्मिणां देवालयाः भ्रष्टाः। देवतानां मूर्तयः शतशः खण्डिताः। हिन्दुधर्मिणो जीवघातं हताः।

अन्यस्मिन्नहनि हिन्दुधर्मिभिरपि स्वसंरक्षणार्थं दण्डहस्तैर्महदाक्रमणं कृतम्। दिनद्वयमेतज्जातम्। रक्षापुरुषाणां प्रतिरोधोऽपर्याप्तः। अशीतिमिताः पुरुषाः हताः। सार्धत्रिशतमिता नराः प्रहारैर्जर्जरीकृताः। वित्तं चञ्चलं, जीवितं क्षणभङ्गुरमित्यनुभूतं जनैः। अग्नियन्त्रगुलिकाभिः संक्षोभो निरुद्धः। सहस्रादूर्ध्वं नरा निगृहीताः।

वृत्तपत्रेषु उभाभ्यामपि स्वसमर्थनं कृतम्। उपशान्ते संक्षोभे रक्षापुरुषाधिकारिभिः समाजधुरीणानां परिषन्निमन्त्रिता। सभायामुभयपक्षनेतृणां राजमार्गेण सञ्चलनं निश्चितम्। एके प्रथमसभानिमन्त्रकान् दूषयन्ति। अपरे गोरक्षणस्यान्दोलनं निन्दन्ति। अन्ये माहम्मदानामज्ञानं दोषार्हं मन्यन्ते। परं रक्षापुरुषैस्तथा व्यवस्था न कृता यथा क्षुद्रेणापि कारणेन संक्षोभो न सम्भविष्यति इति वक्तुं न कोऽप्यधृष्णोत्। तत्कार्यं केसरिपत्रेण कृतम्। लोकमान्या लिखन्ति " यवना अत्याचारान् कर्तुं धृष्णुवन्ति इत्यस्य मूलकारणं शासनसंस्थाया उपेक्षा। आङ्ग्लदेशीयाः स्पष्टमेव ब्रुवते, 'यवनेभ्यो हिन्दुधर्मिणां रक्षणं भवति इत्यत्र मूलकारणम् आङ्ग्लानामत्रोपस्थितिः।' एभिर्वचोभिर्माहम्मदा विमृशन्ति 'आङ्ग्ला अस्मत्पक्षीयाः।' विधिमण्डले राजप्रतिनिधिस्तु हिन्दुधर्मिणः प्रतिनिधीनेवोपदिशति। महम्मदधर्मिणामेकोऽपि प्रतिनिधिस्तत्र नास्ति। केसरिपत्रं ब्रूते 'अयमेव पक्षपातः। शासनसंस्था यवनानुत्सङ्गे उपवेशयति, अन्यान्दूरीकरोति। एवं कदाऽपि न भाव्यम्। अन्यथा स्वसंरक्षणाय हिन्दुधर्मिणामपि दण्डग्रहणमावश्यकं भवेत्' इति।

अन्येषां प्रचारः एवंविधः । 'हिन्दुधर्मिणो यवनकृतानत्याचारान्न सहन्ते । दोषोऽयं तेषाम्' इति । उभयपक्षधुरीणैरात्मनो निरीक्षका नियोक्तव्या इति शासनसंस्थाया आग्रहः । संक्षोभस्यादिकारणम् अज्ञजनाः । शासनसंस्था पक्षपातं न करोति इत्यज्ञजनानां संशयनिवृत्तिः शासनसंस्थया प्रथमं कर्तव्या । तदभावे प्रमाद एव एषः शासनसंस्थायाः । तं निर्दिश्य लोकमान्यैः राजप्रतिनिधये सूचितम् 'निःपक्षपातित्वविषये अधिकारिणः एव प्रथममुपदेष्टव्याः' इति । एवं शासनसंस्था, हिन्दुधर्मिणस्तथा महम्मद-धर्मिण इति त्रयः पक्षाः समुद्भूताः । शासनसंस्था पक्षपातं करोतीति सुधारका अप्यवदन् ।

ब्रह्मदेशे देवालयसमीपे गोवधो न स्यादिति नियमः । अतो यवनानां संक्षोभः । अजिमगडविभागे हिन्दुधर्मिणां निवासस्थानेषु कुत्रापि गोवधस्य न प्रतिषेधः ।

पुण्यपत्तने एकस्यां सभायां यवनधर्मगुरुणा व्याख्यातम् 'हिन्दु-धर्मिणामाचारेण यवनाः क्षुब्धा भवन्ति । अतः संक्षोभः । अनेन भाषणेन सुधारका अधिकारिणो वा न कुप्यन्ति । परं यदि लोकमान्या अवदन् 'महम्मदधर्मिणामपराधेन संक्षोभा उत्पद्यन्ते' तर्हि ते दोषार्हा भवन्ति । कथमयं न पक्षपातः ।

'येवले'नगरे संक्षोभोऽजायत । तत्रापि यवना मदोद्धताः । अधि-कारिणस्तेषामुत्साहं वर्धयन्ति । 'मुम्बई टाइम्स'पत्रेणापि एतदर्थकं लिखितम् ' सर्वे ते दोषार्हाः' इति ।

पुण्यपत्तने एष संसर्गः सम्प्राप्तः । एकस्यां निशीथिन्यां सञ्चलन-समारम्भ आसीत् । स स्थगितोऽभूत् । परं कैश्चिद्भक्तजनैराग्रहेण परम्परारक्षणाय प्रधानसमारम्भः कृतः । संक्षोभभयं तु सदैवासीत् । परं न किमप्यनिष्टं सञ्जातम् ।

'मिर्झा आयासअली बेग'नामकः कश्चिच्छासनसंस्थाधिकारी 'महा-बळेश्वर'क्षेत्रे कृष्णानद्याः पवित्रं प्रभवस्थानं गत्वा कान्यकुब्जब्राह्मणोऽह-मिति असत्यमुक्त्वा अनुज्ञां विना देवालयं प्रविष्टः । तत्र समागताः केचन जनास्तमजानन् । अतो न्यायालयेऽभियोगः कृतः । क्षमायाचनानन्तरं स रूपकशतं दण्डितः ।

श्रावणमासे पञ्चम्यां तिथौ पुण्यपत्तने नागदेवस्य सञ्चलनोत्सव आसीत् । हिन्दुधर्मिणो महम्मदधर्मिणश्चैकत्र मिलित्वा प्रस्तावमकुर्वन् 'यथापूर्वं परम्परया समागतेन नियमेन वर्तितव्य'मिति । परम् अधिकारिभिराज्ञापत्रेणोद्घोषितम् 'प्रार्थनामन्दिराणामग्रतः पश्चात् च चत्वारिंशत् पदानि यावत् सर्वाणि वाद्यानि तूष्णीं भवेयुः' इति । अतो नागरिका नागदेवप्रतिमां त्यक्त्वा गृहं गताः । महम्मदधर्मिणामाक्रमणस्य दुराग्रहः । रक्षापुरुषसंस्थया कृता नियमा अपि अव्यवहार्याः । तेष्वेको नियम एवमेव यद् महम्मदधर्मिणां प्रार्थनामन्दिरस्य समन्तात् नक्तंदिवं कदाऽपि वाद्यवादनस्य प्रतिषेधः । हिन्दुधर्मिणां देवालयस्य समन्तात् केवलं प्रवचनकाले एव निषेधः । अपरो नियमो 'रक्षापुरुषा यदा वाद्यवादनं प्रतिषिध्यन्ति तदा वाद्यानि न वादनीयानि' इति । आश्चर्यावहमेतत् । लोकमान्या वदन्ति स्म 'अल्पसंख्याकैरन्यधर्मिभिः बहुसंख्याकेषु हिन्दुधर्मिषु कति निर्बन्धा निधातव्याः ? सर्वं हिन्दुधर्मिभिः सोढव्यम् । अन्यैः सर्वमाक्रमणीयम्' इति ।

योग्योऽयं समयो हिन्दुसङ्घटनायेति मत्वा गणेशोत्सवस्य कुटुम्बनिष्ठं स्वरूपं संरक्ष्य तस्मै सामाजिकस्वरूपं दातुं लोकमान्याः प्रायतन्त । उद्देशस्तु हिन्दुयवनसङ्घर्षे अखिलहिन्दुधर्मिणः एकत्र समागत्य निर्भयमनसा स्वाधिकारान् स्थापयितुं प्रवर्तेरन्निति ।

अस्मिन् संवत्सरे पुण्यपत्तने बहुभिर्हिन्दुधर्मिभिः 'ताबुत'समुत्सवान् परित्यज्य स्वधर्मविहितं गणपतिपूजनं महता प्रेम्णा समुत्साहेन च कृतम् । केसरिपत्रे लोकमान्याः सानन्दमलिखन् "अल्विदोच्चारणेनैतावन्तं कालमपवित्रीभूता रसना गजाननामघोषेण पुनः परिशुद्धा जाता ।

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।'

इति भगवतः श्रीकृष्णस्य वचनं लोकैराचर्यते" इति ।

श्रीगजाननस्य नामघोषेण समाप्तप्राये गणपत्युत्सवे त्रयोदश्याः रात्रौ राजमार्गेण गच्छन्तमेकं मेलापकं प्रार्थनामन्दिरस्य समीपे दण्डहस्ता महम्मदधर्मिणोऽभ्यपतन् । यवनैर्वाद्यानि भग्नानि । मेलापकः उद्ध्वस्तः

कृतः। दण्डेन भृशं ताडिता. 'तात्यासाहेब नातूमहाशया:' प्रहारैरुग्णसंज्ञा अभूवन्। हिन्दुधर्मिभिरपि प्रार्थनामन्दिरं प्रविश्य दण्डैर्यवना अनुगृहीताः। अनन्तचतुर्दशीदिवसे गणपतिमूर्तीनां प्रस्थानसमारम्भे रक्षणार्थं नियुक्तेषु रक्षापुरुषेषु सत्सु द्वित्राः मूर्तयो यवनैर्दैवा भग्नाः। अस्य नैसर्गिको विपाकः क्वचित् हिन्दुयवनयोर्दण्डादण्डि युद्धम्। हिन्दुधर्मिभिः स्वसंरक्षणार्थं गृहीता यष्टयो रक्षापुरुषैर्हस्तेभ्योऽपहृताः। तेन रक्षापुरुषा विश्वासभूमयो नाभवन्। परेऽहनि संक्षोभे जाते अनपराधिनो जना रक्षापुरुषैर्निगृहीताः। यवनैर्भृशं ताडिता 'नातू'महाशया अपि तेष्वासन्। परं मूर्तिभञ्जकानामेकोऽपि रक्षापुरुषैर्न निगृहीतः। अभियोगे कृते सर्वे निगृहीता जनाः 'जेकब'महाशयैर्न्यायाधीशैः प्रमाणाभावाद्दोषान्मुक्ताः। तथाऽपि आङ्ग्लवृत्तपत्रसम्पादकैर्न्यायाधीशस्याभियोगनिरीक्षकैः सह मतभेदो जातः इत्यसत्या वार्ता प्रसारिता। एतस्य निषेधो न्यायाधीशैः स्वयमेव कृतः।

एतेष्वभियोगदिवसेषु सत्यप्रियैर्न्यायाधीशै'र्जेकब'महाशयैर्नैकमपि स्वकीयं पत्रमुद्घाटितम्; न वा कस्यापि दर्शनं स्वीकृतमिति श्रूयते। अतो दोषेणाक्षिप्ताः सर्वे जना दोषान्मुक्ताः। परं रक्षापुरुषा निग्रहकाले विविधैः प्रकारैः कथमुपद्रवन्ति इत्यभियोगे साक्षिणां रक्षापुरुषाणां परीक्षणे स्पष्टमभूत्। सुमहानस्य नैतिकः परिणामो जातः। राजप्रतिनिधिना कारणं विना पुण्यपत्तनस्थब्राह्मणवर्गः स्वभाषणे कोपाग्निना दग्धः। अतस्तेन क्षमायाचनं कर्तव्यमिति स्पष्टमाह्वानं लोकमान्यैः केसरिपत्रे दत्तम्। परं तत् कथं स्वीकृतं भवेत्? आयत्यां जातेषु 'लॉर्ड हॅरिस'महाशयस्य भाषणेषु तस्य परिणामो जातः। क्षुद्रकारणेन सन्तप्ता यवना अन्ते निजप्रमादं ज्ञास्यन्त्येवेति सत्यापेक्षा सत्याऽभूत्।

'वाई'नामके क्षेत्रे गणेशोत्सवे एको विचित्राभियोगो जातः। 'द्वार'नामिका एका तत्र जनरूढिः। 'द्वार'नाम भाद्रपदमासे उत्सवसमये केचन बालाः देवदर्शनार्थं वाईक्षेत्रात् बहिः समीपस्थं ग्रामं गत्वा प्रत्यागच्छन्ति। तदा ग्रामस्था जनास्तान् समारम्भपूर्वकं क्षेत्रमानयन्ति। रक्षापुरुषाणां वाद्यविषयका नियमाः सर्वत्र समानाः।ताननुसृत्य प्रार्थना-

मन्दिरसमीपे सर्वैर्वाद्यवादनं स्थगितव्यम् । तथैवात्र कृतम् । परम् अकस्मादेकेन पुरुषेणोत्साहभरात् कांस्यतालं निनादितम् । भयङ्करोऽयमपराधः । केवलं वादको दण्डं प्राप्नुयादिति युक्तम्, परं शासनसंस्थाऽपि वादक इव अतीवोत्सुका । तया एकादशप्रतिष्ठितनागरिका अभियोगेन दण्डिताः । अभियोगकर्ता 'दुल्लेखां'नामा रक्षापुरुषाधिकारी । अनुज्ञादायकः उपप्रशासको 'रँड्'महाशयः ।

घटं भिन्द्यात् पटं छिन्द्यात् कुर्याद्रासभरोहणम् ।
येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥

इति सुभाषितवचनानुसारतः प्रसिद्धपुरुषावेतौ महाराष्ट्रदेशे ।

महम्मदधर्मिण एवापराधिन इत्येकेन प्रशासकेन स्वयमनुभूतम् । अतः शासनसंस्थाया अप्येष निर्णयः । तथाऽपि तस्याः पक्षपातः । अस्योदाहरणं 'धुळे'नाम्नि नगरे दृष्टम् । अनंतचतुर्दशीदिवसे गणेशमूर्तीनां प्रस्थानसमारम्भे आदावेव संक्षोभहेतुना एकत्रमिलिताः महम्मदधर्मिणो लगुडपाषाणखण्डादिसामग्रीसहिताः प्रार्थनामन्दिराद्बहिरागताः । तत्रस्थः प्रशासकः सुसज्जः 'क्युमिन्'नामकस्ताननुनेतुं प्रवृत्तः । परं तमेव निगृह्य ताडयितुं प्रवृत्तेषु यवनेषु रक्षापुरुषैरग्न्यस्त्रेण गुलिकाप्रक्षेपणं कृतम् । अस्मिन् प्रकरणे हिन्दुधर्मिणां न कोऽपि सम्बन्धः ।

संवत्सरद्वयं वृत्तपत्रेषु विवादा जाताः । उत्तरप्रत्युत्तराणि सञ्जातानि । लोकमान्यैः कृतं निदानं निर्दोषमासीत् । अन्ये लोकधुरीणा अपि तदेवामन्यन्त । परं वक्तुं न कोऽपि समर्थः । केवलं लोकमान्या एव भयरहितमानसेन स्वमतम् असन्दिग्धाक्षरैः केसरिपत्रे प्रतिपादितवन्तः । माहम्मदानां पक्षोऽयथार्थः । सर्वेषां प्रार्थनामन्दिराणां समीपं सर्वकालं सर्वाणि वाद्यानि न वादनीयानि इति आज्ञापत्रकम् अयुक्तम्, अन्याय्यम्, अत एवासमञ्जसम् । न कोऽपि सुज्ञः एवं सम्मन्येत । अस्मिन् विषये परम्परागताः कश्चिद्रूढयः । यवनास्ता जानन्त्येव । कांस्यतालादिमधुरवाद्यान्यपि प्रार्थनामन्दिरसमीपे न वादनीयानीति दुराग्रहस्तैः परित्याज्यः । प्रार्थनाकाले यदि वाद्यानां मृदुमधुरशब्दोऽसह्यस्तर्हि राजमार्गे, अग्निरथे, प्रवहणेषु, आपणेषु च कथं ते प्रार्थनामनुतिष्ठन्ति ? प्रार्थनाकाले

यत्र कुत्रापि महम्मदधर्मिभिः प्रार्थना उपासनीया इति यवनानां धर्मनियमः। जनस्य कलकलशब्दः प्रार्थनामन्दिरसमीपं वाद्यवादनं वा धर्मनिषिद्धमित्यप्ययुक्तम्। शासनसंस्थाधिकारिणः पक्षपातिनः इत्यपि नाभिमानावहम्। प्रसङ्गे समायाते हिन्दुधर्मिणो महम्मदधर्मिणश्च उभावपि शासनसंस्थायाः समानौ इति।

स्थाने स्थाने जातेषु संक्षोभेषु महम्मदधर्मिणामसहिष्णुता। प्रथमाक्रमणं तेषामेव। हिन्दुधर्मिणः पश्चात् स्वसंरक्षणार्थमेव प्रायतन्त इति यद्यपि सत्यं दृष्टं च तथाऽपि आङ्ग्लवृत्तपत्रैस्तत् ज्ञानतः एवोपेक्षितम्।

संक्षेपतः अभियोगभयं महम्मदधर्मिणां रोषं च स्वीकृत्य लोकमान्यैः सत्यकथनेन हिन्दुधर्मिणां सङ्घटने प्रयत्य लोकप्रबोधः कृतः इति सुस्पष्टम्।

पुण्यपत्तनस्थसार्वजनिकसभाकार्यवाहैरेकं निवेदनं शासनसंस्थायै प्रहितम्। 'पुणें-सोलापुर-नगर-वाई-सातारा-वेळगांव-येवले' इत्यादिनगरेषु जातान् संक्षोभानेव मनसि निधाय शासनसंस्थायाः पक्षपातवृत्तिर्यद्यपि कार्यवाहैः स्पष्टशब्दैर्निवेदने न सूचिता तथाऽपि प्रशासका एवास्मिन् प्रकरणे दोषार्हा इति प्रतिपादितम्, सूचितं च वाद्यवादनविषये अनुज्ञापत्रदानाधिकारो रक्षापुरुषाधिकारिभ्यो न दातव्यः इति। प्रारम्भे एवमपि ध्वनितं यत् सार्वजनिकसभया निवेदितं तत् हिन्दुयवनपारसिकसमाजस्य मतमासीत्। अनेन विधानेन क्षुब्धा अधिकारिणः सभामपृच्छन् 'सदस्यानां संख्या का? कति सदस्याः सभायामुपस्थिताः? धर्मानुरोधेन तेषां संख्याविभागो निवेदनीयः। अनुकूलप्रतिकूलसदस्यमतानां संख्या का' इत्यादयः प्रश्नाः पृच्छायामासन्।

प्रश्नानामुत्तराणि सार्वजनिकसभा नायच्छत्। कार्यवाहैर्लिखितम् 'कार्यकारिण्यां मतभेदो नासीत्। निवेदने प्रविष्टानां प्रश्नानां विचारः पात्रापात्रदृष्ट्या कर्तव्यः। एतादृशं वृत्तकथनं शासनसंस्थया कदाऽपि पुरा नापेक्षितम्। साम्प्रतमपि एतद्वृत्तं कथयितुं सभा नेच्छति' इति। वाद्यवादनविषयकं मूलप्रश्नं दूरीकृत्यान्योऽयं वादविषयः शासनसंस्थयोत्पादितः।

अयं हिन्दुयवनसङ्घर्षः परम्परयाऽऽगतः। परं शासनसंस्थया यवनानां पक्षः स्वीकृतः इति लोकप्रवादोऽधुना यथार्थत्वेन जनस्य दर्शनपथं

गतः। लोकमान्यैरेतन्निर्धारितं यद् हिन्दुयवनयोः सख्यत्वे यत्नं कृत्वाऽपि यवना निजाग्रहं न मुञ्चन्ति। हिन्दुधर्मिणोऽपि तेषां समाधानार्थं स्वाधिकारानेकैकं परित्यज्य अन्ते सर्वमेव नाशयेयुः। तस्मात्परम्परागतान् निजाधिकारान् यथार्थत्वेन विज्ञाय हिन्दुधर्मिणस्तान् निर्भयेन मनसा उद्घोषयेयुः अधिकाररक्षणार्थं च बद्धपरिकरा भवेयुरिति। लोकमान्याः स्वयं न कदाऽपि यवनानपकुर्वन्ति। प्रत्युत तेषां सख्यायैव ते सदा सन्नद्धाः। ऐतिहासिकचर्चासु हिन्दुधर्मिषु कृतानां मिथ्याऽऽरोपाणां खण्डने तथा स्वमतमण्डने लोकमान्यानां दृष्टिः। न यवनानां दूषणे। हिन्दुधर्मनिष्ठया तेषां स्वाभिमान उज्ज्वल आसीत्। प्रतिपक्षः सन्तपेदिति भीतिस्तेषां मनसि लेशतोऽपि नासीत्। अन्येनापकृते तेजस्वितया प्रतिकारः कर्तव्यः नानुनय इति लोकमान्यस्वभावः। हिन्दुयवनसङ्घर्षकाले तैः कृतमान्दोलनं नवनीतकोमलेभ्यो जनेभ्यो नारोचतेति सत्यम्। परं तैरपि हिन्दुधर्मे जायमानानामाघातानां निवारणे न कोऽपि यत्नः कृतः। विविधप्रकारेण हिन्दुधर्मे यवनैः प्रहारे दत्ते केवलं शान्तिसूक्तपठनमसाम्प्रतम्। यः कोऽपि उत्तेजनपरशब्दैर्हिन्दुधर्मिणां साहाय्याय सन्नद्धो भवेत् स तेषां सखा इति जना यदि मन्येरन् तर्हि न दोषास्पदम्। सङ्घर्षकाले अनेन लोकमान्यदत्तसाहाय्येन मुम्बापुर्यां गुर्जरदेशीयानां स्नेहो लोकमान्यैः सम्पादितः।

अनेन समयेन लोकमान्यैर्धार्मिकविषये गणपत्युत्सवस्य, राजकीयविषये शिवछत्रपत्युत्सवस्य च पुरस्कारः कृतः। अतोऽयमस्माकं महान् परिपन्थीति प्रथमं यवना अमन्यन्त। परमिदं तेषां मतं कतिपयैः संवत्सरैः परिवर्तितम्। महम्मदधर्मिधुरीणैरात्मनः स्खलितं दृष्टमुक्तं च 'लोकमान्यविचारसरणिः सयुक्तिका' इति। महम्मदअल्ली-शौकतअल्लीप्रभृतिभिर्महम्मदधर्मिधुरीणैरिदमुद्घोषितं यद्राजकारणविषये लोकमान्या एवास्माकं गुरुस्थानीया इति। दिष्ट्या जीवत्सु लोकमान्येषु सर्वमिदं सम्भूतम्।

## ७ चापटसमितिः

मिश्रकार्येषु लोकमान्या आत्मौपम्येन प्रायतन्त इत्यस्य 'चापट'-प्रकरणमेकमुदाहरणम्। ...

'चापटो'पाह्वः कश्चिद्बुद्धिमान् युवा बडोदासंस्थाने राजसेवारत आस्त। आङ्ग्लवरिष्ठस्य कृपाकटाक्षेण [redacted] महदधिकारपदं लब्धवान्। महाविद्यालये लोकमान्यैः सहोपजातपरिचयोऽसौ रत्नागिरिनगरस्थ आसीत्। तृतीयं मित्रं 'दाजीसाहेब खरे'महाशयाः। एतेषां त्रयाणां दृढं स्नेहः।

अग्रहारक्षेत्राणां परीक्षणं, तद्विषयकक्लेशानां निरीक्षणमित्यादिकर्मसु नियुक्तस्य 'इलियट'नाम्नो वरिष्ठाधिकारिणः कनिष्ठसेवको 'चापट'नामा। अग्रहारधराणां क्षेत्रपतीनां कानिचिद्दुःखान्यासन्। 'बडोदा'नरेशो राजप्रतिनिधेर्न तथा कृपादृष्टिः। तस्य पीडार्थं समुपस्थितमेतत् प्रकरणम्। सयाजीरायः, इलियट्महाशयो चापटमहाशयश्चैतेषां त्रयाणां महत्सख्यम्। नरेन्द्रस्य सयाजीरायस्यानुपस्थितौ संस्थाननिरीक्षकेण समुचितोऽयं काल इति मत्वा चापटमहाशये कृतानामुत्कोचग्रहणारोपाणां परीक्षणार्थमेका समितिर्नियुक्ता। युक्तायुक्तोपायैः प्रजाः परिपीड्य प्रमाणानां सङ्ग्रहार्थं समित्या कार्यं समारब्धम्। शासनसंस्थाया विधिज्ञाः ख्यातनामानः। चापटमहाशयस्य विधिज्ञा 'आपटे-खरे'-महाशयाः। प्रमाणविषयकं सर्वं कार्यं लोकमान्यैः कर्तव्यमिति स्थितिः। अतो लोकमान्या बडोदानगरं गताः। तत्र निवासार्थं तैः स्थलमपि न लब्धम्। ईदृशीभिर्विपद्भिः सम्प्रयुध्य लोकमान्यैः स्वमार्ग आक्रान्तः।

समित्याः कार्यं न न्यायदानस्य। सा तु केवलं आरोपपरीक्षणसमितिः। परं तया न्यायाधीशस्य सर्वेऽधिकारा गृहीताः। षट्त्रिंशदारोपाः समित्याः पुरतः कथिताः। तान् स्वीकृत्य समित्या निर्णयः कृतः चापटमहाशयोऽभियोगेन दण्डनीय इति। सर्वे आरोपा लोकमान्यैः प्रमाणैर्निरस्ताः। परं बडोदानरेशैः सयाजीरायैः प्रजानां समाधानार्थं वरिष्ठन्यायालयस्थन्यायाधीशैस्तत्प्रकरणं परीक्ष्य निर्णयो गृहीतः। न्यायाधीशैश्चापटमहाशयो दोषान्मुक्तः। सेवानिवृत्तिवेतनं दत्त्वा सयाजीरायैराङ्ग्लराजप्रतिनिधिसमाधानार्थं चापटमहाशयो राजसेवातो दूरीकृतः।

अस्मिन् प्रकरणे लोकमान्यैर्यथा स्वमित्राय चापटमहाशयाय प्रत्यक्षं साहाय्यं दत्तं तथाऽप्रत्यक्षं साहाय्यं वैर्बडोदानरेशायापि दत्तम्। अतो जनेषु

किंवदन्ती यत् सयाजीरावैः प्रत्युपकारार्थमात्मनः पुण्यपत्तनस्थप्रासादः 'गायकवाड वाडा' इति नाम्ना सुविख्यातो लोकमान्येभ्य उपायनीकृतः। परं सत्यापलाप एषः। लोकमान्यचरित्रलेखकाः केळ्करमहाशया लिखन्ति "चतुःशताधिकपञ्चदशसहस्ररूपकैः सयाजीरावैरयं प्रासादो लोकमान्येभ्यो विक्रीतः। स व्यवहारो मया स्वहस्तेन पूर्णतां नीतः" इति।

एतादृशैः प्रकरणैर्लोकमान्यानां विधिशास्त्रे व्यवहारशास्त्रे च बुद्धिप्रकर्षः पुनरेकदा विद्वज्जनानां दृष्टिपथं समागतः।

## ८ सङ्कीर्णविषयाः

केसरिपत्रद्वारा महता वेगेन लोकमान्या लोकशिक्षणकार्यमकुर्वन्। महाविद्यालयाध्यापनकार्यापेक्षया एतत् कार्यक्षेत्रं विस्तृततरम्। धार्मिके सामाजिके वा विषये लोकमान्याः शास्त्रतो व्यवहारतो लोकान् लेखनद्वारा यथाऽनुशासति तथा राजकीयविषयेऽपि। प्रदेशपरिषदि विविधविषयेषु प्रस्तावा लोकमान्यैः पुरस्कृताः। तथैव परिषदः कार्यवाहपदं स्वीकृत्यान्दोलनस्य क्षेत्रं यथा विस्तारितं तथाऽऽत्मनः कार्यक्षेत्रमपि वितानितम्।

१८९१-९३ अस्मिन् वर्षत्रये लोकमान्यैर्वेदकालनिर्णयार्थं 'ओरायन्'-नामको ग्रन्थः संशोधनपूर्वकं सम्पादितः। तस्य संक्षिप्तस्वरूपं वक्ष्यमाणे ग्रन्थपर्वनामके प्रकरणे वर्तते।

१८९५ संवत्सरे लोकमान्यैः पुण्यपत्तनस्य स्थानिकस्वराज्यसंस्थायां नगरकार्यार्थं पदं निहितम्। आयत्यां महर्षिपदवीं प्राप्ताः 'विनायक रामचन्द्र तथा अण्णासाहेब पटवर्धन'महाशयास्तेषामनिच्छामनादृत्य नागरिकैरत्याग्रहेण स्थानिकस्वराज्यसंस्थासदस्यत्वार्थं पुरस्कारिताः। प्रथमक्रमाङ्केण पटवर्धनमहाशयाः, द्वितीयेन लोकमान्यास्तृतीयचतुर्थस्थानयोः क्रमेण 'मोघे-पाठक'महाशयौ इति निर्वाचननिर्णयो जातः। एतस्मात् कालात् पूर्वं 'माधवराव नामजोशी'महाशया द्वादशवर्षपर्यन्तं स्थानिकस्वराज्यसंस्थायाः सदस्यपदं व्यभूषयन्। नामजोशीमहाशया लोकमान्यानां परमं मित्रम्। परस्परसहकारेणोभाभ्यामपि बहूनि कार्याणि सम्पादितानि। शासनसंस्थायास्तथा स्थानिकस्वराज्यसंस्थायाः कार्येषु नामजोशीमहाशयेभ्यो

लोकमान्यैः प्रभूतं साहाय्यं, स्थानिकस्वराज्यसंस्थायाः बहिः स्थित्वा, दत्तम्। अधुना तां संस्थां प्रविश्य जनसेवा कृता। अयं नगरपालिकायाः सेवाकालः कारावासेन खण्डितः।

## ९ विधिमण्डलप्रवेशः

विधिमण्डलकार्यं लोकमतानुसारि कर्तव्यमित्याकाङ्क्षया विधिमण्डलं शनैः शनैर्विस्तारतां नीतम्। तस्मिन् प्रथमं राजप्रतिनिधिना नियुक्ताः शासनसंस्थाधिकारिण एव सदस्या आसन्। कतिपयवर्षोपगमे अधिकारिणां स्थाने इतरे जना नियुक्ताः। परं निर्वाचनतत्त्वं नाद्याप्यङ्गीकृतम्। कालान्तरेण तत्तत्त्वमाश्रित्य विधिमण्डले केषुचित् स्थानेषु लोकमतैः सदस्या नियुक्ताः। मुम्बईप्रदेशस्य सर्वविभागेभ्य एकैकं स्थानं दत्तम्, परं मध्यभागाय न दत्तम्। तस्य कारणं तु स्पष्टमेव। शासनसंस्थाऽप्रियः कश्चिल्लोकप्रियः प्रतिनिधिर्जनमतसम्मतो भवेत्। लोकैः प्रार्थनापत्राणि प्रेषितानि। अन्ततः पुण्यपत्तनं तथैव परितो वर्तमानान् षड्विभागानेकीकृत्य एकं स्थानं दत्तम्। तत्स्थानलाभाय त्रयः पुरुषा अयतन्त। रानडे-गोखलेप्रभृतिभिर्नेमस्तैः पुरस्कृतो 'जठार'नामकः प्रथमः। शासनाधिकारिभिः पुरस्कृतः 'खानदेश-विभागस्थो 'गरुड'नामा द्वितीयः। तृतीयः केसरिवृत्तपत्रसम्पादनेन लब्धकीर्तयो लोकमान्यटिळकमहाशयाः। इयं निर्वाचनस्पर्धा भृशं तीव्राऽभूत्। विधिमण्डलस्थानस्पर्धायां प्राप्ता एते त्रयः पुरुषा वाग्जालेन परस्परदोषदर्शनेन च विधिमण्डलस्थानमलङ्कर्तुमयोग्या इति तत्तत्पक्षाभिमानिनो वृत्तपत्रेषु लिखन्ति। अन्ते १८९५वत्सरे केसरिपत्रसम्पादका यद्यपि लोकमतेन सम्मतास्तथाऽपि विशेषाधिकारेण स्वासम्मत्या राजप्रतिनिधिना निरोद्धव्या इति सूचनाऽपि 'मुम्बई गॅझेट'पत्रसम्पादकैः कृता। परं साऽपि लोकमान्यैः प्रमाणैर्निरस्ता।

अन्ते निदाघकाले लोकमतदानमभूत्। षट्त्रिंशन्मतानि लोकमान्यानां, षड्विंशतिर्गरुडमहाशयानां, केवलं द्वे 'जठार'महाशयानाम्। बहुमतेन लोकमान्या लोकनियुक्तसदस्या अभूवन्। राजप्रतिनिधिनाऽपि स्वसम्मतिः प्रदर्शिता।

ऑगस्टमासे जातायां विधिमण्डलसभायामर्थसङ्कल्पकाले कृतेन विवेचनेन लोकमान्यैरात्मनोऽस्तित्वं दर्शितम् । साम्प्रतं विधिमण्डलेन राजकीयकार्ये वरिष्ठं स्थानं सम्पादितम् । पुरा आङ्ग्लशासनपद्धतिर्भिन्ना । अर्थसङ्कल्पः केवलं वाचनीयः । विधिमण्डलसम्मतिर्नोपेक्षणीया । राजप्रतिनिधितन्त्रेण सर्वाणि कार्याणि कर्तव्यानि ।

१८९७ संवत्सरे समाप्तोऽयं द्विवार्षिको विधिमण्डलकालः । पुनः निर्वाचनसमयः सम्प्राप्तः । अस्यामपि वेलायां लोकमान्याः पुनरेकदा बहुमतेन विधिमण्डले लोकनियुक्तसदस्या अभूवन् । जूनमासस्य त्रयोविंशतितमे दिने राजप्रतिनिधिसम्मतिदर्शकं कार्यवाहेन प्रेषितं पत्रमपि लोकमान्यैः सम्प्राप्तम् । परं विचित्रो दैवयोगः । उक्तं च —

कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥

पत्रप्रेषणस्य पूर्वस्मिन्नेव दिवसे ' रँड 'महाशयस्य वधो जातः । तेन सर्वं लोकमान्यभाग्यचक्रं प्रतीपमभूत् ।

जुलैमासे राजद्रोहाभियोगेन लोकमान्या निगृहीताः । अतस्तैः स्वयमेव विधिमण्डलसदस्यत्वस्य त्यागपत्रं प्रेषितम् । अतः परं लोकमान्याः शासनसंस्थायाः शत्रुस्थानीयाः । परस्परशत्रुसम्बन्धोऽयमामरणं स्थितः । शरदां विंशतेरनन्तरं १९२० हायने विधिमण्डलसभायां लोकमान्यनिधनानन्तरं दुःखप्रदर्शनार्थं प्रस्तावः सम्मन्तव्य इति सूचना ' वेव्ह्यी 'महाशयैर्दत्ता । परं सा कालातिपातेन प्राप्ता इति कृत्वा ' जॉर्ज लाइड 'नामकेन राजप्रतिनिधिना प्रत्याख्याता । विधिमण्डले लोकमान्यानां गुणसङ्कीर्तनं यदि स्यात्तर्हि सभागृहं कदाचिदपवित्रं भवेत् इति तस्य मतिः सम्भवेत् । परं लोकमान्यानां पार्थिवशरीरस्यान्त्यविधिं कर्तुमनेनैव राजप्रतिनिधिना मुम्बापुर्याः सागरोपकण्ठे नगरस्य ललामभूतं निसर्गरमणीयम् ' चौपाटी 'नामकं पुलिनं अनुज्ञातम् । अनेन तस्य कर्मणा ' जॉर्ज लाइड 'नामा राजप्रतिनिधिः सदैव प्रतिकूल आसीदिति न प्रकल्प्यते । ' मरणान्तानि वैराणि ' इत्यपि तत्त्वं सम्भवेत् ।

# १० राष्ट्रियमहोत्सवौ

## गणेशोत्सवः

राष्ट्रियभावनासंवर्धनस्य विविधान्यङ्गानि प्रत्यङ्गानि । देशभाषाविवृद्धिः, इतिहाससंशोधनं, सज्जनोपासना, ऐतिहासिकवीरपुरुषपराक्रमवर्णनम्, काव्यगानेन भावनोद्दीपनं, यात्रोत्सवसमासम्मेलनादीनामभिवृद्धिरिति तेषामङ्गप्रत्यङ्गानां स्वरूपम् । एतेषामेव मध्ये श्रीगणपत्युत्सवस्य श्रीछत्रपत्युत्सवस्य च गणना । अनयोरुत्सवयोर्जनकत्वं लोकमान्यानामेवेति यथा शासनसंस्थया निर्णीतं तथा शत्रुपक्षीयैः चिरोलमहाशयैरपि स्वसम्पादितग्रन्थे लिखितम् । एतौ द्वौ राष्ट्रियमहोत्सवौ पुरस्कृत्य लोकमान्यैर्महान् जनप्रबोधः कृतः । के वयम्, केऽस्माकं पूर्वजाः, कीदृशी अस्माकं सद्यःस्थितिः, शरदां सार्धशतकात् प्राक् सा कीदृश्यासीत्, साम्प्रतं किमस्माकं कर्तव्यमिति विचारप्रवणो जातो जनोऽनेनोत्सवप्रसङ्गेन । एतदेव खलु शासनसंस्थाया अरुचयेऽभूत् ।

'जनपदहितकर्ता त्यज्यते पार्थिवेन' इति वचनं तु सार्थमेव । अतोऽस्य प्रजागरस्य मूलकारणं लोकमान्या एवेति निश्चितम् । सकलं श्रेयोऽपि तेषामेवेति क्रमप्राप्तम् । यथा श्रेयस्तथा कारावासरूपं दुःखमपि तेषामेव ।

श्रीगणपत्युत्सवस्य परम्परा प्राचीना । प्रथमं स उत्सवो गृहनिष्ठः कुटुम्बनिष्ठो वा लोकमान्यैः केवलं समाजनिष्ठः कृतः । राज्ञां तथा सामन्तानां प्रासादेषु विभवविशेषेणायमुत्सवः पुरा सम्पादित आसीत् । साम्प्रतमिव प्राचीनकालेऽपि गृहे गृहे यथाशक्ति, यथाविभवं गणपतिपूजनमासीत् । अस्यैव गृहनिष्ठोत्सवस्येदं सामाजिकं रूपान्तरं लोकमान्यैः कृतम् । अन्यच्च । हिन्दुयवनसङ्घर्षानन्तरं सपद्येव प्रान्तस्य गणपत्युत्सवस्येदं रूपान्तरं जातम् । महम्मदधर्मिणां 'ताबूत'समारम्भे अप्रविष्टो जनोऽस्मिन्नुत्सवे अहमहमिकयाऽग्रतो भूत्वा महताऽऽनन्देन समाविष्टः । सर्वमिदं १८९३ वत्सरे जातम् । परे वत्सरे गणेशोत्सवसङ्ख्या विशेषेण प्रवृद्धा । जनस्योत्साहो द्विगुणीभूतः । सभामण्डपा लतापल्लवादिभिश्चित्रविचित्रतोरणैः, गणेशमूर्तयः सुवर्णमौक्तिकाद्यलङ्कारैः, मूर्तीनां पूजास्थानानि कदली-

दले पुष्पमालारङ्गावलिदीपावलिभि सुशोभितानि । प्रभातकाले सवाद्य मूर्तिपूजन, सायकाले व्याख्यानकीर्तनप्रवचनैर्ज्ञानसवर्धन, रात्रौ गानवादन भजनादिभि परमेश्वरगुणसकीर्तनादिकार्यक्रम । मूर्तिविसर्जनसञ्चलन-मप्येतादृशम् । तस्य वर्णन १८९४ वत्सरस्य केसरिपत्रे वर्तते ।

साम्प्रत गणपत्युत्सवो वादातीत । लोकमान्यकाले नेय लोकस्थिति । विविधप्रकारेणायमुत्सवस्तदाऽऽक्षिप्त । पर सर्वेऽप्याक्षेपा निरस्ता । उत्सवे नैकप्रकारान् विषयानधिकृत्य व्याख्यानैर्ज्ञानदान, तेन लोकप्रबोध इति तस्य फलम् । लोकमान्यै केसरिपत्रे विविधप्रकारेण एतादृशानामुत्सवानामावश्य कता प्रतिपादिता । देशान्तरे ग्रीसदेशे– विद्यमानानामुत्सवानामुदाहरणानि दत्त्वा लोकमान्या लिखन्ति 'शूराणा, वीराणा, कवीना, पण्डिताना, सज्जनाना, राजकारणकुशलाना सम्मेलनस्थानमेतत् । भारतीयसमाजेऽपि नैकप्रकारा उत्सवा आसन् । पर तेषा पुराणस्वरूप जनेभ्यो यदि न रोचते तर्हि तत्तन्मूलतत्त्वानामविरोधेन तेभ्यो नूतन श्रेयस्कर स्वरूप दत्त्वा लोककल्याणाय लोकधुरीणास्तान् सयोजयेयु'रिति ।

## ११ श्रीशिवछत्रपत्युत्सवः

श्रीगणेशोत्सव इव श्रीशिवछत्रपत्युत्सवोऽप्येकेन क्षुद्रकारणेन लोक मान्यै केसरिपत्रे पुरस्कृत । लोककार्यकर्तॄणामिदमेव वैशिष्ट्य यत्ते स्वल्पेनापि कारणेन कचिद्विचार जनाना पुरत स्थापयित्वा धार्मिकभावना राष्ट्रियभावना वा उद्दीपयन्ति । छत्रपतिशिवराया 'रायगड नाम्नि इतिहास प्रसिद्धे महति दुर्गे पञ्चत्व गता । तेषा तत्समाधिस्थान राष्ट्रियभावनाया स्फूर्तिस्थान स्वातन्त्र्यकाले जातम् । अतस्तदानीं तस्य स्थानस्य सुस्थिति-रासीत् । पर १८१८ सवत्सरानन्तर विनष्टे स्वातन्त्र्ये सर्व विपरीतसभूत् । शासनसस्थाधिकारिभि , छत्रपतिवशजै कोल्हापुर सागली-बडोदा ग्वाल्हेर-इदूर प्रभृतिसस्थाननरेशै सर्वैरप्येतत् पवित्र स्थानमुपेक्षितम् ।

१८८५ वत्सरे केनापि कारणेन समाधिस्थानस्योल्लेखो वृत्तपत्रेषु दृश्यते । भृश दु स्थिति समाधिस्थानस्यासीत् । समाधिस्थान परित सर्वत्र महद्विपिन प्रसृतम् । तथाऽपि केचन पादचारिणो महता कष्टेन तत्स्थानमव-लोकयन्ति । शासनाधिकारिणोऽपि कौतुकेन स्थानमिद पश्यन्ति । 'सर्

रिचर्ड टेंपल'नामको मुम्बईप्रदेशराजप्रतिनिधिरेकदा 'क्राफर्ड-वॉटर्स्-पिट्' नामकैरधिकारिभिः सह समाधिस्थानं द्रष्टुं गतः। क्राफर्डमहाशयः पत्रे लिखति 'यदा राजप्रतिनिधिः टेंपलमहाशयः समाधिस्थानस्योपरि आत्मानमस्थापयत तदा स महत्या स्फूर्त्या शरदां द्विशतात् प्राक् जातायाः सिंहासनाधिष्ठितछत्रपतिशिवरायस्य कस्याश्चिद्राजसभायाः काव्यमयं वर्णनमकरोत्। अनन्तरं शिवराये पञ्चत्वं गते तत्पुत्रकृतं सापत्नमातृसंत्रासं तथा च त्रस्तमनसा तयोक्तां शापवाणीं वर्णयित्वा टेंपलमहाशयोऽब्रवीत्। ये केचन चित्रकारा नानाविधदेशादागता अत्र समागच्छन्ति ते इमानि रमणीयदृश्यानि चित्रीकुर्वन्ति इति। एतादृशं स्फूर्तिस्थानमेतावत्कालं दु स्थितिमन्वभवत्। तदुद्धारार्थं न केषामपि प्रयत्नाः। संस्थाननरेशाः स्वार्थपरायणाः, सुखलोलुपाश्च सामान्यजनास्तदानीं राष्ट्रियभावनाविहीनाः। अतो न कस्यापि चित्तमनेन स्फूर्तिस्थानेन समाकृष्टम्।

१८९५ वत्सरान्ते केसरिपत्रे लोकमान्यैरिमं विषयमधिकृत्य लिखितम् 'छत्रपतिशिवरायस्य नाम महत्स्फूर्तिप्रदम्। सदैव तस्य शौर्यवीर्यधैर्यपराक्रमादिगुणान् मनसि निधाय जनैर्वर्तितव्यमित्याशयपूर्णमेकं काव्यमस्माकं श्रुतिपथमागतम्। परं न कोऽपि जनस्तदुपदेशमनुसरति' इति। महाराष्ट्रदेशे वर्तमानस्य जनस्य हितशत्रुः 'हॅरिस'महाशयोऽपि शिवरायाणां पराक्रमान् वर्णयति 'समाधिस्थानस्यान्तर्भागो वृक्षैर्व्याप्तः। बहिः स्थिता धर्मशालाऽपि तथैव। देवालयस्य विशुद्धिराकरयकी। परकीयशासनसंस्थया महतीदार्येणास्य स्फूर्तिस्थानस्योद्धारार्थं प्रतिवार्षिकं पञ्च रूपकाः (!) सम्मताः। परं छत्रपतिवंशजा वा तेषां सामन्ता नरेशा वा छत्रपतिस्मारकविषये औदासीन्यं भजन्ते। शासनसंस्थाभयात् न किमपि कुर्वन्ति। सर्वमेतदसाम्प्रतम्। आत्मनश्छत्रपतिविषयिणी कृतज्ञता जनैरपि दर्शयितव्या' इति।

केसरिपत्रलेखनात्प्रभृत्यस्मिन् विषये व्यक्तिनिष्ठप्रयत्ना यशस्विनो जाताः। अनेन लेखनेनान्दोलनं समुत्पन्नम्। सभामेकां निमन्त्र्य प्रस्तावं कृत्वा स्मारकसमितिर्नियुक्ता, स्मारकनिधिसङ्ग्रहश्च समारब्धः।

१८९६ संवत्सरे छत्रपतिशिवरायमहोत्सवकल्पना बद्धमूला जाता।

राष्ट्रियसभाधिवेशनप्रसङ्गेनैका प्रकटसभा पुण्यपत्तने 'रे-मार्केट'स्थानस्य विस्तृते प्राङ्गणे लोकमान्यैर्निमन्त्रिता । राष्ट्रियसभाध्यक्षाः 'सुरेन्द्रनाथ बानर्जी'महाशया एवास्याः सभायाः सभापतिः । 'मदनमोहन माल्वीया'भिधेयाः पण्डितमहाशयाः ख्यातनामानो वक्तारः । महद्यशः सम्पादितमनया विराट्सभया ।

एप्रिल्मासस्य पञ्चदशे दिवसे रायदुर्गे ( रायगड ) छत्रपतिशिवरायस्य महानुत्सवो जातः । कस्मिन्नपि सत्कार्ये विघ्ना विद्यन्त एव । तथैवात्रापि । शासनसंस्थायै प्रार्थनापत्रं सम्प्रेष्योत्सवार्थमनुज्ञा प्रार्थिता । कालातिपातकारणं पुरस्कृत्य सा शासनसंस्थाधिकारिणा न दत्ता । लोकमान्याः सम्प्रति विधिमण्डलसदस्या आसन् । तस्माद्राजप्रतिनिधिं 'सॅन्डर्स्ट'महाशयं दृष्ट्वाऽखिलं वृत्तान्तं तस्मै निवेद्य तस्मादनुज्ञा लब्धा । अतो द्विगुणीकृतोत्साहैन जनैः स प्रथमोत्सवो महता श्रमेण गौरवेण च सम्पादितः । महाराष्ट्रदेशे विद्यमाना राष्ट्रधुरीणा लोकमान्यैः सह तत्रोपस्थिताः ।

आयत्यामयमुत्सवः शासनसंस्थाधिकारिणां मनसि अस्वस्थतामजनयत् । सुधारकपक्षेणापि नायमुत्सवः पुरस्कृतः । राजद्रोहाभियोगेन लोकमान्याः कारागृहे निक्षिप्ताः । एवं कालचक्रं प्रतीपं जातम् ।

## १२ राष्ट्रियसभामण्डपकलहः

१८९४ संवत्सरे मद्रासनगरे जाते राष्ट्रियसभाधिवेशने आगाम्यधिवेशनं पुण्यपत्तने भविष्यतीति निश्चितम् । अधिवेशनसम्बन्धीनि सर्वाणि कार्याण्यवेक्षितुं कार्यकारिमण्डलं नियुक्तम् । त्रयः कार्यवाहा आसन् । तेषु लोकमान्याः समाविष्टाः ।

अस्मिन् काले पुण्यपत्तने द्वौ पक्षावास्ताम् । तयोर्मतभेदास्तीव्रा अभूवन् । अन्यस्याप्येकस्य पक्षस्य बीजमधुना अङ्कुरितम् । रानडे-गोखले-प्रभृतीनां सुधारकपक्षः । लोकमान्यानां राष्ट्रियपक्षः । अधुना 'नातू'-प्रभृतीनां सनातनपक्षस्याङ्कुरो दृश्यते ।

राष्ट्रियसभामण्डपविषयको विवादः समुत्पन्नः । प्रतिवत्सरं राष्ट्रियसभाधिवेशनानन्तरं तस्मिन्नेव मण्डपे सामाजिकपरिषदोऽधिवेशनमभूत् । इयं पद्धतिरस्मिन् संवत्सरेऽपि अनुसृता भवेदिति कृत्वा कैश्चन पुण्यपत्तन-

स्थनागरिकैरस्मिन् विषये आत्मनो विरोधः प्रदर्शित. । विरोधेनानेन तृतीय-पक्षस्य सम्भवः समुत्पन्नः ।

राष्ट्रियसभाधिवेशनस्य प्राथमिकीं व्यवस्थां कर्तुमुपमण्डलानि विनिर्मितानि । तानि कार्यप्रवणान्यभूवन् । द्रव्यनिधिसञ्चयार्थं स्वयंसेवका यदा जनानुपागच्छन् तदाऽयं सामाजिकपरिषद्विरोधस्तीव्रोऽभूत् । विरोधदर्शिनोऽवदन् यदि परिषदोऽधिवेशनं राष्ट्रियसभामण्डपे एव भविष्यति तर्हि वयं द्रव्यसाहाय्यं न दास्याम इति । राष्ट्रिया वृत्तिर्लोकमान्यानाम् । केसरिपत्रे तैः प्रतिपादितम् "प्रथमं राष्ट्रकार्यम्, द्वितीयं समाजकार्यम् । सभामण्डपे प्रथमं राष्ट्रकार्ये सम्पादिते पश्चाद्यदि सामाजिकपरिषदोऽधिवेशनं भवेत्तर्हि को दोष. ?" अनेन प्रतिपादनेन लोकमान्यैरुभयपक्षीयाणा रोपः सम्पादितः । सनातनपक्षीया अमन्यन्त 'लोकमान्या परिषत्पक्षीयाः' इति । सुधारका अमन्यन्त 'लोकमान्या राष्ट्रियावगुण्ठनधारिणः सनातनपक्षीयाः' इति । विवादेनानेन राष्ट्रियसभाधिवेशनमविरोधेन पुण्यपत्तने भविष्यति न वा, तथा अधिवेशनार्थं द्रव्यसाहाय्यं लोकैर्दीयते न वेति सन्देहस्तदानींतनानां राष्ट्रियसभाधुरीणानां—विशेषेण मुम्बापुरीस्थानां—मनसि समुत्पन्नः । 'श्रीधर विठ्ठल दाते'नामकेन केनचिल्लब्धप्रतिष्ठेन पुरुषेणैकस्यां सभायामुद्घोषितम् 'यदि सामाजिकपरिषदोऽधिवेशनं राष्ट्रियसभामण्डपे स्यात्तर्हि सभामण्डपोऽग्निसात् भवे'दिति । उभयपक्षीयाः लोकमान्यविरुद्धा. । अत. कार्यवाहपदस्य त्यागपत्रमावश्यकं जातम् । दत्तेऽपि त्यागपत्रे जनस्य परिषद्विरोधो न निरस्तः ।

अयं सामाजिकपरिषद्विवादो राष्ट्रियसभाध्यक्षस्थाने नियुक्तानां 'सुरेन्द्रनाथ बानर्जी'महाशयानां श्रुतिपथं गतः । स्पष्टमेव कार्यकारिण्यै तैर्लिखितम् '*यद्यप्यहं सुधारणाप्रियस्तथाऽपि लोकमतमवश्यं द्रष्टव्यं* भवति । अध्यक्षपदे यदि मम नियुक्तिः स्यात् तर्हि मण्डपविषयकाः सर्वे विवादा राष्ट्रियसभाधिवेशनात्प्रागेवावश्यं विलयं नेतव्याः' इति । इमं पत्रसन्देशं वाचयित्वा रानडेमहाशयैरात्मन आग्रहः परित्यक्तः । एतदर्थकः सन्देशोऽपि सुरेन्द्रनाथमहाशयेभ्यः प्रहित. ।

एवं राष्ट्रियसभामण्डपे सामाजिकपरिषदोऽधिवेशनं न भवेदिति लोकमान्यपक्षस्य विजयो जातस्तथाऽपि कार्यवाहपदत्यागेन राष्ट्रियसभायास्तेषां कार्यसञ्चालकत्वं नष्टप्रायम्। परं साहाय्यदाने – विशेषेण द्रव्यविषयके – लोकमान्यैः स्वप्रयत्ना न शिथिलीकृताः। सार्धद्विसहस्ररूपकान् सङ्गृह्य स द्रव्यनिधिः कार्यकारिमण्डलहस्ते तैः समर्पितः।

नियोजिताध्यक्षाणां 'सुरेन्द्रनाथ बानर्जी'महाशयानां स्वागतं स्वागतसमित्या प्रथमं कर्तव्यम्। अतस्तद्विषयिणीं पुष्पहारकुसुमगुच्छादिसामग्रीं गृहीत्वा स्वागतसमितिसदस्याः पुण्यपत्तनस्याग्निरथविश्रान्तिस्थाने उपस्थिताः। परम् 'हडपसर'नामकं पूर्वस्थानमेव स्वदूतान् सम्प्रेष्य अध्यक्षमहोदयानां प्रथमं स्वागतं लोकमान्यैः सम्पादितं स्वहस्तलिखितं पत्रमपि प्रेषितं च। राष्ट्रियसभाधिवेशनानन्तरमपरेद्युः अध्यक्षमहोदयानां तथाऽन्येषामभ्यागतानां व्याख्यानानि छत्रपतिशिवरायमहोत्सवविषयमधिकृत्य जातानीति वाचकैर्ज्ञातमेव।

राष्ट्रियसभासमाप्त्यनन्तरं सर्वे सदस्याः 'बाबामहाराजै'र्नियोजितायोद्यानोपहाराय गताः। तत्रापि लोकमान्यप्रभृतीनां प्रामुख्यम्। एवं तैरात्मनः पक्षस्य महत्त्वं प्रदर्शितम्।

एवं समाप्तं पुण्यपत्तनराष्ट्रियसभाधिवेशनम्।

---

# ४ महाराष्ट्रविपत्पर्व

## १ महद्दुर्भिक्षम्

१८९६ संवत्सरो महाराष्ट्रदेशे अतीव कष्टप्रदः । वर्षाकालस्य पूर्वार्धेऽतिवृष्टिः सञ्जाता । तेन जलं विपुलमभूत् । परं जीवनावश्यकधान्यकणानामभावः । वर्षाकालस्योत्तरार्धे 'मघा-पूर्वा'दिपर्जन्यनक्षत्रेष्वपि अनावृष्टिः । तेन महद्दुर्भिक्षं समुपस्थितम् । राष्ट्रान्तरात् तण्डुलगोधूमादिधान्यानि वणिग्जनैरानीतानि । परं शासनाधिकारिदत्तवृत्तेषु दुर्भिक्षस्यानुल्लेख एव । खिस्तधर्मोपदेशकैरिमं दुरवस्थाप्रसङ्गं साधयित्वा, धर्मान्तरं कारयित्वा, भ्रान्तिमापन्नानि बालापत्यानि खिस्तधर्मसंस्थासु आनीतानि ।

लोकमान्यैः केसरिपत्रद्वारा अस्मिन् महति सङ्कटे प्रजाभ्यस्तासां कर्तव्यमुपदिष्टम् । ' सार्वजनिकसभा ' इत्यभिधाना एका संस्था अनेन समयेन सुप्रतिष्ठिताऽऽसीत् । तस्याः सञ्चालकमण्डले लोकमान्या आसन् । सभायाः कार्यकारिण्याऽपि प्रजादुःखनिवारणाय निवेदनपत्राणि प्रशासकेभ्यः पुनः पुनः प्रेपितानि । एकस्मिन् निवेदने महाराष्ट्रेषु 'नगर-सोलापुर-विजापुर'नाम्नि विभागत्रये समुत्पन्नानि दुर्भिक्षनिमित्तकानि प्रजादुःखानि विस्तरेण कथितान्यासन् । तन्निवेदनं राज्यप्रशासकेभ्यः सार्वजनिकसभया प्रेषितम् ।

सोलापुराख्ये पत्तने तन्तुवायानां दुर्भिक्षनिवारणाय सार्वजनिकसभया उपायः सूचितः, यतस्तेषां जीवनमतीव कष्टतरमभूत् । तथा हि । ' तत्रस्थवणिग्जनाः स्वमण्डलानि स्थापयित्वा कार्पासतन्तुसङ्ग्रहं कृत्वा पटकारेभ्यो यथाकालं यथाऽपेक्षं दत्त्वा वस्त्रनिर्माणाय साहाय्यं दद्युः । तथैव राज्यप्रशासका अप्यस्मिन्नुपाये यत्किञ्चिन्न्यूनं सम्भवेत्तत्सर्वं सम्पादयेयुः ' इति । श्रेष्ठिजनैरेकं मण्डलं संस्थाप्य स्वार्थत्यागेनापि दुर्भिक्षनिवारणकार्यं कर्तुमुत्साहः प्रदर्शितः । प्रशस्तत्वयमेव यत्प्रथमं राज्यशासनसंस्थया द्रव्यसाहाय्यं दत्त्वा पुरस्कारः कर्तव्यः । राज्यशासनयन्त्रं द्रव्यसाहाय्यं दातुं नैच्छत् । अतोऽसम्मतो जातः एप उपायः ।

दुर्भिक्षपीडितजनदुःखनिवारणार्थे 'फॅमिन् रिलीफ् कोड'नाम्नी काचित् दुर्भिक्षकालव्यवहारशास्त्रसंहितासीत् । परं सा विपन्नाशाय नालम् । मुम्बईप्रदेशे 'कोंकण-कर्णाटका'दिविभागेषु सार्वजनिकसभासेवकान् प्रेषयित्वा दुर्भिक्षजनितप्रजादुःखान्याकलय्य लोकमान्यैस्तेषां सम्यग् ज्ञानं सम्पादितम् । यः कश्चित् प्रजानां स्वल्पद्रव्यसङ्ग्रह आसीत् स पूर्वदुर्भिक्षे विलयं गतः । सम्प्रति प्रजा निःसत्त्वा जाताः ।

केसरिवृत्तपत्रे सर्वाण्येतानि प्रजादुःखानि कथयित्वा राज्यप्रशासकेभ्यः काश्चिद्विधायकसूचना लोकमान्यैः कृताः । तथैव जनेभ्योऽपि स्वकर्तव्योपदेशः कृतः । प्रथमं तावत् प्रजाभिः स्वकर्तव्यं सम्यग्रीत्या ज्ञात्वा परस्परसहकारेणैषा महती विपदुत्तरणीया इति लोकमान्यानामुपदेशपद्धतिः । सार्वजनिकसभासहकारेणैका पुस्तिकाऽपि तैः सम्पादिता । 'फॅमिन् कोड'नामिकायाः विधानसंहितायाः सारांशः, 'नियडुंग'नाम्नः वनस्पतेर्गोवृषभक्षणोचितात्वस्य कृतिः, दुर्भिक्षनिवारणाय निर्मितानां कार्याणां लोकज्ञानार्थं वृत्तान्तः, राज्यप्रशासकेभ्यः प्रदेयस्य करद्रव्यस्य नियमाः लोकमान्यैरस्यां पुस्तिकायां सङ्गृहीताः । षट्सहस्रसंख्याकान्येतानि पुस्तकानि सार्वजनिकसभया मुद्रयित्वा प्रतिविभागप्रशासकाय विना मूल्यं पुस्तकानां शतं सम्प्रेष्य विज्ञप्तिः कृता यज्ज्ञानपदकृषीवलेभ्यस्तानि दत्त्वा दुर्भिक्षनिवारणाय साहाय्यं क्रियतामिति । अधिकानां पुस्तकानामपेक्षा चेत् प्रतिशतं सार्धरूपकद्वयं सम्प्रेष्य यथाकामं पुस्तकानि क्रेतव्यानि लोकेभ्यः प्रदेयानि च । अस्योपायस्य सार्वजनिकसभोद्देशस्त्वेक एव यच्छासनाधिकारिणो यद्येतानि पुस्तकानि प्रदद्युस्तर्हि ग्रामीणास्तानि वाचयित्वा सत्वरं साहाय्यं लभेरन्निति । परम् अधिकारिभिरयं मार्गो नाङ्गीकृतः । एतत्पुस्तकं शासनयन्त्रणया न निर्मितमिति कृत्वा त्याज्यमेवेति तेषामभिप्रायः । अतः सार्वजनिकसभायाः कार्यकर्तृभ्यो विभागाधिकारिभिस्तथा निवेदितम् । राज्यप्रशासकास्तु एतेन निवेदनमात्रेण न संतुष्टाः । कैश्चित्तानि पुस्तकानि खण्डशः कृतानि । कैश्चिदवज्ञया तानि दुर्लक्ष्यीकृतानि । कैश्चिन्निःसारवस्तुपात्रे क्षिप्तानि । कैश्चन अग्निं प्रज्वाल्य पुस्तकान्यग्निसात् कृतानि । कैश्चित्सौजन्येन कार्यवाहं

प्रति प्रेपितानि । परं सभयाऽऽत्मन प्रयत्नो न परित्यक्तः । पुनरप्येकं विस्तृतमावेदनपत्रकं सभया प्रेपितम् । तथाऽपि सर्वं विफलमभूत् । राज्यशासनसंस्थया तस्योत्तरमतिसंक्षेपेण प्रदत्तम् । पूर्वस्मिन् दुर्भिक्षे *सार्वजनिकसभासूचितोपाया राज्यशासनेन सादरं स्वीकृताः, यतः सभायाः* सञ्चालकवर्गे ' माधवराव रानडे ' इतिनामधेया मार्गदर्शका आसन् । इदानीं सा सभा लोकमान्यानुवर्तिनी जाता । लोकमान्यानां चरितं तु राज्यप्रशासकानां रुचये नाभूत् ।

अनेनैव कालेन सार्वजनिकसभया भूमिकरग्रहणविपयकमन्यत्सविस्तरनिवेदनपत्रकं राज्यप्रशासकेभ्यः प्रेपितम् । तस्मिन्निवेदने शासनसंस्थाकार्यपद्धतिः सङ्कुचिता, भूमिकरग्रहणरीतिः क्षुद्रा इत्यादिविपयाणां निर्देश आसीत् । विशेपेण तु इदमुल्लिखितं यद्राज्यप्रशासकैः कनिष्ठराजपुरुपेभ्यः सुगुप्तानि करग्रहणविपयकाण्याज्ञापत्राणि प्रेपितान्यासन् ।

राज्यप्रशासनसंस्थायै तन्नारोचत । अनेनोल्लेखेन प्रक्षुब्धा राज्यशासनयन्त्रणा । कथं सुगुप्तान्याज्ञापत्राणि सम्पादितानि, प्रजाभ्यश्च विदितानि च भवन्तीति प्रश्नः प्रथममेव राज्यशासनसंस्थया आत्मनः उत्तरे समुद्धृतः । अस्मिन् विपये बहून्युत्तरप्रत्युत्तराण्यभूवन् । परं सुगुप्तानामाज्ञापत्राणां समर्थनं नाभूत् ।

अन्यत् प्रकरणमनेन समयेन समुद्भूतम् । ' अनंतराय जोशी एकसंबेकर'नामा कश्चित्सार्वजनिकसभासेवक आत्मनः स्वाक्षरीं कृत्वा पत्रमेकं मुद्रयित्वा ग्रामे ग्रामे सभां निमन्त्रितवान् समाप्तिं च नीतवान् । पत्रके एवं लिखितमासीत् " अस्मिन् दुर्भिक्षे कोऽपि पुरुपः अन्नं विना निधनं नोपेयादिति सार्वभौमशासनसंस्थाया मनोगतं विद्यते " । अस्मिन् विपये प्रमुखराजप्रतिनिधिः राज्ञ्याः सन्देशमपि प्रापितवान् । मुम्बईप्रदेशे करग्रहणार्थं नियुक्तेभ्यो राजपुरुपेभ्योऽयमादेशः " यत्र यत्र चतुर्थांशं कृपिफलं विद्यते तत्र तत्र भूमिकरग्रहणं न स्या"दिति । इमानि पत्रकाणि सम्पाद्य 'मॉन्टीथ'नामा कश्चिद्राजपुरुपः पत्रकमेकं सार्वजनिकसभायाः कार्यवाहं प्रति प्रेपितवान् पृष्टवांश्च यत् सार्वजनिकसभाऽस्य पत्रकस्य जनकत्वमुत्तरदायित्वं च स्वीकरिष्यति न वेति । मुख्यविपयं दुर्भिक्षनिवारणोपायमपसार्य

हस्तपत्रके 'किं लिखितं, केन लिखित'मित्यस्मिन् विषये विवादः समजायत। यथा राजपुरुषाणां किंचित् स्खलितं तथा सभाया अपि। उत्तरप्रेपणे सभया कालापहरणं कृतम्। मुम्बईप्रदेशशासनसंस्थया प्रस्तावमेकं स्वीकृत्य सभां प्रति लिखितम् "एकसंवेकरनाम्नः कस्यचित् सभासेवकस्य पत्रके लिखितानि विधानान्यसत्यानि। एकमासं यावत् सभयोत्तरं न प्रेषितम्। पत्रकानुसारतः कृषीवलैः भूमिकरो न दत्तः। सभया कृतं स्पष्टीकरणमसमीचीनम्। आयत्यामेतादृशं स्खलितं न स्यादिति आश्वासनमपि न दत्तम्। अतः सार्वजनिकसभायाः प्रजाप्रभृतिविषयकलोकमतनिदर्शनाधिकारो राज्यशासनसंस्थाया असम्मतः। सभासदस्यैरतः परमेतादृशानि निवेदनपत्रकाणि न प्रेषणीयानि" इति।

सर्वेष्वपि कार्येषु लोकमान्यानां विचारोऽतीव गभीरो मूलग्राही चासीत्। अतः प्रतिपक्षीयसदस्यानां हस्ते इदं साधनमुपलब्धम्। तैश्चोक्तम् 'पश्यत जनाः लोकमान्यच्छन्दानुवर्तनेन किं भविष्यति' इति।

एतद्दुर्भिक्षविषयकमान्दोलनं केसरिवृत्तपत्रलेखैर्विशेषेणोपकृतं सर्वतश्च प्रसृतमासीत्। सार्वजनिकसभायाः निवेदने यद्भाषासौष्ठवं, वाङ्माधुर्यं, साहित्यदर्शनं च वर्तते तल्लेखेषु न दृश्यते। लेखानां भाषा तु सुलभा, परं मूलग्राहिणी हृदयहारिणी च। लोकमान्या अलिखन् "राज्यशासनसंस्था अस्मदीया। वरिष्ठकनिष्ठराजपुरुषा अप्यस्मदीयाः। सर्वेऽपि ते दयायुक्तचेतसा स्वकर्माणि सम्यगनुतिष्ठेयुः। यद्येवं ते नाचरेयुस्तर्हि ते सापराधा भवेयुः। दुर्भिक्षपीडितजनानां दुःखानि शासनसंस्थायै तैरेव दर्शनीयानि। शासनसंस्थाधनमपि परम्परया प्रजानामेव। कृषीवलैः करस्याप्रदानात् या हानिः सम्भवेत् साप्यस्माभिः सोढव्या। रक्षापुरुषैः प्रतिपालितानि वनान्यपि अस्मदीयानि। प्राणपरित्राणोचितानि वृक्षपर्णफलानि वनेभ्यो रक्षापुरुषैर्लोकेभ्यः प्रदेयानि। किं बहुना। शासनसंस्थया यद्यत् कृतं स्यात्तस्य तस्य सम्पूर्णं फलं प्रजाभिर्ग्रहीतव्यम्। यत्तया न कृतं स्यात्तत् सम्पादयितुं जनाः शासनसंस्थां प्रवर्तयेरन्। यद्येतज्जना न जानीयुस्तर्हि लोकधुरीणाः प्रजाभ्यस्तन्निवेदयेयुः" इति। आङ्ग्लदेशे पार्लमेंटसभायामेकस्मिन् प्रसङ्गे भारतदेशस्य शासन-

संस्थायास्तत्रस्थः सचिवः एवमब्रवीत् " शासनसंस्थायाः कोपागारः प्रजापरित्राणाय यदि नालम्, तर्हि ऋणं कृत्वा तत्कार्यं वयं सम्पादयेम " इति। तस्य तद्वचनं पुरस्कृत्य लोकमान्या अलिखन् " यदि राज्यशासनसंस्था इयत् साहाय्यं दातुं सन्नद्धा स्यात्तर्हि जनाः किमर्थमकारणं प्राणांस्त्यजेयुरिति वयं न जानीमः। दातारो यद्युदारास्तर्हि याचकानां किमर्थमभावः। वयं जनान् प्रार्थयामहे यो योऽस्मिन् महति दुर्भिक्षे प्राणपरित्राणार्थं साहाय्यमपेक्षते स स प्रदेशविभागाधिकारिणमुपगम्य याचेत " इति।

आत्मनो लेखनेनामुमुपदेशं प्रजाभ्यः कृत्वा राजपुरुषेष्वपि प्रखरटीकास्त्रं लोकमान्याः प्राक्षिपन्। तेषां लेखनस्यायमेवाशयः "प्रदेशप्रमुखेभ्यो राजप्रतिनिधिभ्यस्तथा विभागप्रशासकेभ्यो बहुलं धनं वेतनरूपेण दातुं कोपागारः सुवर्णपूर्णो विद्यते। परं दुर्भिक्षपीडितप्रजानां प्राणपरित्राणाय धनं नावशिष्यते। भारतदेशस्य प्रमुखराजप्रतिनिधिर्यदा भारतनिवासिनः सामन्तान् द्रष्टुं विचरति तदा तस्य सत्काराय, दीपोत्सवाय, भोजनसमारम्भाय, मद्यप्राशनाय, नृत्यगीतादिविनोदाय च विपुलं धनं सम्पाद्यते। यदि सर्वं तद्धनं दुर्भिक्षपीडितप्रजादुःखनिवारणायोपयुज्येत तर्हि महत्कल्याणं भवेत्। परं क एतद्वक्तुं धृष्णोति? भारतदेशस्य प्रमुखराजप्रतिनिधिर्यदा 'बडोदा'नगरीं गतवांस्तदा तस्य सत्कारोत्सवार्थं उपस्थितेषु लोकेषु त्रिंशच्चत्वारिंशन्नरास्तस्मिन् जनसम्मर्दे प्राणैर्वियुक्ताः। सामन्तराजानो महता विभवेन महोत्सवान् कुर्युः, धनहीनाः प्रजाश्च प्राणान् मुञ्चेयुः। एतादृशो विपरीतकालो विद्याविभूषिताङ्ग्लराजपुरुषाणां प्रशासने सम्प्रति सम्प्राप्तः इति महदाश्चर्यम् "।

सार्वजनिकसभाद्वारा अधिकृताः पुरुषाः 'विश्वनाथ काशीनाथ राजवाडे–नरसिंह चिंतामणि केळकर–नारायणबाबा घमंडे–शंकर गणेश लवाटे–गोविंदराव टिळक'इत्यादयः सर्वत्र प्रहिताः। सर्वेऽपि ते तत्तद्विभागप्रशासकान् दृष्ट्वा दुर्भिक्षनिवारणाय प्रायतन्त, ग्रामीणसभायां च लोकेभ्यो निवेदनान्यवर्णयन्त। 'अच्युतराय साठे'नामकः कश्चित् प्राध्यापकः प्रचारकर्मकुशलो वाक्पटुरासीत्। 'ठाणे'विभागे 'खत्तलवाड'ग्रामे तेन निमन्त्रितायां सभायां 'डुबोले'नामको राज्यप्रशासकः कनिष्ठराजपुरुषैस्सहो-

पस्थित आसीत्। तस्य समक्षमेव 'साठे'महाशयो जनानवदत् "दुर्भिक्षकाले प्रजाः कृपिफलस्याभावे भूमिकरं न दद्युः । अधिकारिपुरुषाणां कृपयैव वयमेवं ब्रूमः" इति

एष सभावृत्तान्तो विस्तरेण केसरिवृत्तपत्रे मुद्रितः। परम् एतादृशस्य प्रचारस्य परिणामो विपरीतो जातः। 'साठे-आपटे-परांजपे-कारुळकर-पिंपुटकर'प्रभृतीन् निगृह्य बन्धनागारं निक्षिप्य तेषां प्रचारप्रकरणं रक्षापुरुषैर्न्यायसभायां प्रविष्टम्। साठेमहाशयप्रकरणं गभीरमासीत्। वस्तुतः तत् सार्वजनिकसभाया एव परीक्षणमासीत्, यतः 'साठे'महाशयः सभाया अधिकृतः सेवकः। अस्मिन् समये लोकमान्याः कलकत्तानगरे राष्ट्रियसभाधिवेशनार्थं गता आसन्। न्यायालयप्रविष्टस्यास्य प्रकरणस्य वार्ताप्राप्तिक्षणे एव लोकमान्याः पुण्यपत्तनं गन्तुं सन्नद्धा अभूवन्। दीर्घप्रवासानन्तरं च तत्र समागच्छन्। दीर्घप्रवासश्रान्ता अपि ते साठे-आपटेप्रकरणपरीक्षासमये तेषां परित्राणं कथं कर्तव्यमित्यस्मिन् विषये विचारमूढेभ्यो लोकधुरीणेभ्योऽखिलां प्रकरणवार्तां विज्ञाय परित्राणपद्धतिं निश्चिक्युः। 'पेण'-पत्तनस्थन्यायालये साठेप्रभृतीनां प्रकरणं परीक्षितम्। व्यवहारशास्त्रकुशला वरिष्ठकनिष्ठविधिज्ञा बहवो जनास्तस्मिन् समये उपस्थिता आसन्। पेणपत्तने एकस्यां सभायां लोकमान्यैरुक्तम्। शासनसंस्थायाः आज्ञापत्रकाणामर्थस्य सम्यग्रीत्या प्रतिपादनेन यदि साठेप्रभृतयो न्यायालये परीक्ष्यन्ते तर्हि अहं कथं न परीक्षितव्यो भवामि। मम तु एष एवोद्योगः। नैकवारम् अपि तु बहुवारमहं प्राड्विवाकस्याग्रे परीक्षितव्यः। लोकमान्यानामनेन भाषणेन लोकानां दण्डभयं विलयं गतम्। यदा साठे-आपटेप्रकरणं परीक्षार्थं प्रवृत्तं तदा प्रारम्भे एव प्रकरणद्वयमेतत् पृथक् परीक्षितव्यमिति सूचना न्यायाधीशेनाङ्गीकृता। साठेप्रकरणपरीक्षासमये शासनसंस्थया कृता आरोपा पुरस्कृतसाक्षिवचनैः प्रमाणाभावादसिद्धा जाताः। अतस्तस्मिन्नेव दिने निरपराधित्वात् साठेमहाशयाः कारावासाद्विमुक्ताः। आपटेप्रकरणे महता आयासेन आपटेमहोदया अपराधिन इति निश्चित्य प्राड्विवाकेन वर्षभोग्येण कारावासेन त्रिशतरूपकैश्च दण्डिताः।

'ठाणे'विभागे विद्यमानं तृतीयं प्रकरणं लोकमान्येषु संश्लिष्टं स्यादिति सम्भयः समुत्पन्नः। परं यदा प्रकरणं परीक्षार्थं 'लोगू'नामकप्राड्विवाकस्य

पुरतः प्रवृत्तं तदा सम्यक् परीक्ष्य निर्णयं कृत्वा कारूळकर-पिंपुटकरादयो निर्दोषं विमुक्ताः।

अस्मिन् दुर्भिक्षविषयकान्दोलने लोकमान्यानां लेखनेन महत् कार्यं कृतम्। तेषां कार्यं द्विविधम्— विधायकं विध्वंसकं च। यथा लोकमान्यैः शासनाधिकारिषु प्रखरं टीकास्त्रं प्रक्षिप्तं तथा लोकानां दोषदर्शनेन उपदेशेन च प्रजासु महान् प्रबोधः कृतः। जनैरपि स्वकर्तव्यानि स्वार्थत्यागेन लोकोपयोगार्थमवश्यं करणीयानि इति लोकमान्यैः प्रतिपादितम्। महान् लोकप्रजागरोऽनेन तैः सम्पादितः।

## २ ग्रन्थिज्वरः

'दुःखं दुःखानुबन्धि' इति यदुच्यते तत्सत्यमेव। दुर्भिक्षसमये कृतान्तदूतः कश्चिद्रोगः प्रादुर्भूतः। यद्योगे युवानो युवतयश्च तेन अकाले पञ्चत्वं नीताः। ग्रन्थिज्वरस्य निदानं प्रथमं न जातम्। तस्य प्रादुर्भावः प्रथमं मुम्बापुर्यां जातः। अनन्तरं मनुष्यसंसर्गात् सोऽन्यत्र प्रसृतः। अस्य ज्वरस्य स्वरूपं भयानकमासीत्। मुम्बापुर्यां तेन प्रतिदिनं त्रिचतुरशतं मानवा यमधानीं प्रापिताः। ज्वरस्येदं रौद्रं स्वरूपं दृष्ट्वा प्रकृत्या भीरवो जना अतीव व्याकुला अभूवन्। आत्मनो निवासस्थानानि त्यक्त्वा यत्र कुत्रापि ग्रामाद्वा नगराद्वा बहिरगच्छन्।

ग्रन्थिज्वरवार्ता यदाऽऽङ्ग्लदेशं प्राप्ता तदा तद्देशीया जना अस्वस्था अभूवन्, यतस्तेषामस्य ज्वरस्यानुभवः कटुतम आसीत्। अनेन ज्वरेणाखिलः प्रदेशः सत्वरं ग्रस्तो भवेत्, मनुष्यमार्गेण चाङ्ग्लदेशप्रवासमप्यङ्गीकुर्यादिति भीत्या 'लण्डन'नगरस्थभारतशासनसंस्थाया वरिष्ठकार्यालयादविलम्बेन प्रभूताः सन्देशाः कलकत्तानगरस्थप्रमुखराजप्रतिनिधये प्रहिताः, यथा तेन विना कालातिपातं ग्रन्थिज्वरनिवारणोपायाः प्रयोक्तव्या इति। लोकमान्यानां मते ये केचनोपायाः प्रयोक्तव्यास्ते जनानां तथैव नगरपालिकानां सहकारेणैव प्रयोक्तव्या इति।

## ३ उपाययोजना

अग्निरथेन गमनागमनं कुर्वाणाः पथिका नगरपालिकावैद्यवर्यैः परीक्ष्या इति प्रथमोपायो निश्चितः। मुम्बापुरीस्थशासनसंस्थाया कार्यालयो

न्यायालया विद्यालयाश्च स्वकर्माणि स्थगयितु प्रारभन्त । पुण्यपत्तनेऽप्यनेन ज्वरेण स्वप्रभावो दर्शित । शनै शनैर्निखिल नगरमनेन समाक्रान्तम् । नगरपालिकया ये उपचारा सङ्कल्पितास्तेपु लोका केन मार्गेण साहाय्य दद्युरित्यस्मिन् विषये भिषग्वरैर्लेखान् लेखयित्वा लोकमान्या जनाना मार्गदर्शनमकुर्वन् । पाकगृहादिशुचितामारभ्य मलमूत्रविसर्जनान्ता सर्वे विषया लेखेषु समालोचिता । लोकान् शिक्षयितु तेषा दोषदर्शनमपि निर्भयवृत्त्या लोकमान्या परुषाक्षरैरकुर्वन् । ग्रन्थिज्वरस्तु महता वेगेन प्रसार प्राप्त । राज्यशासनसस्थयाऽपि केचनोपाया अविलम्बेनावलम्बिता । 'इग्लड'देशस्थ-'लडन'नगरवासिना मुख्यशासनाधिकारिणा ग्रन्थिज्वरप्रतिबन्धविषये उपाययोजना कर्तुमादेशा पुन पुनर्दत्ता । अत 'कलकत्ता'नगरे प्रमुखराजप्रतिनिधेर्मुख्यविधानसभयैक प्रस्ताव स्वीकृत्याधिकारिभ्य साम्राज्यिकाधिकारा प्रदत्ता । ये केचन जनास्तानधिकारानवमन्येरस्तेभ्यो दण्डोऽपि विहित । प्रजापक्षधुरीणै कृता सूचना राजपुरुषैस्तिरस्कृता । मुख्यप्रस्तावानुसारत प्रदेशशासनसस्थया बहवो नियमा कृता । तै विभागप्रशासका सायुधा सशक्तिका बभूवु । न्यायालयेऽप्येतद्विपयक-न्यायस्य परिक्षण परिमार्जन वा नास्ति । विभागनगरसीमासु गमनागमननिर्बन्ध , ज्वरससर्गसशयेन सर्ववस्तूना तथा गृहाणामपि विशुद्धीकरण भस्मीकरण वा, रोगग्रस्ताना नरनारीणा यत्र कुत्रापि स्थलान्तरमित्यादय सर्वेऽधिकारा प्रशासकेभ्यो दत्ता । अधिकारमदो जनमततिरस्कारबुद्धि उग्रस्वभावो दण्डरुचिरित्यादिगुणैर्युक्ता विशेषाधिकारिणोऽस्मिन् कर्मणि नियुक्ता । यस्मिन्नगरे शासनसस्थाऽवकृपा स्यात्तस्मिन्नगरे एवगुण निशिष्टविशेषाधिकारी नियुक्तो भवेत् । एतादृशविशेषाधिकारयुक्ताधिकारिणा नियुक्त्या शासनसस्थयाऽनुगृहीत पुण्यपत्तनम्, तथा च लोकमान्या अपि सङ्कटपरम्परया काराधासादिप्रसङ्गेन प्रसादिन कृता । शासनाधिकारिभि प्रयुक्त प्रथमोपायो नगरसीमासु गमनागमननिर्बन्ध । पर तत्र खाद्यपेयादिपदार्थाना न काऽपि व्यवस्था । द्वितीयोपायो ग्रन्थिज्वरग्रस्तरुग्णस्य संसर्गनिरासाय रुग्णस्य यस्मिन्नपि रुग्णालये स्थलान्तरम् । साम्प्रतमिव तस्मिन् काले जनमत शिक्षित नासीत् । रुग्णालया मरणालया इति जनानां

कल्पना । एतदसमञ्जसमिति लोकमान्यैः कठोरशब्दैर्लिखितम् । परम् अस्मिन् विषये महत्यनवस्था समुत्पन्ना । पुण्यपत्तननगरपालिकया केचिन्नियमाः सम्मताः । परं ते सर्वे शासनसंस्थाया असम्मताः । ज्वरग्रस्ते नगरे रुग्णालयं नेतुं प्रतिदिनं द्वित्रानेव रुग्णान् अधिकारिणोऽलभन्त । सुखेन तत्र गन्तुं न कोऽप्यैच्छत् । लोकमान्या अपि रुग्णालयमेकं स्थापयितुं सयत्ना आसन् ।

## ४ अधिकारिणामुपद्रवः

सायुधः सशक्तिको 'रँड'नामकः कश्चिद्राजपुरुषो ग्रन्थिज्वरनिवारणोपायकर्मणि विशेषाधिकारैर्नियुक्त आसीत् । प्रकृत्या तामसः, उग्रस्वभावो, दण्डरुचिः स राजसेवकस्तीव्रोपायैः प्रजादुःखमधिकं वर्धयेत् इति तस्य पूर्वेतिहासज्ञानात्तदा लोकमतमासीत् । तस्यागमनात् प्रागेव लोकमान्यैर्लिखितमासीत् "ज्वरग्रस्तानां रुग्णानां स्वजनैः सह विप्रयोगानुष्ठानरीतिः उग्रस्वरूपं धारयिष्यतीति दृश्यते । परं सा न किमपि फलमावहेत् उद्देशसिद्धौ च विघ्नाय कल्पेतेति विप्रयोगकरणानुष्ठानपद्धत्या अनुमानं सम्भवेत् । सौम्येनैव मार्गेण जना विप्रयोगं विदध्युः, न राजपुरुषाः । तथैव राज्यशासनसंस्था रुग्णालयान् स्थापयित्वा तेषां सकलव्यवस्थां लोकहस्ते दद्यात् इति प्रस्तावं कृत्वा नगरपालिकाधिकारिभ्यस्तथा शासनसंस्थाधिकारिभ्यः स प्रस्तावो प्रजाभिः प्रहेतव्यः । ग्रन्थिज्वरभीतिः स्निग्धजनचिन्ता च ज्वरस्य निमित्तकारणे सम्भवतः । तस्माज्जना एव तत्कार्यं सम्पादयेयुः" इति । 'यूरोप'खण्डस्थदेशा ग्रन्थिज्वरवार्तया नितरां भीतिग्रस्ता इति प्रथमं लोकानामभिप्राय आसीत् । अतो भयग्रस्तमानसाः शासनसंस्थाधिकारिणः कानप्युपायान् प्रायुञ्जत । तेषामुद्देशो दुष्टो नासीत् इति केसरिपत्रेण लिखितम् । रक्षापुरुषाः प्रसङ्गस्यास्य लाभमगृह्णन् । कमपि पुरुषं रक्षापुरुषा वदेयुः 'ज्वरसम्पीडितोऽसि त्वम् । आगच्छ मया सह । अहं त्वां रुग्णालयं नयामी'त्युक्त्वा रक्षापुरुषास्तस्मात् पुरुषात् धनं लब्ध्वा तममुञ्चन् इत्यादयोऽस्य ज्वरनिरसनोपायस्य कतिचिद्दुरुपयोगा अपि बभूवुः । रुग्णालयविषये जनानामरुचिं निर्मूलयितुं तत्सम्बन्धिनी यथार्थकल्पना लोकमान्यैस्तेभ्यो दत्ता । लोकमान्याना-

माग्रहस्तु मतपरिवर्तनेन सामोपचारेण ज्वरग्रस्ता रुग्णालयं नेतव्याः । न बलोपयोगेनेति । परं क एतज्जानीयात् । रुग्णशोधनार्थं गृहपरीक्षणं निश्चितं कृतम् । अनेन निश्चयेन विप्रयोगकरणाल्लोका बहुलं भीताः । लोकमान्यास्तानुपादिशन् "आत्मनो ग्रामांस्त्यक्त्वा लोका यदि ग्रामान्तरं गच्छेयुस्तर्हि मृत्युभयं नष्टं किम् ? तत्रापि मृत्युर्भविष्यत्येव । तस्मात् कारणं विनाऽन्यत्र गत्वा किमर्थं लोका ग्रन्थिज्वरं प्रसारयेयुः ?" इति । ईदृशोपदेशकरणे लोकमान्या एवाधिकारिणो यतस्ते ग्रन्थिज्वरकाले पुण्यपत्तने एव वसतिं चक्रुः, बहिर्न गत्वा जनेभ्यः साहाय्यं ददुः ।

अखिलं पुण्यपत्तनं ग्रन्थिज्वरग्रस्तमभूत् । कृतान्तस्य शासनमप्रतिहतमासीत् । रँडमहाशयस्य ज्वरप्रतिबन्धोद्योगा अपि प्रवृद्धाः । कतिचित् सेनाधिकारिणोऽपि तस्य साहाय्याय शासनसंस्थया नियुक्ताः । रुग्णशोधनार्थमेकं गौरकायसैनिकपथकं समागतम् । एकस्मिन्नेव सप्ताहे रुग्णशोधनोद्योगेन विशालं रूपं धारयित्वा महान् संक्षोभः कृतः । लोकमान्या एवमलिखन् "सैनिकाः पाकगृहदेवगृहादिपवित्रस्थानानि प्रविश्य विचिन्वन्ति इति सैनिकानां न दोषः । तैः सह ये स्वयंसेवकाः शोधार्थं वा परीक्षणार्थं वा सैनिकेभ्यः साहाय्यं दातुं गच्छन्ति त एव दोषार्हा भवन्ति । 'सॅन्डर्स्ट' नाम्नो राजप्रतिनिधेरियमेवोत्कटेच्छा यत् सैनिका यद्यपि ज्वरप्रतिबन्धार्थं प्रयोक्तव्यानि सर्वाणि कार्याणि कुर्वन्ति तथापि सामान्यजनाः क्लेशं वा उपद्रवं वा न प्राप्नुयुः" इति । केसरिपत्रे लोकमान्यैरेतदर्थं तस्मै पुनः पुनर्धन्यवादाः प्रदत्ताः । प्राप्तायामवस्थायां सर्वे सौजन्येनात्मनः कर्माणि कुर्युः विपत्तिं चोत्तरेयुः । रुग्णशोधनं प्रेतशोधने परिणतम् । यस्मिन् गृहे ज्वरेण मृत्युः सञ्जातः तद्-गृहं रक्तवर्णेन चिह्नितम् । अनन्तरं तत्र सैनिकपथकमागत्य तज्ज्वरदूषितं गृहं शुद्धीकरणमिश्रणेन क्षालयितुं प्रावर्तत, स्वेच्छया गृहपात्रादिपदार्थान् बहिरानीयाग्निसात्कर्तुं च प्रारभत, तथैवान्यान्यपि खिलीकृतानि गृहाणि हठादुद्घाट्य तत्राप्यात्मनो लीलाविलासानकरोत् । प्राणपरित्राणार्थं जना नगराद्बहिरगच्छन् । गृहप्रक्षालनकर्मणि नियुक्ताः सैनिका बहिर्गतानां गृहस्वामिनां गृहाणि प्रविश्य तत्र विद्यमानानि वस्तूनि यथेच्छमपाहरन् । एवं ग्रन्थिज्वरप्रतिबन्धार्थं नियुक्तेन सेनापथकेन बहुप्रकारैर्जनवित्तहानिः कृता ।

..

नागरिकाणां सहकारेण लोकमान्या एकं रुग्णालयमस्थापयन् । तस्य निखिलां व्यवस्थां पुण्यपत्तनस्थलोकधुरीणा अपश्यन् । ओषधियोजना रुग्णपरिचर्यादिव्यवस्था तज्ज्ञचिकित्सकैरङ्गीकृता । रुग्णालयनियमा सुलभाः सौम्याश्चासन् । रुग्णालयस्थलमपि नगरसमीपमासीत् । अतो लोकभीतिस्तेन लघूकृता । इत्थं नागरिकसंस्थापितरुग्णालयव्यवस्था लोकप्रियाऽभूत् ।

शासनसंस्थाविनिर्मिता ग्रन्थिज्वरप्रतिबन्धकयन्त्रणा तु भृशं पीडाकरा, सर्वदुःखानां च जननी जाता । ग्रामान्तरगमनागमननिर्बन्धः, ज्वरग्रस्तरुग्णशोधनं, तेषां विप्रयोगकरणं, दूषितगृहशुद्धीकरणार्थं प्रक्षालनं सर्वेष्वेतेषु कर्मसु स्वेच्छया जनानां न प्रवृत्तिः । प्रथमं तावत्स्वजनचिन्ता । अन्यद्रक्षापुरुषभयं सैनिकजनभयं च । अतो नागरिका दुःखस्य परां कोटिं प्राप्नुवन् । रुग्णालयप्रवेशोऽपि प्रवेशपत्रिकां विना नासीत् । ज्वरप्रतिबन्धोपायार्थमानीतानां सैनिकानां लीलाविलासाः केन वर्णनीयाः ! साहाय्यार्थं समागतैः स्वयंसेवकैः सह असंभाषणं, तेषां विडम्बनं, सैनिककृतमर्कटचेष्टा, असम्बद्धभाषणं, सन्तर्जनम्, अनुचितपरशरीरस्पर्शनं, कुतूहलेन किमपि गृहवस्तु समुद्घाट्य परीक्षणं, स्तेयबुद्ध्या तस्यापहरणमिति विविधा विलासाः कैश्चिदज्ञानेन कैश्चिदधिकारमदेन कृताः । हिंदुधर्मिणो महम्मदधर्मिणश्च ऋजुमार्गेण समाचरन् यतस्ते परस्पराणामाचारधर्मान् जानन्त्येव । परम् एते ख्रिस्तधर्मिणः पाश्चात्त्या अधिकारमदान्धा आदरेण लोकान् कथं पश्येयुः । एतादृशीं रँडमहाशयस्य शासनरीतिं जनाः कथं सहन्ते इति अन्यग्रामेषु नगरेषु च वसन्तो जना लोकमान्यानपृच्छन् । लोकमान्यैः स्पष्टमेव एवं लिखितम् ' शिवछत्रपतिसंस्थापितसाम्राज्यसमाप्तिकालेऽपि इयत् सैन्यमत्र ' एल्फिस्टन 'महाशयसमीपं तदा नासीत् यावत्सैन्यं सम्प्रति रँडमहाशयेन समानीतम् । तस्मात्सोढव्या एवैषा विपत्तिर्जनै'रिति । न्यायालयेऽधिकारिणामपराधानां परीक्षणमपि निर्बन्धान्न स्यात् । लोकमान्यानां लेखनमुभयप्रकारकम् । लोकशिक्षणाय जनस्योपदेशः । शासनसंस्थादोषान् दूरीकर्तुं राजपुरुषेभ्यः सूचना । परम् एतत्सर्वं लोकमान्या निर्भयेन मनसा कदाचित्सौम्यशब्दैः, कदाचित् कठोरवचनैः, कदाचिदुप

हासेन, कदाचिन्निन्दाप्रचुरवाक्यैरकुर्वन्। सर्वेऽपि नागरिका अनेन रौद्रोपद्रवेणोद्विग्नमानसा अभूवन्। अन्ते ज्वरपीडितानां रुग्णानां शोधनं स्थगितव्यमिति रँडमहाशयैर्निश्चितम्। लोकमान्यैः स्वयमेवैतत् सूचितं यद्भिषग्वरस्य परीक्षणं विना न कोऽपि मृतशरीरम् उत्तरक्रियार्थं नयेत्। तथैव ज्वरेण मृतस्य पुरुषस्यैव गृहं चिकित्सकस्याज्ञापत्रेण क्षालनीयम्। इयमपि सूचना रँडमहाशयैः स्वीकृता।

गच्छता कालेन ग्रन्थिज्वरप्रसारस्य सङ्कोचो जातः। वैद्यवरा अपि तन्निदानं कर्तुमसमर्थाः। का कथा औषधाद्युपायानाम्। शनैः शनैर्ग्रन्थिज्वरजन्तवो नष्टा अभूवन्। ज्वराभावस्य सन्देशा विदेशान् प्रहिताः। ज्वरप्रतिबन्धार्थं विनिर्मिताः समितयो धन्यवादार्हा बभूवुः। परं जना बहुप्रकारकाणि दुःखान्यन्वभवन्। तेषां सान्त्वनार्थं न केनापि शब्दमात्रोऽप्युच्चारितः। अस्मादेव दुःखादन्यद्दुःखं समुत्पन्नम्।



# ५ प्रथमराजद्रोहाभियोगपर्व

## १ राजद्रोहाभियोगः

पुण्यपत्तननगरपालिका, मुम्बईविश्वविद्यालयः, मुम्बईप्रदेशविधिमण्डलमिति संस्थात्रये लोकमान्याः क्रमेण जनानां बहुमतेन नियुक्ताः सदस्या अभूवन्। अयमभ्युदयस्तेषां लोकप्रियत्वं दर्शयति। सामाजिकप्रश्नविषयकवाग्युद्धेषु लोकमान्यैरन्ये लोकधुरीणा यथा पराभूतास्तथा शासनसंस्थाधिकारिणोऽपि दुर्भिक्षकाले प्रवर्तितेन तथा ग्रन्थिज्वरदुःखनिरसनाय कृतेन महताऽऽन्दोलनेन पराभूता इवासन्। लोकमान्यानां टीकास्त्रं ब्रह्मास्त्रमिव प्रखररूपं परिणामकारकं चासीत्, तेन शासनसंस्थाधिकारिपुरुषविषयकस्तेषां कार्यपद्धतिविषयकश्च महानसन्तोषः प्रजासु समुत्पन्नः। केसरिवृत्तपत्रे एतद्विषयकलेखनेन शासनसंस्थाऽतीव क्षुब्धा अभियोगं च दातुं किमपि निमित्तमन्वेष्टुं प्रवृत्ता। परं लोकमान्या यथा गुणग्रहणे दक्षास्तथैव कालोचितकर्तव्येष्वपि कुशला दृश्यन्ते। अस्मिन् समये आङ्ग्लदेशराज्याः हीरकमहोत्सवः समावर्तत। तं विषयमधिकृत्य तस्या अभिनन्दनार्थं क्रमेण लेखत्रयं केसरिपत्रे लोकमान्यैर्मुद्रितम्। महाराज्याः शीलं, वैभवं, चारित्र्यं, महद्भाग्यं तथा वर्षषष्ट्यां जातः साम्राज्यविस्तारो राज्यतन्त्रे तस्य कार्यं च सर्वमेव गुणग्रहणबुद्ध्या लोकमान्यैः समालोचितम्। आङ्ग्लानामानन्दस्तु नैसर्गिक एव। साम्प्रतं ते राज्यकर्तारः। राज्यकर्तॄणामानन्दे राज्याः प्रजाः सहभागिन्यो भवेयुरिति तु प्रसङ्गोचितमेव। परं तृतीयेऽग्रलेखे भारतीयप्रजानां दारिद्र्यदुःखमपि लोकमान्यैर्वर्णितम्।

अन्यः स्फूर्तिदायकः प्रसङ्गः शिवछत्रपतिस्मारकान्दोलनस्य। 'विभूतिपूजा' इति शीर्षकं दत्त्वा वाङ्मयगुणैरलङ्कृतेऽग्रलेखे राष्ट्रपुरुषाणां विभूतिमत्त्वं वर्णितं दृश्यते। ग्रामे ग्रामे सञ्जातस्य शिवछत्रपत्युत्सवस्य वार्तापत्राणि केसरिकार्यालयं प्राप्तान्यासन्। शिक्षिता अशिक्षिताः पदवीविभूषिता अपि जना अस्मिन्नुत्सवे उपस्थिताः। राजकीयमहोत्सवा यत्र-

प्याङ्ग्लराज्ये निर्बन्धितास्तथाप्यैतिहासिकमाहात्म्यविभूषितानां पुरुषाणां भजनपूजनगुणसङ्कीर्तनादिलाभः सम्भवेदिति महानभ्युदयः । अतः केसरिपत्रेणानन्दः प्रदर्शितः । ग्रन्थिज्वरदुःखानुभवानन्तरं सम्प्राप्तोऽयमुत्सवः पुण्यपत्तननागरिकैर्महतोत्साहेन विभवेन च सम्पादितः । 'शिवरामपंत परांजपे'महाशयानां राजसूययज्ञविषयमधिकृत्य प्रवचनं जातम् । 'असन्तोषः श्रियो मूलम्' इत्यादीनि वचनानि तेषां प्रवचनस्याधारभूतानि । अन्यस्मिन् दिवसे लोकमान्यानामध्यक्षत्वे प्राध्यापक'भानू'महाशयैः 'अफ़ज़ुलखान'वधविषयमधिकृत्य व्याख्यातम् । भानूमहाशयैर्विद्वत्त्ववक्तृत्वादिगुणप्रचुरेण भाषणेन अफ़ज़ुलखानवधदोषारोपात् शिवछत्रपतीनां विमोचनं कृतम् । " 'सीझर-नेपोलियन'प्रभृतिभिः कृतानां मनुष्यघातानामुदाहरणानि उद्धृत्य इतिहासविदो यथा तेषां निर्दोषत्वं सम्मन्यन्ते तथैव शिवछत्रपतीनामपि निर्दोषत्वं सम्मन्यन्ताम् " इति 'जिनसीवाले'महाशयैः सप्रमाणं प्रतिपादितम् । अध्यक्षीयभाषणे सर्वेषां व्याख्यातॄणामाशयानुपसंहृत्य, छत्रपतीनां निर्दोषत्वं प्रतिपाद्य, तेषां सात्त्विकबुद्धिं निर्दिश्य, छत्रपतिमहोत्सवनिमित्तेन संवत्सरस्य एकवारं सर्वैर्जनैरेकत्र समागन्तव्यमिति लोकमान्यैः प्रार्थितम् । छत्रपतिमहोत्सववृत्तं तथा विद्वद्रत्नानां भाषणानि लोकमान्यैः केसरिपत्रे मुद्रितानि ।

काकतालीयन्यायेनास्मिन्नेव समये एको भीषणः प्रकारः सञ्जातः । ग्रन्थिज्वरकाले प्रजादुःखनिरसनाय शासनसंस्थाविनिर्मितयन्त्रणाकृतेन दुःसहोपद्रवेण प्रक्षुब्धमानसः 'चाफेकर'नामा कश्चिद् युवा रँडमहाशयस्य प्राणघातं कृतवान् । तन्निमित्तं लब्ध्वा मुम्बापुरीस्थ'टाइम्स'वृत्तपत्रेण केसरिपत्रे मुद्रितानां केषांचित् सन्दर्भरहितवाक्यानामाङ्ग्लभाषया रूपान्तरं कारयित्वा तानि वाक्यान्युद्धृत्य राजद्रोहपूर्णा एते केसरिपत्रमुद्रिता लेखा इति उद्घोषितम् । छत्रपतिमहोत्सवे 'अफ़ज़ुलखान'वधोल्लेखो जातः । एष विवादस्तु प्राचीन एव । छत्रपतिमहोत्सवनिमित्तेन पुनरुद्भूतः स विवादो यथाकालं विलयमगमिष्यद्यदि अनेन समयेन रँडमहाशयवधो नाभविष्यत् । परम् अस्य वधस्य कारणं केसरिपत्रेण मुद्रिता राजद्रोहकारिणो लेखा इति मुम्बई-'टाइम्स'पत्रस्य निर्णयः । अस्य निर्णयस्य ध्वनिः शासनसंस्थया सम्यग् ज्ञातः । तमनुसृत्य सर्वो वक्ष्यमाणप्रकारको राजद्रोहाभियोगः समुत्पन्नः ।

## २ 'रँड्'महाशयवधः

'रँड्'महाशयवधस्यैष वृत्तान्तः। जूनमासस्य द्वाविंशे दिने भौमवासरे (२२-६-१८९७) पुण्यपत्तने मुम्बईप्रदेशराजप्रतिनिधिप्रासादे 'व्हिक्टोरिया'महाराज्ञ्याः हीरकमहोत्सवनिमित्तेन महान् स्वागतमहोत्सवस्तथा भोजनसमारम्भश्चासीत्। प्रासादप्राङ्गणे महान् दीपोत्सवः कृतः। प्रासादं परितः समुन्नतभूमिभागेषु काष्ठानि रचयित्वा आनन्दप्रदर्शनाय होलिकाः प्रज्वालिताः। राजप्रतिनिधिना निमन्त्रिताः सर्वे प्रशासकोपप्रशासकाः वरिष्ठकनिष्ठराजपुरुषाः प्रतिष्ठितनागरिकाः समारम्भार्थं प्रासादे समुपस्थाय सानन्दं सकौतुकं नृत्यगीतादिविनोदेनार्धरात्रपर्यन्तं सुखेन कालमनयन्। समारम्भावसाने सर्वे जनाः स्वनिवासस्थानानि प्रत्यागच्छन्। रँड्महाशयोऽपि शकटे उपविश्य स्वनिवासं न्यवर्तत। राजप्रतिनिधिप्रासादगोपुराद् बहिरागत्य तस्य रथो यावत्स्तोकं मार्गमाक्रामति तावत्कश्चित् पुरुषः पार्श्वस्थवृक्षराजितः आगत्य पृष्ठभागेन रथमारुह्य हस्तेन अग्न्यस्त्रेण रँड्महाशये गुलिकाप्रक्षेपणमकरोत्। सा सीसकगुलिका तस्य वामस्कन्धं प्रविश्य तं निःसत्त्वमकरोत्। निमिषमात्रानन्तरं प्रथमरथस्य पश्चादागतस्यान्यरथस्योपरि पृष्ठभागेन गत्वा द्वितीयः कश्चन पुरुषः पुनरग्न्यस्त्रेण गुलिकाप्रक्षेपणमकरोत्। तस्मिन् रथे 'आयर्स्ट्'महाशयः भार्यया सहित आसीत्। इयं सीसकगुलिका आयर्स्ट्महाशयस्य मस्तिष्कं भित्त्वा पारं गता। तेन स सपद्येव पञ्चत्वं गतः, भार्यायाः शरीरे पतितश्च। निशाजनितनिःशब्दनिबिडान्धकारे गुलिकाप्रक्षेपणकर्कशध्वनिमाकर्ण्य भयाकुला रथवाजिनो जवेन प्राद्रवन्। आयर्स्ट्महाशयपत्न्याः आक्रोशं श्रुत्वा 'लुई'नामकः कश्चिद् योधस्तं रथमवस्थाप्य यावदन्तः प्रविशति तावदेव भीषणप्रकारस्तेन दृष्टः। सपद्येव रँड्महाशयस्य रथः सम्प्राप्तः। रथे रँड्महाशयो निःसंज्ञो भूत्वा दुःखवशादार्तरवं करोति इति लुईमहाशयोऽपश्यत्। रँड्महाशयं झटिति रुग्णालयं नीत्वा औषधोपचारः कारितः। मृत्युशय्यायामार्माणस्य तस्य वृत्तकथनमपि आलिखितमासीत्। एकादशदिवसपर्यन्तं महद्दुःखमनुभूय सोऽप्यन्ते अन्तकातिथिः सञ्जातः।

जूनमासस्य त्रयोविंशे दिवसे महति प्रत्यूषे एव सा वधवार्ता पुण्यपत्तने सर्वत्र प्रसृता। सर्वे जना भीतिग्रस्तमनसः स्तम्भितमतयश्च बभूवुः। परं न कोऽपि किञ्चिदपि वक्तुं शशाक। गुप्तचराणां जालं सर्वत्र प्रसृतम्। रात्रावेव 'गणेशखिंड'राजमार्गो रक्षापुरुषैर्निरुद्धः। वधस्थानसमीपे राजमार्गस्य पार्श्वे प्रस्रवणसेतोरधस्तात् द्वौ खड्गौ, एकं काचपात्रम्, एकः शिलाखण्डः इत्येते पदार्था नयनगोचरतां गताः। कुशला गुप्तचराः समाहूताः। 'ब्रुइन'महाशयश्चारकर्मनिपुणस्तेषां मुख्याधिकारी नियुक्तः। शासनसंस्थया रँड्घातकशोधार्थं विंशतिसहस्ररूपकमितं पारितोपिकमुद्घोषितम्। पुण्यपत्तनस्था नागरिकाः स्वस्फूर्त्या वधनिषेधार्थं लोकसभां निमन्त्रयिष्यन्ते इति शासनाधिकारिभिरपेक्षितम्। परं तेषामपेक्षा विफलीभूता। अतो राज्याधिकारिणो रुष्टा आसन्। 'लॅम्ब्'नामा विभागप्रशासको नागरिकसभां निमन्त्रितवान्। कस्य वधो जातः, कस्मिन् स्थले जातः, कस्मिन् प्रसङ्गे जातः इत्यनेन जीवितापहरणाय कूटसङ्कल्पः कथमनुमीयते, नागरिका हन्तारं दद्युः, साहाय्यस्याप्रदाने कथं नोचितम्, अन्यथा शासनसंस्था तीव्रोपायान् प्रयुञ्जीत इति सर्वं तस्यां सभायां लॅम्ब्महाशयेन वर्णितम्। पुण्यपत्तनस्थवृत्तपत्राणामभिक्षेपः कृतः। विशेषेण तु केसरिपत्रस्य। लोकमान्यानुद्दिश्य राजद्रोहारोपो लॅम्ब्महाशयेन कृतः। शिवछत्रपतिमहोत्सवे जातानां भाषणानामुल्लेखोऽपि तस्य कथने आसीत्। अपराधी दण्डार्हो भवेदिति तु गतार्थमेव। परं नागरिका भीषणदुःखान्यनुभवेयुरिति तर्जनमपि तेन भाषणान्ते कृतम्।

अखिलसभावृत्तान्तस्याशयो लोकमान्यैर्ज्ञातपूर्व एव। रँड्महाशयवधेन आत्मनि किमपि महत् सङ्कटमापतेदिति तैः पूर्वमेव सङ्कल्पितम्, तथापि केसरिवृत्तपत्रे तेषां लेखनपद्धतिर्नवनीतकोमला नाभवत्। नित्यपद्धतिरिव 'व्हिक्टोरिया'राज्ञ्याः अभिनन्दनं, गौरवं, शासनाधिकारिणां दैनंदिनकर्मणि टीकास्त्रं च लेखेष्वासन्। पुण्यपत्तने अधिकरक्षापुरुषनियुक्तिविषये एको लेखः 'अपि भ्रान्तमस्तिष्कं शासनयन्त्रम्' इति शीर्षकेण लोकमान्यैर्मुद्रितः। मदोन्मत्तो गजो यथा इतस्ततो धावन् सर्वनाशं करोति तथैव शासनसंस्थायाः स्थितिरिति तैः प्रतिपादितम्। घातकस्यान्वेषणाय विंशतिसहस्ररूपकमितं पारितोषिकमलम्। परं निखिले पत्तने विशेषरक्षापुरुषाणां किमर्थमुपद्रवः?

तेन घातकोपलब्धिर्भवेदिति न निश्चयः। वधकारी कश्चित् ब्राह्मणो वर्तते, जीवितापहरणाय कपटप्रबन्धरचना कृता विद्यते इति शासनसंस्थाया मतिः। द्वयमप्येतदसम्भाव्यमिति लोकमान्यैः पुनः पुनः प्रतिपादितम्। घातको ब्राह्मणो न स्यादिति लेखनमसत्यमभूत्। परं कपटप्रबन्धरचना नास्तीति शासनसंस्थया प्रमाणैर्निर्णीतम्।

शासनयन्त्रं तु तथा कुपितमासीत् यथा 'भाण्डारकर-कावसजी होरमसजी'प्रभृतयः प्रतिष्ठिता राजमान्या अपि नागरिका रँड्महाशयस्यान्त्यविधिसमये उपस्थातुकामा रक्षापुरुषैः श्मशानभूमौ निरुद्धाः। तेभ्यः प्रवेशोऽपि न दत्तः। शवदर्शनं तु दूरे एव।

राज्यशासनं नाम न वैरसाधनमित्यपि लोकमान्यैः कथितम्। राजद्रोहो नाम किमित्यपि तैर्विस्तरेण चर्चितम्। लोकमान्यानां भाषणानि राजद्रोहपूर्णानि सन्ति न वेत्यपि 'पार्लमेंट'सभायां केनापि सदस्येन पृष्टम्। राज्यव्यवहारशास्त्रस्यायं प्रश्नः मुम्बईप्रदेशशासनसंस्थया अद्यापि न निर्णीत इति अमात्येन कथितम्।

आङ्ग्लदेशे रँड्महाशयवधवार्तायां प्रसृतायां तद्देशीयवृत्तपत्रैर्विविधा विचाराः प्रदर्शिताः। शासनयन्त्रं भ्रान्तचित्तं वर्तते इति विशेषरक्षापुरुषनियुक्त्या दृश्यते इति 'डेली क्रॉनिकल'पत्रेण लिखितम्। वधो भविष्यतीति पुण्यपत्तनस्थैः सर्वैरपि नागरिकैर्ज्ञातपूर्वमेव। वधे जाते सर्वेषां मुखकमलानि प्रसन्नान्यासन्निति 'लंडन'पत्रेण प्रसिद्धिं नीतम्। केचिदवदन् तद्देशीयवृत्तपत्राण्येवोत्तरदायित्वेन प्रष्टव्यानि। अन्येऽब्रुवन् 'धार्मिकविषये कृतस्य परिवर्तनस्येदं फलम्'। इतरे व्याक्रोशन् 'सर्वे ब्राह्मणा बन्धनं नीत्वा वधस्तम्भं नेतव्याः'। अपरे उदगिरन् 'आङ्ग्लसैनिकान् मुक्त्वा भारतीयानां गृहाणि मन्दिराणि च शासनसंस्थयाऽपविित्रीकृतानि। अधुना किं स्यते?' 'मँचेस्टर गार्डियन्' वृत्तपत्रवार्ताहरेण तदा आङ्ग्लदेशे विद्यमाना राजमान्या 'गोखले'महाशया दृष्टाः पृष्टाश्च। अन्योन्यदर्शनसमये जातानां प्रश्नोत्तराणामाशयस्तु एवमेव "ग्रन्थिज्वरप्रतिबन्धाय नियुक्तायाः समित्याः महानुपद्रवो जातः। समित्याः अधिकारिभिः सैनिकैश्च स्त्रियो राजमार्गमानीय परीक्षिताः। उपमर्द एष तासाम्। द्वित्रैः

सैनिकैस्तासु अनुचितमाचरितम् । एकया आत्मघातोऽपि कृतः । तस्मादेते वधा जाता इति तर्क्यते''इति ।

गोखलेमहोदयानां दर्शनवार्ता 'मँचेस्टर गार्डियन्'वृत्तपत्रेण मुद्रिता। सपद्येवाङ्ग्लजनेषु महान् संक्षोभः उदपद्यत । सत्यशोधनाय 'लंडन'नगरात् मुम्बापुरीं मुम्बापुरीतो लंडननगरं सन्देशाः प्रतिसन्देशा गताः । मुम्बई-प्रदेशशासनसंस्थया प्रहितेषु सन्देशेषु विश्वस्य लंडननगरस्थभारतशासन-संस्थायाः प्रधानाधिकारिणा उद्घोषितम् । गोखलेमहाशयकृताः सर्वे आरोपाः सर्वथा असत्याः । वस्तुतस्तु गोखलेमहाशयैः कृतान्येतानि विधानानि पुण्यपत्तनस्थप्रतिष्ठितनागरिकलिखितपत्राणामाधारेण कृतान्यासन् । परं सर्वेऽपि ते पत्रलेखका अस्मिन् समये तूष्णीं स्थिताः । नैकोऽपि कृतानां विधानानां समर्थनार्थं पुरतः समागतः । अतो गोखलेमहाशयानां क्षमायाचनमावश्यकं जातम् ।

## ३ अभियोगपूर्वकारावासः

अस्मिन्नेव काले लोकमान्या मुम्बापुरीमागताः । एक उद्देशस्तु राज-द्रोहाभियोगविषयकं वार्ताहरणम् । अपरश्च गोखलेमहाशयेभ्यः साहाय्य-दानम् । परं तस्मिन्नेव काले मुम्बईप्रदेशशासनसंस्थाया आज्ञापत्रानुसारतो राजपुरुषैर्लोकमान्या बन्दिमार्हं गृहीताः । आर्यभूषणमुद्रणालयस्वामिनो 'हरि नारायण गोखले'महाशयास्तथा व्यवस्थापका 'बाळ'महाशया अप्याज्ञा-पत्रेण गृहीताः कारागृहं च नीताः । लोकमान्यानां परमसुहृद् 'दाजी-साहेब खरे'महोदया मध्यरात्रसमये प्रतिभूसम्बन्धेन लोकमान्यदर्शनार्थं कारागृहं गतास्तदा लोकमान्या गाढं प्रसुप्ता अवलोकिताः । महादाश्चर्यमेतत् । उक्तं च —

'लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति' ।

प्रतिभूविषये आशाऽपि नासीत् । तथाऽपि प्रयत्नस्तु करणीय एवेति निश्चितम् ।

पुण्यपत्तने श्रीमान् 'बाळासाहेब नातू'महाशयस्तथा तस्य भ्राता 'तात्यासाहेब'महाशयो द्वावपि '१८२७ रेग्युलेशन'नामकेन विधिना बन्दिनौ कृत्वा प्रथमं मुम्बापुरीं नीतौ । तत्र रक्षापुरुषाः 'तात्यासाहेब'महाशयं

समीपस्थे ठाणेनगरकारागृहे अस्थापयन्। 'बाबासाहेब'महाशयं च गुर्जर-प्रदेशे 'साबरमती'कारागारमनयन्। १८२७ रेग्युलेशननामकविधिना न्यायालये बन्दिजनापराधपरीक्षणं नापेक्ष्यते। अतो विनाभियोगेन तावुभौ बहुदिवसान् कारागृहे प्रक्षिप्तौ। वारं वारं नातृभ्रातृद्वयं कारावासान्मोक्षणार्थं प्रार्थनापत्राणि प्रेषयति स्म। परं कंचित् कालं शासनसंस्थया तयोरुपेक्षा कृता। उभयोरपि भ्रात्रोरन्ते मोक्षणमावश्यकं जातम्। अनेनैव कालेन 'पुणे वैभव-मोदवृत्त-प्रतोद'इत्यभिधानानां वृत्तपत्राणां सम्पादका अपि राजद्रोहापराधेन रक्षापुरुषैर्निगृहीताः। तेषामभियोगाः संक्षेपेणाग्रे कथयिष्यन्ते।

## ४ प्रतिभूविषयः

कनिष्ठन्यायालये प्रतिभूविषयकं प्रार्थनापत्रकं लोकमान्यविधिज्ञेन दत्तम्। परं तन्न सम्मतमभूत्। पुनः वरिष्ठन्यायालये प्रार्थनापत्रं समर्पितम्। तदपि पुनरसम्मतं जातम्। कनिष्ठन्यायालये राजद्रोहप्रकरणस्य प्राथमिक-परीक्षणं कृत्वा सर्वमेतत् प्रकरणं न्यायाधीशेन वरिष्ठन्यायालये प्रवेशितम्। तत्र पुनरेकदा प्रतिभूविषयकं प्रार्थनापत्रकं समर्पितम्, कथितं च यदि लोकमान्यास्तात्कालिककारावासान्मुक्तास्तर्हि ते न कुत्रापि पलायिष्यन्ते। परम् आत्मनो निरपराधित्वे प्रमाणान्याहर्तुं, सङ्कलयितुं, पण्डितान् विधि-ज्ञान् वारं वारं द्रष्टुं च समर्था भविष्यन्ति। तस्मात् ते मोक्तव्या इति। अस्य प्रतिभूप्रकरणस्य परीक्षणकाले 'बद्रुदिन तय्यबजी'महाशया न्यायासने उपविष्टा आसन्। लोकमान्यपक्षीया विधिज्ञाः 'दावर'महाशया आसन्, ये दशहायनानन्तरं जातस्य राजद्रोहाभियोगस्य परीक्षणे न्याया-धीशा अभूवन्। प्रतिभूविषयकप्रार्थनापत्रस्य परीक्षणसमये यदा दावरमहा-शयाः कारणानि प्रतिपादयन्ति स्म तदा न्यायाधीशमहाशया अपि स्वयमेव प्रतिभूविषयकद्रव्यविषये चर्चां कृत्वा लक्षरूपकमूल्यस्य प्रतिभुवं स्वीकृत्य लोकमान्यान् तात्कालिककारावासान्मोचयितुं समाज्ञापयन्। 'यशवंत विष्णु तथा अण्णासाहेब नेने'महाशयाः 'शेठी द्वारकादास धरमसी'महाशयाः इति द्वौ प्रतिष्ठितनागरिकौ प्रतिभुवौ स्वीकृतौ।

## ५ सुहृत्साहाय्यम्

राजद्रोहाभियोगकाले लोकमान्येभ्यः साहाय्यं दातुं 'यशवंतराव नेने-दाजीसाहेब खरे-माधवराव बोडस-नानासाहेब देशमुख-भाऊसाहेब आठल्ये-ॲड्व्होकेट् सेटलूर-केशवराव देशपांडे-ओकशास्त्री-वैद्यबन्धू-दाजीबा पिटकर'-प्रभृतयो विधिज्ञा अविधिज्ञाः प्रतिष्ठितनागरिका मुम्बापुर्यामासन् । पुण्यपत्तने 'वासुदेवराव जोशी'प्रभृतयोऽवर्तन्त ।

बन्धनान्मुक्ता भूत्वा लोकमान्या यावत्पुण्यपत्तनं गच्छन्ति तावत् 'क्षते प्रहारा निपतन्त्यभीक्ष्णम्' इति न्यायेन लोकमान्यानां परमं मित्रं 'बाबामहाराज'महाशया विषूचिकारोगग्रस्ता भूत्वा सत्वरं पञ्चत्वं गताः । निधनात्पूर्वं तैरात्मनो विभवस्य व्यवस्थापत्रकं लोकमान्यसाहाय्येन कृतम् । बाबामहाराजमहाशयानामत्याग्रहेण विश्वस्तेषु लोकमान्यानां समावेशस्तेषां सम्मत्या कृतः । अनेन समावेशेन भविष्यत्काले प्राप्स्यमानाया महाविपत्तेर्बीजारोपणं जातम् । अभियोगसम्बन्धीनि सर्वाणि साधनानि प्राप्तव्यानि । द्रव्यमूलाः सर्वे व्यवहाराः । तस्य तु पूर्णतया अभावः । केसरिपत्रम् ऋणमुक्तं नासीत् । तस्य वार्षिकमूल्यात् लोकमान्यानां दैनंदिनचरितार्थाय कुटुम्बभरणपोषणायापि धनं न प्राप्तम् । तस्माल्लोकमान्यैर्विधिस्मृतिव्यवहारशास्त्राणामध्यापनवर्गः प्रारब्धः । तस्माद्यो धनलाभो जातः स कुटुम्बभरणायाकल्पत ।

एष राजद्रोहाभियोगोऽपूर्व आसीत् । लोककल्याणाय बद्धपरिकरेषु लोकधुरीणेषु जनानां महान् विश्वासः स्नेहभावश्च । तस्मादियमभियोगविपत्तिर्न केवलं लोकमान्यानाम्, अपि तु अखिलमहाराष्ट्रदेशस्य, तथा परम्परया सर्वस्य भरतखण्डस्यापि इति मत्वा लोकैरपि लोकमान्यपरित्राणायास्य अभियोगस्य पुरस्कारः कृतः । अभियोगेन प्रतिपत्स्यमानाद्दण्डात् लोकमान्यान् परित्रातुं द्रव्यनिधिकल्पना समुद्भूता । तथैव न्यायकर्मकुशलानां विधिव्यवहारशास्त्रज्ञानां च मन्त्रविषयकसहकारसूचना जनैरवलम्बिता । द्रव्यनिधिवार्ता जनैः केसरिपत्रे उद्घोषिता । जातमात्रायां घोषणायां जना अहमहमिकया साहाय्यदाने तत्परा बभूवुः । लोकमान्या अपि स्वावलम्बनेन अभियोगव्ययार्थं द्रव्यव्यवस्थामकुर्वन् । तेषां परमसुहृदः 'वासुदेवराव जोशी'महाशयाः, तैरपि ऋणं दत्त्वा महत् साहाय्यं कृतम् । मन्त्र-

विषयकसूचनाया अपि तथैव स्वागतमभूत् । स्थानिकविधिज्ञेभ्यः परप्रदेशस्थविधिज्ञाः सुतरां परिणामावहा इत्यकारणं मन्यन्ते जनाः । तस्मात् वङ्गदेशवासिनः तत्रस्थानाङ्ग्लदेशीयविधिज्ञान् प्रहितुं समुत्सुका बभूवुः । 'प्यू'नामको 'गार्थ'नामकश्च द्वौ विधिव्यवहारशास्त्रकुशलौ महापण्डितौ लोकमान्यपरित्राणार्थं प्रेषणीयौ इति वङ्गवासिभिर्निश्चितम् ।

## ६ चातुर्यप्रसङ्गः

यदा लोकमान्या अभियोगसम्बन्धिनीं व्यवस्थां कर्तुं पुण्यपत्तनमागतास्तदा तेषां बुद्धिकौशलव्यवहारचातुर्यदर्शनकारिण्येका विनोदपूर्णा घटना जाता । तथा हि । पूर्वोक्तो 'ब्रुइन'महाशयश्चारकर्मकुशलः प्रणिधिः रँड्महाशयवधविषयिणीं कामपि वार्तां सम्पादयितुकामो लोकमान्यगृहं तेषां दर्शनार्थं प्रत्यहं समागत्य इतस्ततो वार्ताऽऽलापान् चिरकालं करोति स्म । उद्देशस्तु कथाप्रसङ्गेन वधविषयकं किमपि सूचितं स्यात् । विविधविषया उभाभ्यां चर्चिताः । दूरदर्शिनो व्यवहारचतुराश्च लोकमान्याः । धूर्तेषु ख्यातनामा ब्रुइनमहाशयः । अनयोरेष संवादः । लोकमान्या राजद्रोहाभियोगविषयिकां वार्तां ज्ञातुमिच्छन्ति । ब्रुइनमहाशयो रँड्महाशयवधविषयकं किमपि सूचितं भवेदित्यभिलषति । अथैकदा कथाप्रसङ्गेन ब्रुइनमहाशयः स्पष्टमेवावदत् 'युष्माभिर्घातकस्य शोधार्थं साहाय्यं दातव्यम्' इति । सोऽब्रवीत् 'यदि लोकमान्या एवं मनसि कुर्युस्तर्ह्यस्माकं शोधकार्यं सुकरं भवे'दिति । स्पष्टमेवास्मिन् प्रश्ने कृते लोकमान्याः प्रत्यभाषन्त "स्वयमागत्य को जनो मां तद्विषयिकां वार्तां कथयेत् ? अतः अशक्तोऽस्मि साहाय्यं दातुम् । अन्यच्च । जानातु भवानिदमपि । यदि कथंचित् कुत्रचिदेतद्विषयकं किमपि मया सम्प्राप्तं स्यात्तथाऽपि मया तद् भवते न कथनीयम् । कुत इति पृच्छ्यते चेत् उच्यते कारणद्वयादिति । प्रथमं कारणं न मया कस्यापि विश्वासघातः कर्तव्यः । अपरं शासनसंस्थायाश्चारकर्म मया न स्वीकृतम् । यद्यपि रँड्महाशयघातकोऽवश्यमेव न्यायालये दण्डनीय इति मे मनस्यपि कस्यापि विश्वासघातो मया किमर्थं कर्तव्यः ? भवतां चारकर्मणि मत्तः कोऽपि विघ्नो न सम्भवेत् । एष वधः पुण्यपत्तनस्य महल्लाञ्छनमिति यत्

'लॅम्ब्'महाशयेनोक्तं तदयुक्तम् । प्रयत्नानां परां काष्ठां कृत्वा भवद्भिर्घातको दण्डनीय इत्यपि अहं ब्रवीमि । भवतां तत्कर्तव्यमेव" इति । अनेन लोकमान्यानामुत्तरेण ब्रुइनमहाशयो नैराश्यं गतः । शासनसंस्थाया एषा मतिः यत् केनापि मार्गेण जीवितापहरणार्थं रचिते कपटप्रबन्धे लोकमान्यानां सम्बन्धो दर्शयितव्य. । परम् एतत्सफलतां न गतम् ।

आक्षेपितलेखानामाङ्ग्लभाषायां रूपान्तरं कृत्वा, अभियोगविषये उपयोक्तव्यान्यन्यानि साधनानि सङ्गृह्य लोकमान्या मुम्बापुरीं गताः । 'ग्यू-गार्थ-चौधरी'प्रभृतयो विधिव्यवहारशास्त्रनिष्णाताः पण्डिता वङ्गवासिभिः प्रहिताः । मुम्बापुरीस्थाः 'दाजीसाहेब खरे-माधवराव बोडस-ॲड्व्होकेट सेट्लूर-बॅ. केशवराव देशपांडे-सॉलिसिटर् भाईशंकर कांगा'-प्रभृतयः सुविख्याता महापण्डिता. साहाय्यार्थमासन् । न्यायासने 'स्ट्रॅची'नामका आङ्ग्लदेशीया न्यायाधीशा उपविष्टा आसन् । तदानीं वरिष्ठन्यायालये द्वौ भारतीयौ न्यायाधीशौ 'माधवराव रानडे-बद्रुदिन तय्यबजी'नामानौ आस्ताम् । परं तयोः पुरतोऽयमभियोगो नागतः । सप्टेंबरमासे अष्टमे दिवसे द्वादशवादनवेलायां लोकमान्येषु कृतानारोपान् वाचयित्वाऽभियोगस्य प्रारम्भो जात. । न्यायाधीशमहाशयैर्न्यायप्रमाणकुशला वङ्गवासिनो विधिज्ञाः 'प्यू'महाशया एवाज्ञापत्रेण स्वीकृताः । नान्ये । प्रमाणपुरुषगणे पञ्च सभ्या आङ्ग्लदेशीया, एको 'ज्यू'धर्मी, अन्यः 'झरतुष्ट्र'नुयायी, अपरौ द्वौ दाक्षिणात्यौ इति नवसंख्याका आसन् । एतं प्रमाणपुरुषगणं वीक्ष्य लोकैरेतन्निश्चितप्रायं यत् सर्वेषां सभ्यानामैकमत्येन निर्णयो न भविष्यतीति । आर्यभूषणमुद्रणालयस्य स्वामिन., तथा व्यवस्थापका 'बाळ'महाशया लोकमान्यैः सह राजद्रोहेणाभियुक्ताः, यतस्ते केसरिपत्रस्य मुद्रणसम्बन्धि कार्यं समालोकयन् ।

शासनसंस्थायाः सम्मतिविषयिकां प्रास्ताविकीं चर्चां समाप्य राजद्रोहविषये साक्षिणः परीक्षिताः । दण्डविषयकशास्त्रस्य '१२४(अ)'परिच्छेदेन लोकमान्या राजद्रोहापराधेनाभियुक्ताः । केसरिपत्रस्थलेखेषु विद्यमानानां शब्दानां, शब्दसमूहानां, वाक्यानां चार्थविषये प्रदीर्घा चर्चा जाता । उभयपक्षविधिज्ञा न्यायाधीशाश्च 'मराठी'भाषां नाजानन् । लेखानाम् आङ्ग्ल-

भाषायां रूपान्तरं तेषां प्रधानाधारः। अतस्तदाङ्ग्लभाषायां कृतं रूपान्तरं मूललेखानां वाच्यलक्ष्यादिसर्वप्रकारेणार्थवाहकं भवति न वा इत्यस्मिन् विषये महान् विवादः समजायत। साकल्येन शासनसंस्थायाः सप्त साक्षिणः परीक्षिताः। लोकमान्याः स्वनिरपराधित्वं प्रस्थापयितुं प्रमाणानि दातुं नैच्छन्। अतः समापितायां साक्षिणां परीक्षायां शासनसंस्थाविधिज्ञा 'ॲड्व्होकेट् जनरल् लॅंग्'महाशयाः भाषणार्थमुदतिष्ठन्।

## ७ लॅंग्महाशयभाषणम्

लॅंग्महाशया अभाषन्त "टिळकमहाशया लोकेषु प्रतिष्ठिता विद्यापीठस्य तथा विधिमण्डलस्य सदस्याः सन्ति। केसरिपत्रं बहवो जनाः क्रीणन्ति वाचयन्ति च। अतस्तद्वृत्तपत्रमपि प्रतिष्ठितम्। तस्मिन् मुद्रिता लेखा जनमनांसि समाकर्षन्ति, तेषु परिणामं च कुर्वन्ति। केसरिपत्रस्य सहोदरो 'मराठा' ब्रूते 'अद्य वा श्वो वा हस्ते शस्त्रग्रहणं लोकानामावश्यकं भवेत्'। दुःखेन प्रजाः संत्रस्ता न वेति वक्तुमहं न शक्नोमि। परं लेखेष्वेतत् वर्तते। उत्सवप्रसङ्गं साधयित्वा प्रजानामन्तःकरणेषु शासनसंस्थाविषये अप्रीतिः समुत्पादिताऽऽसीत्। 'विभूतिपूजा-रामजयन्ती-शिवजयन्ती' इत्यादिशीर्षका लेखाः किं दर्शयन्ति? ब्राह्मणानामुपद्रवः, गोवधः, कपिकृतलङ्काराज्यविध्वंसः, छत्रपतिशिवरायस्य पुनर्जन्मप्रार्थना इत्याद्युल्लेखाः किं दर्शयन्ति? लेखानां भाषान्तरविषये केचिदाक्षेपा वर्तन्ते। परं सर्वं भाषान्तरं भाषाशास्त्रज्ञैः कृतमस्ति। यद्येतदसमीचीनं तर्हि साक्षिणां साहाय्येन तेषामन्यथाकरणं टिळकमहोदयानां प्रथमं कर्तव्यमासीत्। तत्तैर्न कृतम्। भरतखण्डं दारिद्र्यदुःखपीडितं वर्तते। भारतीयजनाय धार्मिककृत्येषु उपद्रवो विद्यते। गौरकाया अपराधिनो मिथ्याप्रमाणैरपराधान्मुक्ता भवन्ति। केचिज्जना अस्मिन् राज्ये स्त्रीमर्यादामुल्लङ्घयन्ति इत्यपि लोकमान्यैर्दर्शितम्। शिवछत्रपतिकाले एतन्निशम्य खड्गानां सहस्रं निष्कोशमभूत्। एतादृशैः शब्दैः किं ध्वनितम्? 'उपद्रवपरिहार'शब्दस्य न सौम्योऽर्थो दृश्यते। राजसूययज्ञस्य हीरकमहोत्सवेन साम्यं सहेतुकं प्रदर्शितम्। 'गृहप्रविष्टाः स्तेना वन्दिनः कृत्वा दग्धव्याः।' अस्य वाक्यस्य कोऽर्थः? 'असन्तोषः श्रियो मूलम्' इति महर्षिव्यासोपदेशः। अतोऽस्मिन् राज्ये

प्रजानां तदेव प्रथमं कर्तव्यं भवति । जना असन्तुष्टा भवेयुरिति । संक्षेपेण लेखानामयमेवोद्देशः । शासनसंस्थायाः कर्मसु न केवलमरुचिप्रदर्शनम् अपि तु प्रजासु शासनसंस्थाकर्तव्यकर्मविषये अप्रीतिसमुत्पादनम् । तेन प्रजानामसन्तोषः । अतः टिळकमहोदया. १२४ ( अ ) परिच्छेदस्य स्पष्टीकरणफलार्हा अपि न भवन्ति " इति ।

## ८ 'प्यू'महाशयभाषणम्

लॅंगमहाशयानां भाषणम् अर्धयामपर्यन्तं जातम् । प्यूमहाशयानामपि भाषणपद्धतिः शान्ता सरला चासीत् । तेऽब्रुवन् ' निखिलमपि वातावरणं लोकमान्यविरुद्धम् । यदि रॅंड्महाशयस्य वधो न स्यात्तर्हि एष अभियोगोऽपि न भवेत् । अपरं च स वधः पुण्यपत्तने जातः । एष अभियोगः पुण्यपत्तनस्थन्यायालये न प्रविष्टः । अत्र प्रमाणपुरुषगणे नैकोऽपि सभ्यः 'मराठी'भाषाऽभिज्ञः, नापि न्यायाधीशः । पुण्यपत्तने प्रमाणपुरुषगणे मराठीभाषाभिज्ञानां सङ्ग्रहः स्यादेव । आङ्ग्लदेशे पार्लमेंटसभायां छतः प्रश्नोत्तराणां कोलाहलोऽपि लोकमान्यविरुद्धः । भाषाशास्त्रज्ञेभ्यः साक्षिभ्यो निमन्त्रणं शासनसंस्थाया. कर्तव्यमासीत् । तदपि तया न कृतम् । परीक्षणार्थं केचन लेखा अस्माभिर्दत्ता । अतो लॅंगमहाशया भाषणं कर्तुं समर्था अभवन् । अन्यथा तेऽपि वक्तुमसमर्था । आरोपस्तु सर्वथाऽसिद्ध । सर्वेऽपि लेखा भाषालङ्कारयुक्ता. । भाषान्तरं प्रमादपूर्णम् । सा भाषा यदि वाच्यार्थेन गृहीता स्यात्तर्हि किं प्रयोजनमलङ्काराणाम् ? शब्दप्रयोगोऽपि विफलो भवेत् । छत्रपतिशिवरायमहोत्सव. किमर्थमारब्ध. ? विभूतिपूजायाः किं महत्त्वमित्यपि प्यूमहाशयैर्विस्तरेण वर्णितम् । आङ्ग्लदेशेऽपि विभूतिपूजा वर्तते । तत्रोत्सवेषु जना महताऽऽवेशेन भाषन्ते । परं न तत्र राजद्रोहाभियोगः सम्भवति । कथं स भारतदेशे सम्भवति इति वयं न जानीमहे । यदि सर्वे ते चकारो राजनिष्ठा इति मन्यन्ते तर्हि तेनैव न्यायेन लोकमान्या अपि राजनिष्ठाः सन्ति । 'अफजुलखान'वधस्य समर्थनेन टिळकमहोदयैः रॅंड्महाशयघाताय प्रोत्साहनं दत्तमित्यपि असमीचीनम् । अन्यच्च । प्राचीन एवायं विषयः । यद्येवं तर्हि किमर्थं १२४(अ)परिच्छेदेनाभियोगः कृतः । वधोत्तेजनविषये यः परिच्छेदो वर्तते तेनैवाभियोगः कर्तव्यः । राजद्रोह-

परिच्छेदस्य योऽर्थ. आङ्ग्लदेशे स्यात् स एवार्थो भरतखण्डे । एकोऽर्थस्तत्र, अपर. अत्र, एवं भवितुमयुक्तमेव । हीरकमहोत्सवविषये ये लेखा. टिळकमहाशयै. प्रकाशिता तैस्तेषां राजनिष्ठा सुव्यक्ता भवति । यदि ते राज्यक्रान्तिमभिलषन्ति तर्हि दुर्भिक्षकाळ ग्रन्थिज्वरसमयश्च अतीव समुचितावास्ताम् । परं टिळकमहोदयाः क्रान्तिमकृत्वा ग्रन्थिज्वरनिवारणाय रुग्णालयमस्थापयन् । सर्वमेवैतत्प्रकरण विस्तृतं वर्तते' ।

अन्ते 'प्यू'महाशयैर्विस्तरश १२४ ( अ ) परिच्छेदस्य विशदीकरणं कृतम् । सर्वथानुकूलप्रमाणानि दातुं यदा प्यूमहाशया प्रवृत्तास्तदा न्यायमूर्तिभि सह तेषा प्रदीर्घो विवाद समजायत । अप्रीतिशब्दार्थविषये दीर्घकाल चर्चा अभूत् । टिळकमहोदयाना निरपराधित्वे बहूनि प्रमाणानि सन्तीति पुन पुन प्रतिपाद्य प्यूमहाशयै. समापित निजभाषणम् ।

## ९ न्यायाधीशसमारोपः

न्यायाधीशैरुभयो पक्षयो प्रमाणान्येकीकृत्य राजद्रोहाभियोगस्य विस्तरेण समारोप. कृत । सकल समारोपो विपरीतार्थको लोकमान्यविरुद्धश्च । टिळकमहोदयाना हेतुरेव राजद्रोहमूलक इति मनसि निश्चित्य सर्वाण्यपि लेखस्थानि वाक्यानि द्वेषमूलकान्यासन् इति न्यायाधीशैरुक्तम् । राजद्रोहस्यापराधे राज्यक्रान्तिसाधनसामग्रीसम्पादनपरीक्षणं वा तद्बुद्धिपरीक्षणं वाऽनावश्यकम् । राज्यसत्ताविषये तस्या अप्रीतिर्नाम तस्या द्वेषभाव इति १२४ ( अ ) परिच्छेदान्तर्गतशब्दाना विपरीतार्थो न्यायाधीशै. स्वीकृत । टिळकमहोदयानामनुकूल एक एव विषयस्तैरुक्त आसीत् यद् रँडमहाशयस्य घाते लोकमान्याना लेखाना न कोऽपि बादरायणसम्बन्ध ।

समापिते समारोपे प्रमाणपुरुषगणस्था सभ्या. विचारविनिमयार्थमन्तर्गत्वा नातिचिरेण बहिरागत्य आत्मनो निर्णयमूचु " सर्वेषामैकमत्येन ' केशवराव बाळ ' महाशया अपराधिनो न वर्तन्ते । पर टिळकमहोदया षण्णा सभ्याना मतेन अपराधिन आसन् " इति । न्यायाधीशै सभ्यानां बहुमतेन जात. स निर्णय स्वीकृत । सपद्येव राजसेवकेन लोकमान्या. पृष्टा । राजद्रोहस्यारोपो न्यायालये प्रमाणरचनै परीक्षित सिद्धश्च । तथापि

यूयमदण्ड्या इत्यस्मिन् विषये यदि युष्माकं कानिचित् प्रमाणानि सन्ति तर्हि तानि कथयितुमेष एव समयः इति। लोकमान्याः प्रत्यभाषन्त "सभ्यानां बहुमतनिर्णयेन यद्यप्यहं दोषार्हो दण्ड्यश्च तथाऽपि नाहमपराधीति निश्चयेन मम स्वान्तं कथयति। केसरिपत्रस्था लेखा राजद्रोहबुद्ध्या न लिखिताः। तेषां परिणामोऽपि राजद्रोहोत्पादनफले न भविष्यतीत्यहं मन्ये। भाषानिर्णये भाषापण्डिताः शासनसंस्थया न निमन्त्रिताः" इति।

## १० अभियोगनिर्णयः

एतानि कारणानि न्यायाधीशानामसम्मतान्यासन्। स्पष्टमेव तैरुक्तम् 'प्रजानामन्तःकरणेषु अराजनिष्ठामुत्पादयितुमेव युष्माकं सर्वे प्रयत्नाः इत्यस्मिन् विषये मम मनसि न कोऽपि सन्देहः। यद्यप्येष महानपराधस्तथाऽपि न भयङ्करः। अस्मिन् देशे राजद्रोहस्यायं द्वितीयोऽभियोगः। १२४(अ)परिच्छेदः पुरातनो दुर्लक्षितश्चेति मत्वा निर्भयेन मनसा किमपि लेखनीयमिति भवान् मन्यते। ग्रन्थिज्वरकाले भवद्भिर्महत्साहाय्यं शासनसंस्थायै दत्तम्। परं भवतां वैदुष्यं कुशाग्रबुद्धिमत्त्वं च विचिन्त्य भवद्भिरेतल्लेखनं कृतमिति तु असमीचीनम्। एतादृशा लेखा अन्ततो हानिकरा भवेयुः। अतो न लेखनीयाः। एवं सम्यग् विचार्य सार्धवर्षभोग्येण सश्रमकारावासेन भवन्तमहं दण्डयामि' इति। आर्यभूषणमुद्रणालयस्य व्यवस्थापका 'बाळ'महाशया आरोपात्सर्वथा निर्दोषं मुक्ताः। समाप्ते न्यायनिर्णये सपदेव रक्षापुरुषैर्लोकमान्याः कारागृहं नीताः।

न्यायालयस्यैष निर्णयो जनतान्यायालयस्य अमान्यो जातः। सर्वैरपि भारतीयवृत्तपत्रैर्निर्णयविरुद्धा अभिप्राया दत्ताः। दण्डनीत्याः १२४ (अ) परिच्छेदविषये महान् विवादः समजायत।

न्यायालयनिर्णयानन्तरं वरिष्ठन्यायालये प्रकरणपरीक्षणार्थं प्रार्थनापत्रं क्रमप्राप्तमेव। तदर्थं प्रार्थनापत्रकं समर्पितम्। परं प्राड्विवाकत्रयेण तत् सम्यग्विचिन्त्य न स्वीकृतम्। अतो विशेषाधिकारेण आङ्ग्लदेशे 'लंडन'नगरस्थ'प्रीव्हीकौन्सिल'नामके सर्ववरिष्ठन्यायालये लोकमान्यानां राजद्रोहप्रकरणस्य परीक्षणार्थमविलम्बेन प्रार्थनापत्रकं दत्तम्। तदर्थमन्यां सामग्रीं सम्पादयितुं तथैव सुविख्यातान् विधिव्यवहारपण्डितान्

प्रापयितुं लोकमान्यानां परमं मित्रं 'दाजीसाहेब खरे'महाशयास्तथाऽन्येऽपि तेषां सहायका आङ्ग्लदेशमगच्छन्।

१२४ (अ) परिच्छेदस्य विपरीतार्थो, न्यायमूर्ति'स्ट्रॅची'महाशयस्यैकदेशीयः समारोपः इत्यादिप्रकारैः शासनसंस्थायै क्रुद्धा जना लोकमान्यान् स्निग्धेन चक्षुषाऽद्राक्षुः। लोकमान्यानां वैदुष्ये तथा देशभक्तौ जनानामत्यादर आसीत्।

## ११ तेजस्विता

लोकमान्यैः क्षमायाचनं कर्तव्यमिति व्यूहो लोकमान्यमित्रद्वारा कैश्चिच्छासनसंस्थाहस्तकैर्विरचितः। यद्येवं स्यात्तर्हि समग्रमेतत् राजद्रोहप्रकरणं न्यायालयान्निष्कासितं भवेदित्यपि तैरुक्तम्। परम् इयं सूचना रोषारुणचक्षुषा लोकमान्यैस्तिरस्कृता। वृत्तपत्रे तथैव मुद्रितमपि। वङ्गदेशीय 'अमृतबझारपत्रिका'सम्पादकैः 'बाबु मोतीलाल घोष'महाशयैः प्रेषितस्य पत्रोत्तरे लोकमान्यैरर्थपूर्णमेकं वाक्यं लिखितमासीत्–

"नाहं वेतस इव वीर्यहीनः"।

क्षमायाचनेन दण्डाभावेऽपि लोकमान्यैरयं हीनमार्गो नाङ्गीकृतः। तेनापि जनानां मनसि लोकमान्यानां कृते अत्यादरः समुद्भूतः।

रँड्महाशयस्य घातके उपलब्धे शासनसंस्थया वधाभियोगो न्यायालयप्रविष्टः कृतः। तस्य निवेदनमन्यत्र वर्तते। अस्मिन् वधप्रकरणे लोकमान्यानां न कोऽपि सम्बन्ध इति वधाभियोगे निर्णीतम्। सम्बन्धं दर्शयितुं शासनसंस्था यद्यपि समुत्सुका तथापि कमपि सम्बन्धं स्थापयितुमसमर्था सा हताशा बभूव। तेन कारणेन दण्डोऽपि सार्धवत्सरादधिको न जातः। अतो लोकमान्यविषयको जनानामादरो वृद्धिं प्राप्तवान्।

नोव्हेंबरमासस्यैकोनविंशे दिने लंडननगरे 'व्हाइटहॉल'नाम्नि सभामण्डपे चतुर्णां न्यायमूर्तीनां मण्डलस्य पुरतो लोकमान्यानां राजद्रोहाभियोगप्रकरणपरीक्षणप्रार्थनापत्रं विचारार्थं समागतम्। लोकमान्यानां कृते 'ॲस्क्विथ्-मेन्-उमेशचन्द्र बानर्जी'प्रभृतयो विधिव्यवहारपण्डिताः प्रमाणपरीक्षणार्थमासन्। 'ग्यू-गार्थ-खरे'प्रभृतयस्तेषां सहायकाः। शासनसंस्थायाः कृते 'वोहेन-ब्रॅन्सन्'महोदयाः प्रमाणानि परिहर्तुमुपस्थिता

आसन् । अप्रीतिशब्दार्थविषये, १२४ (अ) परिच्छेदार्थविषये तैः पाण्डित्यं विस्तरेण प्रकटीकृतम् । शासनसंस्थाकार्यविषये टीका भिन्ना । अथ राजद्रोहशब्दार्थौ भिन्नः । उभयोर्मध्ये महदन्तरम् । अभियोगस्यास्य असामान्यत्वमपि तैर्विधिज्ञैः प्रतिपादितम् । स्ट्रॅचीमहाशयकृतः १२४ (अ) परिच्छेदस्य विपरीतोऽर्थो यदि सम्मतो भवेत्तर्हि आयत्यां तमेवार्थं प्रमाणीकृत्य महाननर्थः सम्भवेत् । परम् एतत्सर्वं प्रतिपादनं जलताडनमिव न किमपि फलमावहत् । अस्यापि अतिवरिष्ठप्राड्विवाकमण्डलस्य निर्णयो लोकमान्यविरुद्धो जातः ।

## १२ अन्याभियोगाः

अन्येऽपि द्वित्रा राजद्रोहाभियोगा अस्मिन् प्रकरणे उल्लेखनीयाः । 'पुणें-वैभव'वृत्तपत्रसम्पादकाः केळकरमहाशया राजद्रोहाभियोगेन दण्डपात्रतां नीताः । परं ते क्षमायाचनेन दण्डान्मुक्ताः । 'उत्तर-सातारा'-विभागे आसीनस्य 'वांई'क्षेत्रस्य वृत्तपत्रं 'मोदवृत्तं' नाम । तस्य सम्पादकमहाशयाः 'काशीनाथ वामन लेले' महाशयाः । 'भाऊशास्त्री लेले' इति तेषां सुपरिचितं नाम । अभियोगपरीक्षणात्, दण्डात् प्रागेव प्रारम्भे तैर्निष्फलं क्षमायाचनं कृतम् । तथाऽपि नवमासभोग्येन केवलकारावासेन एते दण्डिताः । 'प्रतोद'पत्रसम्पादका. 'कशाळ्कर'नामकाः, मुद्रकाः हरमळकरनामकाः । भाग्यचक्रस्य परिवर्तनेन न्यायाधीशेन द्वेषपूर्णमनसा आमरणद्वीपान्तरनिर्वासनेन कशाळ्करमहाशया दण्डिताः, मुद्रकाश्च हरमळकरमहाशयाः सप्तवर्षभोग्येण सश्रमकारावासेन । न्यायाधीशा अवदन् 'दयायुक्तचेतसा मया एष सौम्यो दण्डो विहितः' इति । परं वरिष्ठन्यायालये स दण्डो वर्षभोग्यो जातः, सप्तवर्षभोग्यश्च मासत्रयभोग्यः कृतः । विनोदपूर्णो रमणीयश्चायम् अभियोगवृत्तान्तः । परं स्थलसङ्कोचादुल्लेखमात्रेणैव समाधानं कर्तव्यं भवति ।

आगामिनि काले अचिरादेव १२४ (अ) परिच्छेदः शासनसंस्थया विधिमण्डले विस्तारितो व्यापकश्च कृतः । अस्य परिच्छेदस्य व्यापकं परिवर्तनमेव प्रमाणं यत् स्ट्रॅचीनामकन्यायमूर्तिना परिच्छेदस्थितशब्दानामर्थस्य विपर्यासः कृतः ।

## १२ कारावासः

स पुरुषो यथार्थतया तदानींतनकारावासदुःखं जानीयाद्येन स्वयमेव तद्दुःखमनुभूतम् । अद्यतनकारावासगृहव्यवस्थाम् उत्तममध्यमाधमान् अ-ब-क-वर्गांश्च वीक्ष्य अर्धशतकात्प्राक् सैव व्यवस्थाऽऽसीदिति कल्पनाऽपि सुतरामसम्भाव्या । यः कोऽपि नरस्तदानींतनबन्धनागारदुःखानि सम्यग् ज्ञातुमिच्छेत् स कारावासदुःखमनुभूय प्रत्यागतैर्जनैर्लिखितानि पुस्तकानि वाचयेत् । तदानींतने कारागृहे भोजनार्थमन्नं तु एवमेव– एको निकृष्टः पिष्टकः, कन्दर्पलशुनमिश्रितं किञ्चित् व्यञ्जनं च । तादृशं व्यञ्जनं लोकमान्यैः स्पर्शेनापि न दूषितम् । पिष्टकस्य चतुर्थखण्डमात्रभागं जलमिश्रितं कृत्वा तत्सेवनेन लोकमान्यैर्मासद्वयं यापितम् । कारागृहनियमानुसारतो लोकमान्यानां दैनंदिनाचारः । तेन प्रतिदिनं तेषां शरीरस्वास्थ्यं क्षीणतरं जातम् । आरोग्यं तु नष्टप्रायमेव । राजबन्दिनां पृथग्वर्गाः कर्तव्या इति कल्पनाऽपि कस्यचिन्मनसि तदानीं न समुद्भूता । कारागृहे शिक्षानियमाः कठोरप्रकारेणालोच्यन्ते । परं वाममार्गेण केचन स्वाभिलषितं साध्नुवन्ति इति सूर्यप्रकाश इव स्पष्टम् । प्रतिष्ठितबन्दिजनानां पृथग्विभागस्तदा नासीत् । शासनसंस्था तु राजद्रोहकारिभ्यो नीचं पदं दातुं सयत्नाऽवर्तत । विधिमण्डलसदस्यत्वस्य तथा नगरपालिकासदस्यत्वस्य च त्यागपत्रं लोकमान्यैर्दण्डात् प्रागेव दत्तम् । उर्वरितं तु मुम्बईविद्यापीठसदस्यत्वम् । तदपि शासनसंस्थया निरस्तम् । प्रत्यहं लोकमान्यानां शरीरं क्षीणतरमभूत् । प्रथमं तावत्ते कतिपयान् दिवसान् 'डोंगरी'कारागृहे निहिता आसन् । पश्चाद्रक्षापुरुषास्तान् 'भायखळा'बन्धनागारमनयन् । केचिद्वदन्ति "तस्मिन् कारागृहे तदा 'तात्यासाहेब नातू'महाशया आसन् । अधिकारिणामनुज्ञया गृहे सुमृष्टमन्नं तेभ्यो दत्तमासीत् । तस्मादन्नान् द्वित्रान् पदार्थान् रक्षापुरुषाः कचिल्लोकमान्येभ्यः प्रयच्छन्ति स्म" इति । तथाऽपि लोकमान्यानां प्रकृतिः क्षीणतरा बभूव । कृष्णवर्णमोष्ठद्वयं, मुखं शुष्कं नीरसं च जातम् । एकदा कारागृहवैद्यो लोकमान्यानां पुरत उपस्थायावदत् 'यदि अन्ये भोजनपदार्था भवतां प्रकृतिस्वास्थ्याय न कल्पेरंस्तर्हि मह्यं किमर्थं भवान्नाकथयत्' इति । लोकमान्याः प्रत्यभाषन्त 'मम शरीरं

दर्शनमात्रेणात्रभवान् तत्प्रत्यक्षीकरोतु । मम कथनस्य किं प्रयोजनम् ? किमपि नास्ति' इति । अतोऽधिकारिणो लोकमान्यान् सपदेव पुण्यपत्तनसमीपस्थ 'येरवडा'कारागृहं प्राहिण्वन् । स्थलान्तरेण लोकमान्या प्रकृतिस्वास्थ्यं झटिति नालभन्त । शनैः शनैस्तेषां भोज्यपदार्थेषु चरुदुग्धादिपदार्थानां समावेशो जातः । रक्षापुरुषास्तथाऽधिकारिणश्च लोकमान्यान् किञ्चिदार्द्रबुद्ध्याऽपश्यन् । बन्धनागारे क्रियमाणेषु सुकरं कर्म वर्णशालायां वर्णमिश्रणमासीत् । तल्लोकमान्येभ्यो दत्तम् । बन्दिशालायां तेषामाचारो विशुद्धो नियमबद्धश्च । निजदुःखनिवेदनं ते कदाऽपि न कुर्वन्ति । किमुत विवादः । स तु दूरे एव । अधिकारिभिः सह बन्दिजनानां विवादस्य किं फलम् । यदि किञ्चित् फलं स्यात्तर्हि स्वाभिमानस्यावमानः । अतो लोकमान्या आग्रहेण विवादं परिहरन्ति स्म ।

लोकमान्यान् बन्धनान्मोचयितुं प्रयत्ना जाताः । रँडमहाशयवधप्रकरणे लोकमान्यानां न कोऽपि सम्बन्ध इति वधाभियोगेन निर्णीतम् । तस्माच्छासनसंस्था लोकमान्यान् सौम्येन चक्षुषा पश्यति स्म । न स्निग्धचक्षुषा । 'मुम्बईटाइम्स'पत्रेणापि एतद्ध्वनितम् । लोकमान्यानां भाग्यपङ्क्तिश्चक्रारपङ्क्तिरिव परिवर्तिता दृश्यते । लोकमान्या मुक्ताश्चेत् आयत्यां ते कथं वर्तेरन्निति शासनसंस्थायां महती शङ्का । तस्यां बुद्ध्यां लोकमान्या यावज्जीवं राजकारणविषयं सर्वथा परित्यजेयुः । मोचनानन्तरं च लोकसभासु सत्कारादिकं न स्वीकुर्युरिति । इमं द्वितीयं समयमविलम्बेन लोकमान्या सुखेन स्वीकरिष्यन्ति । सत्कारार्थं, सुगन्धिपुष्परचितपृथुलहारलाभार्थं च कारावासो लोकमान्यैर्नाङ्गीकृतः । परं राजकारणपरित्यागस्तैः कथं स्वीकर्तव्यः ? अस्मिन्नेव काले आङ्ग्लदेशस्थप्रमुखशासनसंस्थया मुक्ताविषयकं किमपि पत्रं राजप्रतिनिधिप्रमुखाय भरतखण्डे प्रेषितमासीदिति तर्क्यते ।

लोकमान्यानां बन्धमुक्तिविषये 'मॅक्समुल्लर'महाशयादीनां पण्डितानां प्रयत्नो विशेषेणोल्लेखनीयः । तेभ्यः केनचित् कथितं लोकमान्यसदृशो महापण्डितो दण्डितो भवतीति तु भृशं शोचनीयम् । मॅक्समुल्लरमहाशयानां लोकमान्यैः सह धर्मिमश्चिद्विषये पत्रव्यवहारः प्रागेव जातः । अवरतं

लोकमान्यान् जानन्त्येव । 'चट्टोपाध्याय'नामकः कश्चित् पुरुषः 'ऑक्स-फर्ड'नगरे मॅक्समुल्लरमहाशयान् मिलितवान् । तदा तस्मै स्वसम्पादितस्य ऋग्वेदग्रन्थस्यैकं पुस्तकं लोकमान्येभ्यः प्रहितुं मॅक्समुल्लरमहाशयैर्दत्तम् । ग्रन्थप्रेषणसमये चट्टोपाध्यायमहाशया लोकमान्यान् लिखन्ति "ऋग्वेदग्रन्थं लोकमान्याः कारागृहे कामयन्ते इति मॅक्समुल्लरमहाशयैः कस्मिंश्चिद् वृत्तपत्रे याचितम् । अतस्तैः सानन्दमयं ग्रन्थः प्रेषितः । लोकमान्यानां कारावासेन तत्रभवन्तोऽतीव दुःखिताः । शासनसंस्थया दयार्द्रदृष्ट्या वर्तितव्यमिति तेषां मतिः । यदि लोकमान्यानां कारावासमुक्तये केचिज्जनाः प्रार्थनापत्रं शासनसंस्थायै प्रेषयेयुस्तर्हि मया तस्याः अनुनये यत्नः कर्तव्यः" इति ।

सफलीभूता इयं कल्पना । अविलम्बेनैव प्रयत्नो जातः । आङ्ग्लदेशस्थ-प्रमुखशासनसंस्थाधिकारिणे लोकमान्यबन्धमोक्षार्थं प्रार्थनापत्रं प्रहितम् । तस्याधस्तात् 'मॅक्समुल्लर-सर् विल्यम् हंटर-सर् रिचर्ड गार्थ-विल्यम् केन्-दादाभाई नौरोजी-रमेशचन्द्र दत्त'प्रभृतीनां प्रतिष्ठितराजमान्यानां नामानि लिखितान्यासन् । प्रार्थनापत्रके एवं लिखितम् "(१) टिळकमहाशया राजनिष्ठाः, मन्त्रकर्मणि कुशलाः विधिमण्डलसदस्याश्च । (२) अभियोगे-नाक्षिप्ता लेखा ग्रन्थिज्वरसमये प्रसिद्धिं गताः । यदि ते राजद्रोहापराधार्हास्तर्हि तस्मिन्नेव काले अभियोगः कर्तव्य आसीत् । न पश्चात्कालातिपातेन । (३) शासनसंस्थायाः कार्याणां कठोराऽपि टीका दण्डनीया न भवति । नायं राजद्रोहः । तस्य प्रथमाघातः टिळकमहाशयेषु इति तु न समीचीनम् । विधिविरुद्धमेतत् । (४) टिळकमहाशयानां 'ओरायन्'नामको ग्रन्थः संशोधनात्मको विद्वत्ताप्रचुरश्च । प्राचीनतमेषु वेदेषु एतेषां चित्तं भृशं रमते । कारागृहकर्मसदृशेषु कर्मसु न तेषां परिचयः । शारीरशक्तिहानिकराणि तानि कर्माणि । (५) केसरिपत्रलेखा न रँडमहाशयवधकर्मप्रवर्तकाः । स घातको भ्रान्तचित्तः कश्चिदशिक्षितपुरुषः । (६) टिळकमहाशयानां दण्डेन सम्मानितं विधिशास्त्रं, सम्पादितं न्यायासनकार्यं च । भुक्तो दण्डः प्रजासन्तर्जनायालम् । साम्प्रतं दयादर्शनं समुचितं भवेत्" इति ।

ऋग्वेदग्रन्थे प्राप्ते लोकमान्यैः कृतज्ञताप्रदर्शनार्थं पत्रे मॅक्समुल्लरमहा-शयान् प्रति लिखितम् "तत्रभवद्भिः प्रेषितं चतुर्विभागात्मकम् ऋग्वेद-

संहितापुस्तकं मया सम्प्राप्तम् । बन्धमोक्षाय प्रहिते प्रार्थनापत्रके तत्रभवतां स्वनामोल्लेखो विशेषेणादरणीयः । तत्प्रार्थनापत्रं फलमावहतु न वा । तत्रभवद्भिः अहमेवमुपकृतोऽस्मि यथा न जाने कैः शब्दैर्मया धन्यवादाः प्रदेया इति । प्राणिमात्रे सङ्कटानि समापतन्त्येव । ममापि इयं विपद्दूरीभविष्यति । परं भवत्कृतसाहाय्यस्य स्मरणमविरतं भविष्यति । गृहेऽपि ऋग्वेदब्रह्मसूत्रभगवद्गीतादिग्रन्थवाचनेनाहं कालं नयामि । तथैवात्रापि वाचनाय तत्रभवद्भिः प्रहितः ऋग्वेदग्रन्थो विशेषेणोपयुक्तो भवेदिति दृढं विश्वसिमि । साम्प्रतम् 'ओरायन्'पूर्वकालस्य संशोधने निरतोऽहम् । बन्धमोक्षणानन्तरं तत्कार्यं ग्रन्थरूपेणाहं सम्पादयामीति मे विश्वासः" इति ।

दिष्ट्या 'सालोमन'नामकः कश्चित् विद्वाँस्तदा कारागृहस्य पर्यवेक्षक आसीत् । तेनेदं ज्ञात्वा दयार्द्रमनसा कानिचित् सुखसाधनानि दत्तानि । रात्रौ दशवादनवेलावधि यावद्दीपव्यवस्था कृता येन लोकमान्याः सुखेनैव ऋग्वेदस्य पर्यालोचनं कुर्युः ।

## १४ मुक्तता

राजकारणपरित्यागसमयः न कदाऽपि लोकमान्यानां सम्मतो भवेदिति ज्ञात्वा अन्यः प्रयत्नः समारब्धो दृश्यते । शासनसंस्थाप्यनेन कालेन बहुलैः कारणैर्लोकमान्यान् मोचयितुं समुत्सुकाऽऽसीत् । विशेषाधिकारयुक्ता ये अधिका रक्षापुरुषा नियुक्ता आसन् ते अविलम्बेन दूरीकृताः । रँडमहाशयस्य वधप्रकरणे लेशतोऽपि कपटप्रबन्धो नास्तीति निश्चितम् । अतो लोकमान्या अपि किमर्थं कारावासदुःखमनुभवेयुरिति बुद्ध्या चारकर्मकुशलस्य ब्रुइनमहाशयस्य मुखेन शासनसंस्था कार्योन्मुखी जाता । ब्रुइनमहाशयेन 'दाजीसाहेब खरे'महाशयैः सह बहु विमृश्य निश्चयः कृतः लोकमान्या मानहानिकरं समयं न कदाऽपि सम्मन्यन्त इति । अतः खरेमहाशयैरपरः पर्यायः सूचितः । यदि भविष्यत्काले राजद्रोहापराधेन लोकमान्या दण्डार्हा भवेयुस्तर्हि शेषदण्डस्य कालखण्डं तेऽनुभवेयुरिति । एष समयः सम्मतो भवेदिति मत्वा ब्रुइनमहाशयः शासनसंस्थाधिकारिभिः सह मन्त्रार्थं गतवान् । मुम्बईप्रदेशराज्यप्रमुखो राजप्रतिनिधिः मन्त्रिभिः सह सुचिरं विमृश्य लोकमान्यान् बन्धनान्मोचयितुं प्रस्तावं कृतवान् । तं प्रस्तावं गृहीत्वा रात्रौ अष्ट-

वादनवेलायां खरेमहाशयानां निवासं सत्वरं गत्वा तैः सह येरवडाकारागृहं ब्रुइनमहाशयो गतवान् । तत्र लोकमान्यान् प्रस्तावं दर्शयित्वा तेषां सम्मतिदर्शिकां स्वाक्षरीं तस्योपरि गृहीत्वा कारागृहाधिकारिणामनुज्ञया लोकमान्यान् बन्धनान्मोचयित्वा खरेमहाशयद्वितीयो ब्रुइनमहाशयो लोकमान्यैः सह रात्रौ सार्धदशवादनवेलायां लोकमान्यनिवासस्थानं 'विंचुरकर'सदनं प्राप्तवान् । एकपञ्चाशत्सप्ताहान् कारावासदुःखं महता धैर्येण, कष्टेन चानुभूय बन्धमुक्ता लोकमान्याः परमसुहृद्भिः खरेमहाशयैः सह पुण्यपत्तने स्वगृहं प्राप्ताः । परां कोटिं गतः कुटुम्बिजनानां बान्धवानां परमसुहृदां चानन्दः कल्पनागम्य एव । मूकीभूता वाक् तं कथं वर्णयेत् ! चपलेयं वार्ता चपलेव वायुवेगेन लोकेषु प्रसृता ।

लोकमान्यानामभिनन्दनार्थं विद्युत्सन्देशाः बहूनि पत्राणि च प्राप्तानि । तेषु कानिचिन्निमन्त्रणान्यप्यासन् । केसरिपत्रे लोकमान्यैः सर्वेभ्यो जनेभ्यो धन्यवादाः प्रदत्ताः । द्वित्रेषु दिनेषु जनानां दशसहस्रं लोकमान्यदर्शनार्थं गतमिति केषांचन पुरुषाणामभिप्रायः । गोखलेमहाशयप्रभृतयोऽपि यथावसरं दर्शनार्थं गता आसन् ।

## १५ चाफेकरप्रकरणम्

लोकमान्यानां राजद्रोहाभियोगस्यादौ यथा रँडमहाशयघातेन तथा तेषां कारावासानन्तरं 'द्रविडानां' घातेन लोकमान्येषु विविधसङ्कटानि समापतन् । अत एव एतेषां वधवृत्तान्तोऽस्मिन् प्रकरणे संक्षेपतोऽवलोक्यते ।

रँडमहाशयघातः केनाप्यज्ञातपुरुषेण महाराज्ञ्याः हीरकमहोत्सवदिवसे कृतः । तथैव 'आयर्स्ट'महाशयस्यापि । कथितपूर्वोऽयं वृत्तान्तः । *ग्रन्थिज्वरकाले विशेषाधिकारान् दत्त्वा शासनसंस्थया ज्वरमतिबन्धार्थं रँड*महाशयो नियुक्त आसीत् । दुष्टबुद्धिनाऽधिकारमदमत्तेन तेन पुण्यपत्तने महाननर्थः कृतः । ज्वरभीताः सर्वे जना योजितैरुपायैः सङ्कटग्रस्ता बभूवुः । तान् शिक्षयितुं शासनसंस्थायै च मार्गं दर्शयितुं लोकमान्यैः केसरिपत्रे भृशं लिखितम् ।

रँडमहाशयेनोपयोजिता उपायास्तीव्रा आसन् । ते जनानामतीव दुःखदायका बभूवुः । अतो हीरकमहोत्सवदिवसे भ्रान्तचित्तेनैकेन पुरुषेण तस्य घातः कृतः । तथैवान्येन 'आयर्स्ट'महाशयस्य । अनेन कर्मणा जना बाढं भीतिग्रस्तमानसा बभूवुः । शासनसंस्थाधिकारिणः क्रोधाग्निना भृशं जज्वलुः । आङ्ग्लसम्पादितवृत्तपत्राणि तस्मिन्नग्नौ घृतं चिक्षिपुः । एतेषां कृत्यैर्महान् सक्षोभः सञ्जज्ञे । तेन शासनसंस्थाऽपि भ्रान्तचित्ता भूत्वा वधस्यास्य सम्बन्धं लोकमान्यैः सह योजयितुं प्रवृत्ता । एष सम्बन्धो राजद्रोहाभियोगे न प्रस्थापितोऽभूदिति लोकमान्यानां महद्भाग्यम् । परं ते राजद्रोहकारिण इति निर्णीय सार्धवर्षभोग्येण सश्रमकारावासेन दण्डिताः ।

प्रक्षुब्धया शासनसंस्थया रँडमहाशयघातकस्य शोधार्थं विंशति-सहस्ररूपकमितं पारितोषिकमुद्घोषितम् । संशोधनं तु वधक्षणे एव प्रारब्धम् । 'द्रविड'इत्युपनामकेन भ्रातृद्वयेन 'चापेकर'बन्धूनां नामानि कथितानि । प्रथमं तावत् 'दामोदर हरि चापेकर'नामा पुरुषो रक्षा पुरुषैर्निगृहीतः । मुम्बापुर्यां 'हॅमिल्टन'इत्यभिधानस्य प्राड्विवाकस्य पुरतो दामोदरेण निजवृत्तान्तः कथितः । तं वृत्तान्तं विज्ञाय जना अवदन् 'सम्भ्रान्तचित्तः कश्चिन्मूर्खोऽयम्' इति ।

चापेकरबन्धूनां जनको विख्यातः कीर्तनकारः । एते सर्वे भ्रातरः किर्तनसमये गानवादनादिना तस्मै साहाय्यमददुः । 'दामोदर' सप्त विंशतिवर्षकल्पः, 'बाळकृष्ण'श्चतुर्विंशतिवर्षदेश्यः, 'वासुदेव'श्चाष्टादशवर्ष-देशीय आसीत् । वीरवृत्तिर्दामोदरो युद्धविद्याप्राप्तये महान्तं यत्नं कृतवान् । परं तस्य सर्वे प्रयत्ना विफलीभूताः । भग्नमनोरथेन तेन वृत्तकथनसमये उक्तम् "यानि यान्यपकृत्यानि मुम्बापुर्यां पुण्यपत्तने वा अद्यावधि जातानि तानि सर्वाणि मयैव कृतान्यासन् । येर्धर्मान्तरं कृतं ते सर्वे काष्ठदण्डेन मया भृशं ताडिताः । महाराज्ञ्याः शुभ्रपाषाणप्रतिमायां मसृणं कृष्णवर्णो मया निक्षिप्तः, पादत्राणहारश्च तस्याः कण्ठे समर्पितः । विद्यापीठमण्डपोऽपि मया दग्धः । गौरकायसैनिकात्याचारान् वीक्ष्य क्षुब्धमनसा मया निश्चितं यत् रँडमहाशयघातोऽपि मया कर्तव्य एव इति । पूर्वं मम प्रयत्ना निष्फला जाताः । पुनरेकदा हीरकमहोत्सवदिवसे तत्प्राणघाताय मया

यतितव्यमिति निश्चयेन अहं 'गणेशखिंड'नामकं राजमार्गं गतवान् । अन्यस्त्रेण मया रँडमहाशये सीसकगुलिकाः प्रक्षिप्ताः । बाळकृष्णो मम भ्राता आयर्स्टमहाशयं हतवान् । जूनमासस्य चतुर्विंशे दिवसे अहं मुम्बापुरीमागत्य पुनरपि कीर्तनेषु जनकाय साहाय्यमददाम् । अग्रे द्रिवडमहाशयेषु राजद्रोहविषये अभियोगो जातः । 'नातू'इत्युपाख्यं भ्रातृद्वयं कारागृहे निक्षिप्तम् । अन्यानपि कांश्चिज्जनानुपद्रवमस्तान् दृष्ट्वाऽहं स्वयमेव रक्षापुरुषसमीपं गतवान् । एतत्सर्वं मया कथितं विद्यते" इति ।

सर्वमेतद्वृत्तकथनं दामोदरेण न्यायालये न स्वीकृतम् । सोऽब्रवीत् येनैतद्वृत्तकथनं लिखितं स प्रधानन्यायाधीशो नासीदिति मया न ज्ञातम् । ब्रुइनमहाशयो मधुराक्षरैर्मामवदत् "सम्पूर्णं तद्विंशतिसहस्ररूपकमितं पारितोषिकमहं तुभ्यं दास्यामि, तव भार्यायै जीवनार्थं द्रव्यं, भ्रात्रे नृपसेवावृत्तिं च दास्यामि, तव नाम्ना मन्दिरमेकं विरचयिष्यामि, त्वामपि बन्धनात् सत्वरं मोक्ष्यामि इत्यादिभिर्वचनशतैर्मामनुनीय स तूष्णीं बभूव । मयाऽपि किमपि वृत्तं कथितम्" इति ।

नोव्हेंबरमासे प्राथमिकीं चर्चां समाप्य दामोदरस्याभियोगः 'क्रो'-नामकस्य न्यायाधीशस्य पुरतः परीक्षणार्थं प्राप्तः । तेन प्रमाणपुरुषगणस्य साहाय्येन सोऽभियोगो निर्णीतः । चाफेकरस्य कृते न कोऽपि विधिज्ञो न्यायालये आसीत् । दामोदरेणैव वधः कृत इति निर्णयः प्रमाणपुरुषगणेन न दत्तः । परं तेन सदोषपुरुषघाताय साहाय्यं दत्तम् । अतः सोऽपि तथैवापराधीति सभ्यानां निर्णयः । तस्मात् न्यायाधीशो दामोदरं प्राणदण्डेन दण्डितवान् ।

वरिष्ठन्यायालये दामोदरेण निर्णयपरीक्षणार्थं प्रार्थनापत्रं समर्पितम् । लोकमान्यैरिदं प्रार्थनापत्रं दामोदरस्य कथनानुसारतस्तस्येच्छया लिखितमित्यपि केचिद्वदन्ति । परं सर्वं तन्निष्फलमभूत् । अपरे केचिद् ब्रुवन्ति अन्तकालात् प्राक् लोकमान्या दामोदरेण यथा प्रार्थिताः यथा ते तस्मै श्रीमद्भगवद्गीतापुस्तकं ददुः । लोकमान्यैरपि तद्दत्तम् । तत् पुस्तकं दामोदरेण मरणकाले स्वहस्ते विधृतमिति । यथा कथंचिदपि सद्भवतु । अचिरादेव दामोदरो घातकैः पाशबन्धेन प्राणैर्वियोजितः ।

## १६ 'द्रविड'बन्धुवधः

सुवर्णकङ्कणलुब्धेन ब्राह्मणेनेव पारितोषिकलोभेन द्रविडबन्धुद्वयेन चाफेकरबन्धूनां नामानि कथितानि । तयोर्द्रविडयोरेको गणेशनामा असत्यलेखनकर्मदोषात् कारागृहे निक्षिप्तः । तस्य निवेदनेन दामोदरो निगृहीतो दण्डितश्च । दामोदरवधानन्तरं द्रविडो गणेशो बन्धनान्मोचितः । शासनसंस्थया तस्मै पारितोषिकार्थं दशसहस्ररूपकमितं दत्तम् । परं तन्न पर्याप्तमिति मत्वा शेषं पारितोषिकार्थं दातुं गणेशः प्रार्थनापत्रं शासनसंस्थायै प्राहिणोत् । गणेशेन लिखितम् " दामोदरो दण्डं लब्धवान् । अतो मया कथितो वृत्तान्तो नासत्यः । बाळकृष्णो यत्र कुत्रापि पलायितवान् इति तु न मम दोषः । रक्षापुरुषाणामनवधानस्य फलमेतत् । अतः सम्पूर्णे पारितोषिके ममैवाधिकारः " इति । पारितोषिकप्रदानकालेऽपि षष्ट्यधिकद्विशतं रूपकान् कररूपेण गृहीत्वा शेषं द्रव्यं शासनसंस्थया गणेशाय दत्तम् । केसरिपत्रेण शासनसंस्थायाः कृपणवृत्तेरुपहासः कृतः । द्रविडस्य वचनं युक्तियुक्तमित्यपि लिखितम् । तथैव द्रविडेन यत्कथितं तत्साधारं शासनसंस्थया प्रजाभ्यः निवेदनीयमिति तस्याः कर्तव्यमित्यपि प्रतिपादितम् । दामोदरस्याभियोगे द्रविडः साक्षिभावेनोपस्थितः । परं तेन किं कथितमित्यस्योल्लेखलस्य भाषणे नासीत् । ब्रुइन-महाशयः शेषं पारितोषिकं द्रविडाय दातुं नैच्छत् । अस्मिन् विषये तयोर्विवादोऽपि जातः । परं द्रविडभ्रातरावेव अकालहीनं प्राणैर्विमुक्तावभूताम् ।

खिस्ताब्दस्य १८९९ संवत्सरे फेब्रुआरीमासस्याष्टमे दिवसे रात्रौ भोजनवेलायां कावपि द्वौ पुरुषौ समागत्य द्रविडबन्धुभ्यां कथितवन्तौ " ब्रुइनमहाशयो युवां बहिः समाह्वयति " इति । द्राविडभ्रातरौ सोपानमार्गेण मत्वरमधस्तादागतौ । ततस्ते चत्वारोऽपि गृहाद्बहिरागत्य राजमार्गेण चतुरर्धं गत्वा परावर्तिताः । तत्रैव अन्यतरश्चित्तगुलिकाशब्दं निशम्य 'हा हतोऽस्मि' इति कर्णकठोरशब्दः श्रुतः । भीमगुलिकाविद्धौ द्रविडभ्रातरौ भूमिं पतितौ, सत्वरमुपचारार्थं रुग्णालयं नीतौ, अन्येद्युश्च पञ्चत्वं गतौ ।

दामोदरस्य कनीयांसं भ्रातरं वासुदेवं तन्मित्रे 'रानडे'नामकं 'साठे'-नामकं चाहूय 'फरासखाना'संज्ञके रक्षापुरुषकार्यालये तैः सह संवादे समारब्धे 'रामजी पाण्डु'नामकः कश्चिद्रक्षापुरुषाणामधिकारी कानिचिद्वचांसि उक्तवान्। तस्मिन् क्षणे एव आत्मनो वाससि सुगुप्तं निहितमग्न्यस्त्रं बहिराकृष्य ब्रुइनमहाशयस्य तथा 'रामजी पाण्डु'नामकस्योपरि झटिति गुलिकाप्रक्षेपणमकरोत्। अन्ये पश्यन्तो रक्षापुरुषा वासुदेवस्योपरि उत्प्लुत्य तस्य हस्तात् बलात्कारेण तदग्न्यस्त्रं समाकृष्य अगृह्णन् वासुदेवं च शृङ्खलाबद्धमकुर्वन्। तत्कालमेव वासुदेवेन तथा 'रानडे'नामकेन कथितम् 'आवामुभावेव द्रविडभ्रात्रोर्घातकौ' इति।

अनेन समयेन 'बाळकृष्णो'ऽपि उपलब्धो जातः। सर्वेषामभियोगा न्यायालये परीक्षिताः। प्रमाणपुरुषगणेन सर्वेऽपि ते सापराधा दण्डार्हाश्चेति निर्णीताः, न्यायाधीशेन च प्राणदण्डेन दण्डिताः।

## १७ 'टाइम्स'पत्रस्य क्षमायाचनम्

लोकमान्यानां कारावासमोक्षणानन्तरमेतौ द्वौ पुरुषवधौ जातौ। तावपि पूर्ववधसम्बन्धिनौ। तस्मादाङ्ग्लवृत्तपत्रसम्पादकानां मस्तकं सम्भ्रान्तम्। सर्वोऽपि दोषस्तैश्छद्मना लोकमान्यानां शिरसि स्थापितः। 'मराठा'नामके वृत्तपत्रे 'धैर्यशीलः उदारः' इत्यादिविशेषणानि वासुदेवाय तथा रानडे-नामकाय दत्तान्यासन्। अतः आङ्ग्लपत्रसम्पादकानां रोषः।

अस्मिन्नेव काले मुम्बईप्रदेशराजप्रतिनिधेः 'सॅन्डर्स्ट'महाशयस्य पञ्चवार्षिकः कालखण्डः समाप्तः। तस्य स्थाने 'नॉर्थकोट'महाशयस्य नियुक्तिर्जाता। अतः स राजप्रतिनिधिः 'ग्लोब'नामकस्य वृत्तपत्रस्य सम्पादकेनोपदिष्टः 'मुम्बईप्रदेशे राजद्रोहकारिणां समितयो वर्तन्ते। तासामग्रणीः टिळकमहाशयः। तस्य तन्त्रेण, मन्त्रेण प्रचालितां घातक्रियां दृष्ट्वा मधुरवाक्षु ब्राह्मणेषु राजप्रतिनिधिना विश्वासो नैव कर्तव्यः' इति।

मुम्बापुरीस्थ'टाइम्स'पत्रेणायं परिच्छेद उद्धृतः। अतो लोकमान्यैर्मानहानिकरोऽभियोगोऽस्मिन् पत्रे कर्तव्य इति निश्चितं न्यायालयेऽभियोगपत्रं च समर्पितम्। धूर्तेन टाइम्सपत्रसम्पादकेन सपद्येव क्षमायाचनपत्रं मुद्रितम्। अतो मुक्तः स सम्पादकः। परं 'ग्लोब'पत्रसम्पादकेन

सुखेन क्षमायाचनपत्रं न मुद्रितम् । अतस्तस्य सम्पादकस्योपरि मानहानिकरोऽभियोगः आङ्ग्लदेशे कर्तव्य इति निश्चित्य विधिशास्त्रपण्डितविषयका सकला व्यवस्था कृता । अभियोगः कृतः इति ज्ञात्वा मदोन्मत्तेन ग्लोबसम्पादकेन दीर्घोद्योगः कृतः । परं विफलीभूत. । अतो विधिज्ञैः पण्डितैः सह विमृश्य अन्ते सम्पादकेन अग्रलेखस्य समीपे एव आत्मनः क्षमायाचनपत्रकं स्थूलाक्षरैर्मुद्रितम् । एवं समाप्तमिदं क्षमायाचनप्रकरणम् ।

## १८ विश्रान्तिसुखम्

बन्धमोक्षणानन्तरं शरीरस्वास्थ्याय विश्रान्तिरावश्यकी । परं सा वधप्रकरणेनानेन तथा च आङ्ग्लवृत्तपत्राणां प्रचारेण न लब्धा । क्षमायाचनप्रकरणानन्तरं किञ्चित् स्वास्थ्यमुपलब्धम् । बन्धमोक्षानन्तरं सपद्येव ' सिंहगड'नाम्नि इतिहासप्रसिद्धे पुण्यपत्तनसमीपस्थे गिरिशिखरे कतिचिद्दिनानि लोकमान्यैर्निवासः कृतः । १८९८ संवत्सरे डिसेंबरमासे राष्ट्रियसभाधिवेशनार्थं लोकमान्या 'मद्रास'नगरं गता आसन् । ततो 'रामेश्वरं लङ्कां' च गत्वा पुण्यपत्तनं प्राप्ताः । अधिवेशननिमित्तेनाङ्गीकृतो दीर्घप्रवासः फलदायकोऽभूत् । अतः परं न विश्रान्तिकालः । उत्तरकाले लोकमान्या न केवलं मुम्बईप्रदेशराष्ट्रकार्यधुरीणा आसन् किन्तु वङ्ग-भङ्गान्दोलनेषु महद्भिः जनसमुत्थानैस्ते सर्वेषु प्रदेशेषु लब्धकीर्तयो भूत्वा अखिले भरतखण्डे राष्ट्रकार्यधुरीणानां प्रधानपदं लेभिरे ।

१९०१ संवत्सरे ' ताईमहाराज'प्रकरणं समुद्भूतम् । यद्यपि तस्मिन् प्रकरणे कनिष्ठन्यायालयादारभ्य वरिष्ठन्यायालयान्तेषु सर्वेष्वपि न्यायालयेषु लोकमान्यैर्यशः सम्पादितम्, तथाऽपि अनेन प्रकरणेन तु सह्यो मनस्ताप' एकविंशतिसंवत्सराणि लोकमान्येभ्यो दत्तः ।

## १९ गृहजीवनम्

१८९१–१८९९ वत्सरान्तं लोकमान्यानां निवासस्थानं पुण्यपत्तने 'विंचुरकर'महाशयानां सदनमासीत् । प्रशस्तं तत्सदनम् । अग्रभागे पृष्ठतश्च प्राङ्गणं, नयनमनोहरमुद्यानं, स्वल्पश्च जलाशयस्तत्रासन् । गणेशोत्सवादयः सर्वे महोत्सवास्तथा व्याख्यानादयः कार्यक्रमा' अत्रैवाभूवन् । केसरिकार्यालयः आर्यभूषणमुद्रणालये आसीत् । अभियोगानन्तरं स 'गांधी'-

सदनं नीत. । ' गायकवाड'नरेशप्रासादक्रयणं यावत् कार्यालयस्तत्रैवासीत् । केसरिमुद्रणं तु अन्यत्राभूत् । कार्यालयस्थलं न विस्तीर्णम् । सम्पादकमण्डलस्य सदस्यौ 'केळकर–खाडिलकरौ', व्यवस्थापको 'विद्वांसो'पनामकः, द्वित्रा लेखकाः एवमेव कार्यालयः । कार्यवशात्तत्रैवागत्य लोकमान्या वृत्तमलिखन् । केसरिपत्रस्य ग्राहकाः सप्तसहस्रमासन् । साम्प्रतमेकादशसहस्रं जाताः । मराठापत्रस्य ग्राहकाः सहस्रसंख्याका आसन् । भारतस्यान्येषु प्रदेशेषु तस्य ग्राहकाः । लोकमान्येषु कारावासं गतेषु केळकरमहाशयो मराठापत्रस्य सम्पादकोऽभूत् । केसरिपत्रस्य केळकरखाडिलकरमहाशयौ सम्पादकावास्ताम् । एतयो. सहकारेण लोकमान्या किञ्चित् स्वास्थ्यमलभन्त । अनेनैव समयेन प्रतिसंवत्सरं ग्रन्थिज्वरः समुत्पन्नः । परं लोकमान्याः स्थलान्तरं कदाऽपि नाकुर्वन् ।

लोकमान्यानां गृहजीवनम् अमृतमिव निर्मलम्, आचारश्च स्फटिकमणिरिव विशुद्धः । तेषां ज्येष्ठः पुत्रो ' विश्वनाथ'नामा अस्मिन् समये पञ्चदशवर्षदेशीयो विद्यालयेऽध्यैत, कनिष्ठ. श्रीधराख्यस्त्विहायन. । अनयोर्मध्ये द्वे कन्ये दुर्गामथुरानाम्न्यौ पुत्रश्च रामचन्द्रः । प्रथमे वयसि वर्तमानान्येतानि अपत्यानि शिशुजनोचितक्रीडारतान्यासान् । रामचन्द्रस्य व्रतबन्धोऽपि न जातः । सम्मार्जनादिगौणगृहकर्माणि भृत्यैः सम्पादितानि । अभ्यागताना गमनागमनं बहुलमासीत् । परं सर्वेषामादरातिथ्यादिव्यवस्थां तथैव गृहव्यवस्थां लोकमान्यानां भागिनेयौ 'धोंडोपंत गङ्गाधरपंत-विद्वांसो'-पनामकौ अपश्यताम् । सर्वेऽपि प्रत्यहं 'चहा'पानमकुर्वन् । नित्यनैमित्तिकदिनेष्वपि भोजनाच्छादनादिपदार्थेषु विभवसम्पन्नता नासीत् । सर्वाणि गृहकार्याणि दम्भरहितानि आडम्बरविहीनानि चासन् ।

लोकमान्यानां लेखनसामग्री तु इयत्येव । एको लेखनाधारमञ्च., द्वौ पिठरौ, पुस्तकानां कृते लघुकोष्ठश्च । विशेषस्तु लोकमान्यानामेकं सुखासनमासीत् । समागतैर्जनैः सह चर्चा, विवादः, सम्भाषणं, सर्वमेव लोकमान्यैरस्मिन् सुखासने सुखमुपविश्य सम्पादितम् । हास्यविनोदौ, हर्षामर्षव्यवहारो, नूतनान्दोलनानां सञ्चालनमित्यादिकार्याणां प्रभवस्थानमाश्रयस्थानं चेदमेव सुखासनम् । स्वहस्तेन लेखनकार्यं लोकमान्या न कदाप्यकुर्वन् ।

अस्मिन् सुखासने शयाना एव ते लेखकाय विषयकथनं, हस्तेन पूगीफलकर्तनं, मुखेन चर्वणं चाकुर्वन् ।

वस्त्राच्छादनेष्वपि लोकमान्यानामेतदकृत्रिमत्वं विनीतवेषाभरणत्वं च दृश्यते । परिधानार्थमेकं वस्त्रम्, उत्तरीयार्थं द्वितीयं, बहिर्गमनवेलायां कञ्चुकः इति गङ्गाजलमिव विशुद्धानि, शुभ्राणि च लोकमान्यानां वस्त्राणि, कोकनदस्पर्धि रक्तवर्णमुष्णीषं च तेषां वेषभूषा, हस्ते वेत्रयष्टिः । दर्शनार्थं समायातेऽभ्यागते कथमहं परिधानवस्त्रमात्रेणात्मानं दर्शयामि इति शङ्काऽपि तेषां मनसि न समुत्पन्ना ।

लोकमान्यानां गृहिणी सदैवानुकूला धर्मानुरक्ता सदाचाररता च । सामान्यतः प्रमदाजनो वस्त्रालङ्कारप्रियः । परम् अस्याः वस्त्राण्यल्पमूल्यान्यासन् । न कदाऽपि सौवर्णतन्तुविनिर्मितानि । अस्याः स्वभावविशेषस्तु अयमेव । आचारेण सरला, प्रकृत्या ऋजुः, सर्वकालं गृहकर्मव्यापृता साऽन्यप्रमदाभिः सह संलापार्थं न कदाऽपि स्वगृहं त्यक्तुमैच्छत् । कार्यार्थमपि न कदाऽन्यैः सह अनया सम्भाषितम् । आत्मनो गृहं, बालापत्यानि, बान्धवगणं विना नान्यः कोऽपि विषयस्तामपाकर्षत् । पतिसेवापरायणाया गृहकर्मनिरतायास्तस्याः शब्दमपि न कश्चिदशृणोत् ।

लोकमान्यानां मित्रपरिवारो विपुल आसीत् । सर्वेषां जनानामन्तःकरणानि ते सम्यग् जानन्ति स्म । कस्मिन् कर्मणि कः पुरुषो नियोक्तव्य इति ते भृशमवगच्छन्ति स्म । नैकविधा लोका लोकमान्यैः सङ्गृहीताः ।



# ६ 'पुनश्च हरिः ओम्'पर्व

## १ पुनश्च केसरिपत्रसम्पादनम्

खिस्ताब्दस्य १८९९ संवत्सरे जुलैमासस्य चतुर्थेऽहनि लोकमान्यैः स्वनाम्ना केसरिपत्रं पुनः सम्पादितम् । 'पुनश्च हरिः ओम्' इति वैदिकं शीर्षकममलेखस्य । शीर्षकदर्शनेनैव सर्वैर्वाचकैर्विज्ञातं लोकमान्याः पुनः सम्पादका जाता इति । शीर्षकानुरूपोऽमलेखस्यारम्भोऽपि 'कर्मलोपः स्वाध्यायप्रारम्भश्चे'ति शब्दैः कृतः । किं सूचितमेतैः शब्दैः ? वैदिकधर्मप्रणीतकर्ममार्गो जनैराचरितव्यः । कर्ममार्गाचरणे कारावासेनान्तरायः कृतः । कारागृहे दैनंदिनकर्मणामाचारो न सम्भवति । तस्मात् कर्मलोपो जातः । अतोऽधुना द्विगुणोत्साहेन स्वाध्यायोऽध्येतव्यः । स्वाध्यायो नाम ज्ञानसम्पादनम् । मनुष्यमात्रस्य विहितकर्म एतत् । तत्कर्मफलं लोकशिक्षणं लोककल्याणं च । एतादृशस्य कर्मणः पुनरारम्भो लोकमान्यैः सूचितः । कियान् अभिमानो वैदिकधर्मस्य आचारस्य च । अस्मिन् कर्मणि प्रवर्तितु लोकमान्याः साम्प्रतमेतावता शरीरसामर्थ्येन सन्नद्धा अभूवन् । तस्मात्तैः प्रथमं परमात्मने धन्यवादा दत्ताः । मनुष्यमात्रो जन्मना 'त्रिभिः ऋणैः ऋणवा जायते' देवर्षिपितॄणाम् ऋणमिति । लोकमान्यैरिदं चतुर्थं लौकिकम् ऋणं निर्मितम् । तस्यर्णस्याल्पश्च प्रतिदानं धन्यवादैर्जायते, आमरणं जनसेवयाऽपि तस्य प्रतिदानं न भविष्यतीति लोकमान्यानां बुद्धिः । अभियोगकाले ये सुहृदः प्रतिभूस्थाने आसन्, यैर्लोकमान्यानामनुपस्थितौ तेषां वृत्तपत्राणि सम्यग्रीत्या सम्पादितानि, यैश्चान्यप्रदेशीयवृत्तपत्रैः सहानुभूतिपूर्वकं साहाय्यं दत्तं तेभ्यः सर्वेभ्यः स्नेहपूर्णमनसा लोकमान्यैर्धन्यवादा वितीर्णाः ।

लोकप्रजागरस्य प्रभूतं श्रेयो लोकमान्यैः शासनसंस्थायै दत्तम् । ऋजुमार्गेण गच्छतो जनस्य यद्यप्यपघातो जातस्तथाऽपि नायं तस्य जनस्य दोषः । परं समन्तात् तेनापघातेन जनजागरो भवति । तथैवात्रापि । केसरिपत्रस्य कार्यपद्धतिस्तु प्राचीना एव । परं शासनसंस्थया विहितकर्मण्यात्मनः परिवर्तनं कृतम् । अतो लोकसमुत्थानं प्रजागरश्च । जन-

प्रबोधस्य निमित्तकारणं केसरिपत्रम्, उपादानकारणं शासनसंस्था इति युक्तिवादेन लोकप्रजागरस्य प्रभूतं श्रेयो शासनसंस्थाया आसीत् इति लोकमान्यानां प्रतिपादनम्। राजद्रोहशब्दस्तु चतुरक्षरात्मको लघुरेव। परं तस्यार्थो भयङ्करः, परिणामस्तु भयङ्करतरः। तस्मात् केसरिपत्रं नष्टं स्यादिति भयं तु स्थाने एव। परं नष्टं नाभूत्तत्पत्रम्। अस्य सकलं श्रेयः स्वसुहृन्मण्डलाय वितीर्य घोरेऽस्मिन् सङ्कटे महता धैर्येण केसरिपत्रं यथा पूर्वं सम्पादितमिति कृत्वा लोकमान्यैः केळकर–खाडिलकरमहाशयाभ्यां तथैव मुम्बापुरीस्थवार्ताहराय 'पिटकर'इत्युपाख्याय 'अनताय' धन्यवादा वितीर्णाः। पश्चात् 'अमृतबझारपत्रिका हिन्दु चॅम्पियन्'प्रभृतीनां वृत्तपत्राणां सम्पादकेभ्यस्तथैव मॅक्समुल्लरमहाशयेभ्यो निरपेक्षसाहाय्यार्थं धन्यवादान् दत्त्वा एतादृशाः पुरुषाः अकारणमित्राणि भवन्ति इत्युचितैः शब्दैस्तेषां गौरवोऽपि कृतः।

अनन्तरमात्मनोऽनुपस्थितिकालखण्डस्य सिंहावलोकनं कृत्वाऽस्मिन् काले या प्रगतिर्जाता सा स्पष्टशब्दैर्निर्दिष्टा। मुद्रणस्वातन्त्र्यसङ्कोचः, लोकस्थापितशिक्षणसंस्थानां विद्यालयेषु वर्तमानानामध्यापकानां राजकीयसंस्थानेषु सहकारदाननिरोधः, दण्डनीत्याः '१२४(अ)' परिच्छेदस्याति्व्याप्तिरित्यादयो महाविघ्ना अधुना समुत्पन्नाः। पूर्वेण '१२४(अ)' परिच्छेदेन केसरिपत्रस्य लेखाः सत्यतो न राजद्रोहकारिणः। परं केसरिपत्रं निमित्तीकृत्य शासनसंस्थयाऽऽत्मनो मनीषितं सम्पादितम्। विना दण्डमेतत्र शक्यमासीत्। लोककर्तव्यं शासनसंस्थया स्पष्टशब्दैः कथयितव्यमिति जनैरपेक्ष्यते। मुद्रणस्वातन्त्र्यादीनां मर्यादा सङ्कुचिता इति न वादविषयः। परं सा निश्चिता इत्यसमञ्जसम्। क्षणे क्षणे सा सङ्कोचमेति, कार्यवशात् वृद्धिं प्राप्नोति इत्यनुचितम्।

पुण्यपत्तनेऽभियोगकाले द्वौ पक्षावजायेताम् इत्यपि असमीचीनम्। एकस्य नाम 'नेमस्ता', अपरस्य 'जहाला' इति। लोकमान्यानां बुद्धिस्तु यद्येतादृशौ पक्षौ पुण्यपत्तने न सम्भवेतांस्तर्ह्येतादृशं सङ्कटं नापतेदिति। अतस्तैः राजद्रोहाभियोगस्य दोषोऽल्पांशेन नेमस्तपक्षे प्रक्षिप्तः। यद्यपि द्वौ पक्षावजायेतां तथाऽपि आङ्ग्लशासनसंस्थां निष्कासयितुं नैकोऽपि साम्प्रतमिच्छति। सर्वे विधिनियमान् पालयितुमेवेच्छन्ति। परं विधिनियमैर्योऽ-

वसर कार्यार्थं दत्तस्तस्योपयोग कथ कर्तव्य इत्यस्मिन् विपये पक्षयोर्निवाद । नेमस्ता वदन्ति 'विद्यमाना शासनसस्थाव्यवस्था समीचीना वर्तते'। केसरिपत्र ब्रूते 'सा व्यवस्था न जनकल्याणकारिणी। प्रत्युत अहितकारिणी'। परम् एत विवादविपय दूरीकृत्य उभाभ्या पक्षाभ्या करणीय कार्य विपुल वर्तते। तत्कार्य यद्येतौ पक्षौ सहकारेण कुर्यातान्तर्हि महत्कार्य भवेदिति। लोकमान्यविचाराणामाशयोऽस्मिन् 'हरि ओम्' इत्यग्रलेखे युक्तिवादेन प्रथित।

सार्वराष्ट्रियमान्दोलन यथार्थत्वेनास्मिन्नेव सवत्सरे समुत्पन्नम्। साम्राज्यस्योत्कर्षार्थं प्रयतमान प्रमुखराजप्रतिनिधिपदे नियुक्त 'कर्झन'-महाशयो भारतभूमिं प्राप्त आसीत्। तस्य पञ्चवार्षिककालखण्डे जनैरनुभूताना सुखदु खाना कथाभागो वयमग्रेऽवलोकयिष्याम।

राजद्रोहस्य प्रथमाभियोगेन लोकमान्या यथा भारतस्य सर्वेपु प्रदेशेपु ख्यातिं गतास्तथा तेषा कार्यक्षेत्रमपि विस्तृत जातम। राष्ट्रियसभाया प्रतिसवत्सर जायमानेनाधिवेशनेन लोकेपु राष्ट्रियभावनोत्पत्ति, तस्या सवर्धन पोपण च जातम्। नैकविधा विचारविपया समुत्पन्ना। आवश्यकस्तेपा राष्ट्रियदृष्ट्या विमर्श।

## २ 'काळ'पत्रम्

लोकमान्यपक्षीयमन्यद्वृत्तपत्र 'काळ'नामक 'शिवराम महादेव पराजपे'महाशयै सम्पादितम्। अन्योक्ति-व्याजोक्ति-वक्रोक्ति-उपहास-गर्भैर्लेखैर्महान् प्रजागर पत्रेणानेन कृत। राष्ट्रियविपयेपु पराजपेमहाशयाना टीकाक्ष प्रखरतरम्। शरसन्धान सदैव शासनसंस्थाधिकारिपु। अतस्तन्नारोचत सुधारकपक्षाय। सुधारकाग्रणीना 'फेरोजशहा मेथा'-प्रभृतीना मतेन लोकमान्यैस्तत्पक्षीयैश्च काळपत्रसम्पादका निपेद्धव्या। विशेषेणाय निषेध केसरिपत्रे मराठापत्रे च मुद्रयितव्य। असम्मतमेतल्लोकमान्यानाम्। ते लिखन्ति 'अनेनास्माक निपेधेन प्रतिपक्षीयाणा साहाय्य भवेत्। तद्दातु वयमसमर्था। एक पक्षमङ्गीकृत्य तत्पक्षमुखेन अन्यपक्षस्य निपेध करणीय इति शासनसस्थाया कुटिलनीति प्रसिद्धा। राजनीत्या प्रधानमङ्ग भेदनीति। तस्मादेतत् कर्तुं वय नोत्सहामहे" इति।

## ३ 'रँगलर परांजपे'महाशयाभिनन्दनम्

'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्'।

कारावासानन्तरं पुनः केसरिपत्रसम्पादनात्प्राक् लोकमान्यैर्वार्ता श्रुता यत् 'परांजपे'इत्युपनामकः पुरुषोत्तमतनयो रघुनाथनाम्ना आङ्ग्लदेशे 'केंब्रिज'विद्यापीठस्य पदवीपरीक्षायां गणितशास्त्रे प्रथमश्रेण्यां प्रथमक्रमाङ्केणोत्तीर्णोऽभवत् इति। अनेन सुयशसा परांजपेमहाशयाः 'सीनिअर रँगलर'पदवीमलभन्त। पाश्चात्त्यदेशे सुप्रसिद्धविद्यापीठे मेधाविनां छात्राणां स्पर्धायां तावत्काले केनापि भारतीयेनालब्धोऽयं बहुमानो न केवलं कुतूहलविषयः, अपि तु भारतीयानामभिमानस्थानमेतत्। अतो लोकमान्यैः केसरिपत्रे परांजपेमहाशयानामभिनन्दनं कृतम्। एकस्य विजयानन्दः अन्यस्य विषादाय कल्पते। भारतीयछात्रस्येदं स्पृहणीययशो वीक्ष्य आङ्ग्लदेशीया मत्सराग्निना दग्धाः। परं तदानीतनो भारतस्य प्रमुखराजप्रतिनिधिः 'कर्झन'महाशयः स्वयं पत्रं लिखित्वाऽभिनन्दनं कृतवान्, परांजपेमहाशयानां जनकाय पत्रं च प्रेषितवान्।

अनन्तरं कतिपयैर्मासैर्भारतदेशं समागतानां रँगलर परांजपेमहाशयानां बहुमानो मुम्बईविद्यापीठपदवीधरैर्मुम्बापुर्यां कृतः। पुण्यपत्तनं समागतानां तेषां स्वागतमभिनन्दनं च लोकमान्यैः तेषां सदनं स्वयं गत्वा कृतम्।

## ४ सातारानगरे प्रादेशिकी परिषद्

मुम्बईप्रदेशराजप्रतिनिधेः 'सॅन्डर्स्ट'महाशयस्य पञ्चवार्षिके कालखण्डे वृद्धिं गतानि प्रजादुःखानि। सुधारकपक्षीयैः राजकार्यधुरन्धरैस्तस्य स्मारकविषये विमर्शः कृतः। तेष्वपि केषांचन सम्मतः स्मारकविषयः, केषांचन असम्मतः। अतो लोकमान्यैः केसरिपत्रे लेखमालां प्रकाश्य तस्य कार्यस्य समालोचनं कृतम्। तस्यां लेखमालायां गणितानि दुर्भिक्ष-ग्रन्थिज्वर-राजद्रोहाभियोग-अधिकरक्षापुरुषनियुक्तिप्रभृतीनि सर्वाणि दुःखानि। पीडाकराण्येतानि सर्वाणि दुःखानि लोकैः सोढानि। लोकमान्याः प्रतिपादयन्ति 'प्रजानां सहनशीलतागुणस्य स्मारकं प्रथमं करणीयम्। परं चित्रमेतत् यत् प्रजानां दुःखदस्य स्मारकं कर्तुं समुद्यतो लोकः' इति।

अस्मिन्नेव कालखण्डे छत्रपतिराजधान्यां–'सातारा'नाम्नि नगरे–मुम्बईप्रदेशपरिषदोऽधिवेशनमासीत्। तत्रापि अयं विवादः समुपस्थितः। मुम्बापुरीस्थसदस्यानां मतेन सॅन्ढर्स्टमहाशयस्य नामापि प्रस्तावे न दृश्यते। परं प्रस्तावे समुल्लेखितानां विषयाणां सम्बन्धः सॅन्ढर्स्टमहाशयं वर्जयित्वा नान्यं कञ्चन स्प्रक्ष्यति। अतः सभाध्यक्षाः गोकुळदास पारेखमहाशया अगर्जन् 'एतादृशाः प्रस्तावा यदि विचारार्थं सभायाः पुरतः आगमिष्यन्ति तर्ह्यहमध्यक्षस्थानं त्यक्त्वा गमिष्यामी'ति। प्रस्तावापेक्षया अध्यक्षमहोदया एवास्माकमधिकं ग्राह्या इत्यन्ततः प्रस्तावसूचकेनोक्त्वा आत्मनः प्रस्तावः प्रतिसंहृतः।

अन्यस्मिन्नहनि अन्यत् प्रकरणं समुद्भूतम्। सभायाः कार्यारम्भे एव द्वे प्रार्थनापत्रके अध्यक्षमहोदयानां पुरतो निधाय तयोर्निर्णयोऽपेक्षितः। एकस्याशयः सदस्यान् अविचार्यैव अध्यक्षमहोदयैरात्मनोऽधिकारेण केचन सदस्या विषयनियामकसमित्यां स्वीकृताः। स च परिमार्जनीयमेतत् स्खलितम्। अन्यस्मिन् पत्रे लिखितम् 'मुम्बईशासनसंस्थायाः कार्यपद्धतिविषये सूचनादायकः प्रस्तावः यद्यपि विषयनियामकसमित्या प्रत्याख्यातस्तथाऽपि तं प्रस्तावं सूचयितुमनुज्ञां ददातु सभापति'रिति। प्रार्थनापत्रस्याधःस्तात् बहूनि हस्ताङ्कनान्यासन्।

एते प्रार्थनापत्रे दृष्ट्वा अध्यक्षमहोदयाः किञ्चिद्भ्रान्तचित्ता जाताः। परं किं कर्तव्यम्। उक्तं च––

'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः'।

इति अध्यक्षमहोदयाः स्वाग्रहं न मुञ्चन्ति। सदस्याः क्रोधाविष्टा बभूवुः। तेऽब्रुवन् 'स्वयमेव नियमबाह्याचरणं कृत्वा अध्यक्षस्थानं त्यजेयमिति सदस्यान् किमिति तर्जयन्ति अध्यक्षमहोदयाः' इति। प्रस्तावं सूचयितुं लोकमान्या आहूताः। तथा कर्तुं यदा ते उत्थितास्तदा न कश्चिदैच्छत् तेषां प्रतिपादनं श्रोतुम्। अतो महान् कोलाहलः समुत्पन्नः।

अनन्तरं लोकमान्यैः सूचितम्। प्रस्तावं सूचयितुमनुज्ञां न ददुः अध्यक्षमहोदयाः। परं स्वाक्षरीभिः सह तं केवलं वाचयितुमनुज्ञां ददतु। तत सभायाः पत्रसङ्ग्रहे इदं प्रार्थनापत्रं सङ्ग्रहीतव्यम्। एवं कृते सदस्या

अपि प्रस्तावं पुरस्कर्तुमाग्रहं न कुर्युः इति। इयं लोकमान्यानां सूचना सर्वैः सदस्यैः स्वीकृता। अनन्तरं सर्वं परिषत्कार्यं निर्विघ्नं समाप्तम्।

१९०० संवत्सरे पञ्चाङ्गसंशोधनम्, ज्ञानेश्वरवाद., शिवजन्मतिथिनिर्णय, 'रायगड'नाम्नि दुर्गे द्वितीयः शिवछत्रपतिमहोत्सवः इत्यादयो बहवो विषया लोकमान्यैः केसरिपत्रे चर्चिताः।

नोव्हेंबरमासे संस्कृतभाषामहापण्डिताः मॅक्समुल्लरमहाशया दिवं गताः। तेषां गुणगौरवम् अग्रलेखेन लोकमान्यैः कृतम्। उक्तं च —

'गुणी गुणं वेत्ति न वेत्ति निर्गुणः'।

जर्मन-फ्रेंच-इत्यादिभाषासु लिखितानां ग्रन्थानामाङ्ग्लभाषायां रूपान्तरं कृत्वा आङ्ग्लभाषां विजानत्सु विद्वज्जनेषु महदुपकृतमेभिः पण्डितवर्यैः।

### ५ रानडेमहाशयनिधनम्

एकोनविंशतिशतकं सम्पूर्णम्। विंशतितमं समारब्धम्। ख्रिस्ताब्दस्य १९०१ संवत्सरे जानेवारीमासे महाराष्ट्रदेशे 'माधव गोविन्द रानडे'-महाशया दिवं गताः। समाजकारणे, राजकारणे वा यद्यपि रानडेमहाशया लोकमान्यविरुद्धास्तथापि तद्विषयको महानादरो लोकमान्यानां मनस्यासीदिति केसरिपत्रे अग्रलेखे तैर्दर्शितम्। रानडेमहाशयानां मृत्युलेखे लोकमान्या लिखन्ति "रानडेमहाशयानां विशालबुद्धिमत्त्वम्, असाधारणकर्तृत्वम्, विविधविषयपारंगतत्वं, राष्ट्रकार्येषु अग्रेसरत्वं च विलोक्य तेषां निधनेन कंचित् कालं जगत् शून्यं भासते। केचन एव जना ईदृशं गुणसमुच्चयं धारयन्ति। परं स्वार्थसम्पादनायैव ते तान् गुणानुपयुञ्जते। रानडेमहाशयानां तु अयमेव विशेषो यदात्मनो बुद्धिमत्त्वम्, उद्योगप्रियत्वं च महाराष्ट्रदेशे राष्ट्रकार्यायोपयुज्य जनान् मार्गमेकं दर्शयित्वा, विविधानि सङ्कटानि परिहृत्य, काषायध्वजं हस्ते गृहीत्वा, राष्ट्रकल्याणाय महतोत्साहेन ते सर्वेषामग्रेसरा अभूवन्। जनसमूहस्याज्ञानतिमिरं दूरीकृत्य, ज्ञानगङ्गायाः प्रवाहमखण्डं कृत्वा, रानडेमहाशया महाराष्ट्रदेशे गुरुस्थानीया जाताः। सुप्रतिष्ठिते आङ्ग्लराज्ये महाराष्ट्रेषु रानडेमहाशयसदृशो न कोऽपि पुरुषः समुत्पन्नः। दृढीभूते आङ्ग्लराज्ये सति, महाष्ट्रदेशे प्राग्विद्यमाना प्राचीनकर्तृत्वपरम्परा समूलं नष्टा। जनास्तेजोबलहीनाः स्वार्थपरायणा अभूवन्।

महाराष्ट्रदेशो हिमाचल इव अचेतनो जातः। एतादृशे जडे कर्तृत्वशून्ये महाराष्ट्रदेशे रानडेमहाशयैर्जनान् सचेतनान् सोत्साहान् कृत्वा तेभ्यो मार्गो दर्शितः, यमनुसृत्य तेषामनुयायिनो देशाभिमानयुक्ता राष्ट्रकार्यतत्पराश्च जाताः। 'नाना फडणीस'महाशया इव रानडेमहाशया अपि सर्वकालं महाराष्ट्रदेशं चिन्तयन्ति स्म। 'सर्वज्ञः स हि माधवः' इति वचनं हेमाद्रि-माधवाचार्याणामिव रानडेमहाशयानामपि समुचितं स्यात्" इति।

## ६ आङ्ग्लदेशराज्ञीनिधनम्

'व्हिक्टोरिया'नाम्न्याः आङ्ग्लदेशराज्ञ्याः निधनं १९०१ वत्सरे जातम्। तस्याः मृत्युलेखे लोकमान्या लिखन्ति "मृदुलमानसा सदाचार-रता शास्त्रनियामनुसारिणी प्रजाहितदक्षा आङ्ग्लदेशराज्ञी लोकप्रिया-ऽभूत्। तस्याः शासनकाले आङ्ग्लराज्यं समृद्धं सम्भूतं, विस्तरं च सम्प्राप्तम्। तस्याः लोकप्रियत्वस्यैतदपि कारणमासीत्। दूरदेशस्था आङ्ग्ल-देशराज्ञी भारतदेशाय किं दद्यात्! परं तस्याः घोषणापत्रकं भारतदेशस्याज्ञा-पत्रकं जातम्। शासनसंस्थया तदेवानुसरणीयम्" इति। व्हिक्टोरिया-राज्ञ्याः पश्चात् सप्तम'एडवर्ड'नामकस्तस्याः पुत्रः सिंहासनमारूढवान्। तस्याप्यभिनन्दनं लोकरीत्या लोकमान्यैः कृतम्। आङ्ग्लशासनपद्धत्या यद्यपि प्रजाभिर्महद्दुःखमनुभूतं तथापि शिष्टाचारो लोकमान्यैः कदाऽपि न परित्यक्तः।

## ७ अज्ञेयमीमांसा

'नारायण लक्ष्मण फडके'महाशयेन 'हर्बर्ट् स्पेन्सर'महाशयस्य ग्रन्थाधारेण लिखितः 'अज्ञेयमीमांसा'नामको ग्रन्थो लोकमान्यैर्लेखद्वयेन समालोचितः। अस्मिन् लेखने लोकमान्यानां तत्त्वज्ञानविषयिका विचार-धारा दृश्यते। ते लिखन्ति 'अधुना भौतिकशास्त्राणामभ्यासेन पदार्थ-विज्ञानं प्रगतम्। विकालादिपदार्था यद्यप्यनादिसिद्धास्तथाऽपि तेषामन्य-पदार्थैः सह सम्बन्धविवेचनम् अर्वाचीनशास्त्रेष्वधिकतरं दृश्यते। विविध-शास्त्रसिद्धान्तानां तौलनिकपद्धत्या साम्यवैषम्यदर्शनं तत्त्वज्ञानस्य विषय इति स्पेन्सरमहाशयानां तत्त्वज्ञानलक्षणम्। इदं कार्यं स्पेन्सरमहाशयैः कृतम्। द्रव्यगुणादिपदार्थानां सामान्यगुणधर्मास्तिथिल सर्वेषां भौतिकसिद्धान्तानां

मूलतत्त्वव्ययस्थितिस्तैर्दर्शिता । विविधसिद्धान्तानां संकलनं तत्त्वज्ञानम् । अनेन तत्त्वज्ञानेन अगम्यतत्त्वस्यास्तित्वम् अनुमातव्यं भवति । स्पेन्सर-महाशयानामयं सिद्धान्तोऽस्माकं प्राचीनतत्त्वज्ञानसिद्धान्तैः प्रायः समानो वर्तते । ज्ञेयाज्ञेयविभाग इवास्माकं प्राचीनतत्त्वज्ञानेऽपि सांख्यवेदान्त-विभागो विद्यत एव । स्पेन्सरमहाशयेन उत्क्रान्तिशक्तिसाम्यं गतिसातत्य-मित्यादयः सिद्धान्ता निर्दिष्टाः । तथैव नैयायिकैः सृष्ट्यवलोकनेन सप्त-पदार्थादिसिद्धान्ता. प्रतिपादिताः । सांख्याः प्रकृतिपुरुषाविति द्वावेवाद्यतत्त्वे मन्यन्ते । आङ्ग्लतत्त्वविदोऽपि द्रव्यं च गतिश्चेति द्वे मूलतत्त्वे मन्यन्ते । नैयायिकेभ्यः साख्याः प्रगततराः । वेदान्तिन. साख्येभ्यः पदमेकमग्रतो गत्वा प्रकृतिपुरुषयोः परम् एकं परमात्मतत्त्वं सम्मन्यन्ते । पौर्वात्यपाश्चात्त्य-तत्त्वज्ञानयोरैक्यमत्रैव दृश्यते । परं पौर्वात्यतत्त्वज्ञानमेतावता सिद्धान्तेन न मर्यादितम् । स्तोकमग्रतो गत्वा पौर्वात्या वदन्ति 'अज्ञेयाः काश्चित् शक्तयो विद्यन्ते '। आनन्दतत्त्वस्य विचारः स्पेन्सरमहाशयेन न कृतः । जड–जीवयोः परमात्मनश्च मिथः कः सम्बन्धः इति विचिन्त्य तयोः परमात्मनि विलय. कथं शक्यः ? यदि शक्यस्तर्हि कीदृशं तस्य स्वरूपमिति अतिसूक्ष्मविचारोऽपि वेदान्तग्रन्थेषु दृश्यते । न तथा स्पेन्सरमहाशयस्य ग्रन्थे । तेन सम्पादितस्य ग्रन्थस्येदमेव महत्त्वं यत् पाश्चात्त्यविचारप्रणाल्या निर्धारिताः सिद्धान्ता. पौर्वात्यतत्त्वज्ञानसिद्धान्तान् पुष्णन्ति । एते प्राचीन-तमा. पौर्वात्यसिद्धान्ताः बह्वोः कालादनन्तरं पाश्चात्त्यपद्धत्यापि न विचलिता भवन्ति इति तेषा विशेषः' ।

अज्ञेयवादपुरस्कर्ता स्पेन्सरमहाशय. खिस्ताब्दस्य १९०३ वत्सरे डिसेंबरमासे निधनमुपेत. । लोकमान्यैस्तदा अग्रलेखे वर्णितम् ' किं चरित्रं तत्त्वज्ञस्य ? पूर्वाचार्याणा ग्रन्थानामध्ययनं, चिन्तनं, परिशीलनं, लेखनं च । एतादृशाना तत्त्वज्ञाना जनिः कस्मिन्नपि देशे भवतु । तेषां विचारधनं तु निखिलविश्वस्यैव । नूतनभारतीयविद्यापीठेषु शिक्षिता अर्वाचीनविद्वांसस्तु विशेषेण परिणामक्षमा अनेन स्पेन्सरमहाशयप्रतिपादिततत्त्वज्ञानेन । अतो भारतीयास्तं स्वकीयं मन्यन्ते '। एवं विलिख्य तौलनिकपद्धत्या तत्त्वज्ञान-महत्तां वर्णयितुं लोकमान्याः प्रारभन्त । अज्ञेयतत्त्वमीमांसामहत्त्वं विचिन्त्य

स्वल्पं पुनरुक्तिदोषं स्वीकृत्य अत्र लोकमान्यानां तत्त्वज्ञानविचाराः प्रदर्श्यन्ते।

"तत्त्वज्ञानविचारे प्राचीनतमोऽयं भारतदेशः। अस्य समाजव्यवस्थापि प्राथम्यं भजते। विशाले भरतखण्डे निसर्गसौन्दर्यं विपुलं विद्यते। अतो भारतीयास्तत्त्वविचारप्रवणा जाताः। गूढतत्त्वानां संशोधने प्रगल्भा तेषां शेमुषी। अस्मत्प्राचीनाचार्याणां विचारास्तथा प्रगल्भा यथा साम्प्रतं विंशतितमेऽपि शतके तेषां सिद्धान्ता य केवलं तर्ककठोरनिकषे मेरुरिवाचलाः, अपि तु निखिलपाश्चात्त्यसिद्धान्तानां मूर्ध्नि एव ते तिष्ठन्ति। आङ्ग्लानां परिचयेन तेषामाधिभौतिकविज्ञानं सुशिक्षितानां चक्षुषस्तेजांसि प्रतिहन्ति, विलुप्यति च शनैः शनैरार्यतत्त्वज्ञानस्याध्ययनम्। एवं स्थिते दिष्ट्या आधिभौतिकवादात्सुशिक्षितान् परावर्तयितुं स्पेन्सरमहाशयः समागतः। न तेन कश्चिन्नूतनः सिद्धान्तः प्रतिष्ठापितः। परं विविधशास्त्रेषु कानि समानानि मूलतत्त्वानि, का तेषां विकृतिः, कीदृग्रूपश्च तेषां तत्त्वानां मनसि परिणामः, के नियमास्तेषां विकाराणाम् इति सर्वेषां विचाराणां संशोधनं स्पेन्सरमहाशयेन कृतम्। आधिभौतिकशास्त्राणां नूतनसिद्धान्तानां तेजसाऽप्रतिहतचक्षुः स्पेन्सरमहाशयो यद्रमणीयतत्त्वज्ञानं निर्मितवान्, तेन परावर्तितानि अर्वाचीनविदुषां मनांसि, समावर्जितानि च तानि पौर्वात्यानामध्यात्मविचारे। आवर्जिते मनसि समुत्पन्नं दर्शनं यत् प्राचीनार्वाचीनतत्त्वज्ञानयोर्मध्ये न कोऽपि भेद इति। परकीयोऽप्यस्मान् सम्यग् बोधयतीति कृत्वा स्पेन्सरमहाशयोऽस्माकं धन्यवादानर्हति। तत्त्वज्ञस्य 'डार्विन'महाशयस्योत्क्रान्तिवादे प्रतिपादिता जीवमीमांसा सांख्यतत्त्वज्ञानप्रतिपादितसिद्धान्तेन समाना। प्रथमं सत्त्वरजस्तमसां साम्यावस्था मूलप्रकृतिः। भिन्नायां साम्यावस्थायां महत् तत्त्वमुत्पद्यते। तस्मान्महतो भूतानां पञ्च तन्मात्राणि, ततः स्थूलानि पञ्चमहाभूतानीति क्रमेण सृष्ट्युत्पत्तिः। इन्द्रियद्वारा जीवस्य संवेदनशक्तिः। समाप्ते प्रकृतिकार्ये विकाराणां परिणामा नश्यन्ति। नष्टेषु परिणामेषु जीवस्य मोक्षः। शास्त्रद्वारा मूलतत्त्वसंशोधनं तथा च तस्य विकृतिस्वरूपज्ञानमिति स्पेन्सरमहाशयस्य तत्त्वज्ञानलक्षणम्। तस्य मते मूलतत्त्वयोर्द्वन्द्व-

गत्योः साम्यावस्था जगतो मूलस्वरूपम् । तस्या अभावे विषमता । साम्ये वैषम्यम् । अभेदे भेदोत्पत्तिः इत्युत्क्रान्तिवादस्य बीजम् । कालान्तरेण उत्क्रान्त्यवसाने अपक्रान्तिः प्रारभ्यते, पुनश्च द्रव्यगतितत्त्वे साम्यावस्थायां तिष्ठतः । इयमेव तयोः प्रवृत्तिनिवृत्तिरूपा क्रीडा । देहाश्रितं चैतन्यमिव सदैव द्रव्याश्रिता इयं गतिः । अस्मिन् विषये स्पेन्सर-चार्वाकयोरैकमत्यम् । अत एव जीवस्य पुनर्जन्म तस्यासम्मतम् । कथं तर्हि धर्मकल्पनानां सम्भव इति विचार्यमाणे स्पेन्सरमहाशयः प्रतिवदति ' स्वप्नावस्थायां जीवो देहं परित्यज्य तिष्ठतीत्यसत्कल्पना प्रथमं पुरुषेण स्वीकृता । ईश्वरस्यास्तित्वे तस्याः परिणतिर्जाता ।" नायं सिद्धान्तो लोकमान्यानां ग्राह्यः । मॅक्समुलरादिपाश्चात्त्यपण्डितानामप्ययमसम्मतः । लोकमान्या लिखन्ति "चार्वाकस्य 'ऋणं कृत्वा घृतं पिबेत्' इति तत्त्वं स्पेन्सरमहाशयस्यासम्मतम्" । स ब्रूते 'उत्क्रान्तिवादेन मानवस्य परोपकारबुद्धिर्वृद्धिं प्राप्नुयात् जगत्कल्याणं च साधुयात् । अन्यच्च, ईश्वरो नास्तीति स्पेन्सरमहाशयो न स्पष्टं ब्रूते । किमप्यज्ञेयं मे शरणम् इति तस्याशयः । अपि च सांख्यवेदान्तप्रतिपादितं तत्त्वज्ञानं कथं व्यवहारक्षमं स्यादित्यपि तस्य प्रयत्नः । अतो यद्यपि ज्ञानिनः ईश्वरमज्ञेयं मन्यन्ते तथापि न हानिः । तेऽपि ईश्वरस्य प्रिया एव । उक्तं च भगवद्गीतासु—

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।' इति ।

संसारे स्थित्वाऽपि स्पेन्सरमहाशयेन दारपरिग्रहोऽपि न कृतः, नापि विवर्धिता द्रव्यतृष्णा । लोकहितरतोऽपि स 'पार्लमेंट'सभायां न प्रविष्टः । आर्याणां प्राचीनमहर्षिरिव स्पेन्सरमहाशयः सर्वमात्मनो जीवितं तत्त्वचिन्तने यापितवान्' इति ।

## ८ केसरिपत्रम्

१९०२ वत्सरे केसरिवृत्तपत्रं पुष्टिं प्राप्नोत् । आकारस्तस्य स एवासीत् । परं पृष्ठसंख्या विवर्धिता । फेब्रुआरीमासस्य चतुर्थे दिवसे आकारेण पूर्व, परं पृष्ठसंख्यया गुरुः केसरी वाचकदर्शनार्थमवतीर्णः । अग्रलेखे लोकमान्या निवेदयन्ति 'एकविंशतिवत्सरात् प्राक् पञ्चषैर्वयस्यैरिदं वृत्तपत्रं सम्पादितम् । सर्वः स सहकारिवर्गः कालवशं गतः । प्रारम्भे

ग्राहकाणां संख्या सप्तशतमासीत् । १८८४ वत्सरे सा चतुःसहस्रादूर्ध्वं गता । १९०२ वत्सरे सा त्रयोदशसहस्राधिका जाता' ।

आस्तरेण पुष्टः केसरी बुद्धिविकासार्थं ज्ञानदानार्थं च विविधविषय-रसास्वादरूपं खाद्यं वाचकवर्गाय समर्पितवान् । विंशतिसंवत्सरात्प्रागाङ्ग्ल-भाषायां लिखिताः लेखाः गौरवमभजन्त । मराठीभाषायां लिखिता' सामान्यजनानां वाचनार्थमिति तदाऽऽङ्ग्लभाषाविभूषितानां जनानां मतिः । अतस्ते मराठीभाषालेखकान् क्षुद्रानमन्यन्त । अधुना परिवर्तितः स कालः । केसरिपत्रेण साहित्यशास्त्रमनुसृत्य लोकव्यवहारस्य विविधक्षेत्रेषु निजविचाराः प्रौढभाषया प्रदर्शिताः । अतः केसरी गौरवं प्राप्तवान् ।

राजकीयविषये केसरिणा स्पष्टमेवोद्घोषितम् 'कस्यापि राज्यापहाराय नास्माकं मनीषा । अस्मिन्नेव राज्ये शिक्षणेन जनानामाधुनिकीं हीना-वस्थां दूरीकृत्य समाजधारणपोषणाय जनान् समर्थान् कर्तुं वयं सततं प्रयतामहे । यावत्कालमयमस्माकमुद्देशस्तावत्कालं नास्माकं कस्मादपि भयं विद्यते । पुरातनकाले लेखनपद्धतिस्तु तथाऽऽसीद्यथा सहेजनं शासनसंस्था-धिकारिणां मनसि नासुखसवेदनामुत्पादयेत् । परम् अतीतः स कालोऽधुना । साम्प्रतं वृत्तपत्रसम्पादकानां कर्तव्यं जनप्रबोधः सद्यशक्तिसमुत्पत्तिरिति वयं जानीमः । केसरिपत्रे यां विचारप्रणालीं वयं प्रतिपादयामस्तां वाचकानां मनस्युत्पादयितुं यदि वयमसमर्थास्तर्हि निष्फलः अस्माकं परिश्रमः । उक्तं च —

> किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
> परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ इति ।

सत्यमेतत् कविवचनं वृत्तपत्रविषयेऽपि ।'

लेखस्योपसंहारे लोकमान्याः सूचयन्ति केसरिणा इदं कविवचनं सदैवात्मनः पुरतो निहितमासीत् ।

> न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः । इति ।

गुरुदुःखप्रसङ्गेषु यैः केसरिणे साहाय्यं वितीर्णं तेभ्यः केवलं धन्यवाद-प्रदानमस्माकं कृतज्ञताबुद्धिं पूर्णांशेन न द्योतयति । लेखकं (टिळकमहाशयं)

विहाय उत्पादकेषु नैकोऽपि साम्प्रतं विचारविनिमयार्थं जीवतीति विचारः केसरिणो मनसि विषण्णतामुत्पादयति। केवलमुदरभरणार्थं न समुत्पन्नं केसरिपत्रम्। महाराष्ट्रदेशस्यायं केसरी न केवलं सङ्कटकाले सर्वेषां साहाय्यमपेक्षते। मतभेदप्रसङ्गे स्वकर्तव्यं स्मृत्वा केसरी घनगर्जितं गर्जति। परं नायं तस्य प्रकृतिदोषः। व्यवसायनिरतस्य तस्य कर्तव्यमिदम्। अद्यावधि यथा केसरिणा निर्भयवृत्त्या देशसेवा कृता तथैव स आयत्यामपि करिष्यतीति आशास्यते।

## ९ राज्यारोहणमहोत्सवः

आङ्ग्लदेशे जातस्य 'सप्तमएडवर्ड'नामकभूपतेः राज्यारोहण-महोत्सवनिमित्तेन भारतवर्षे साम्प्रतं दिल्लीत्यपरनामधेये 'इन्द्रप्रस्थ'नगरे खिस्ताब्दस्य १९०३ संवत्सरे जानेवारीमासस्य प्रथमे दिवसे राजप्रतिनिधिना 'कर्झन'महाशयेन आत्मनो दम्भं, दर्पम्, ऐश्वर्यं, सामर्थ्यम्, अहङ्कारं च प्रदर्शयितुमेको महोत्सवः पुरस्कृतः। अपूर्वोऽयमभूत् विभवप्रदर्शन-समारम्भः। परमेश्वरप्रार्थनापूर्वकं प्रमुखराजप्रतिनिधिसहितं महता वैभवेन सञ्चलनं, चतुरङ्गसेनासञ्चलनं, सुशोभितायां राजसभायां राजाज्ञापत्रवाचनं, भोजनसमारम्भः, पदवीदानसमारम्भः, विद्युद्दीपमहोत्सवः, तथा धनकनक-रत्नाद्यलङ्काराणां हस्त्यश्वरथपदातीनां कौशल्यपूर्णपदार्थानां विपुलं प्रदर्शन-मित्यादयो विविधप्रकारास्तस्मिन् महोत्सवे आसन्। युवराजपदारूढो राजपुत्रः आङ्ग्लदेशान्निमन्त्रितः। अपेक्ष्यते प्रेक्षकगणो विभवप्रेक्षणाय। अतः सर्वे भारतीयसामन्ता उपसामन्ताः 'सरदार'पदवीधारिणः क्षेत्र-पतयश्चाज्ञापत्रेण निमन्त्रिताः।

महोत्सवाधिवेशनार्थं विरचितः सभामण्डपो ध्वजपत्रैः कदलीदलैः कुसुमस्तबकैः सुगन्धिपुष्पमालाभिस्तथा विभूषितो यथा स्तिमितदृशां चकिते-क्षणानां प्रेक्षकगणानां समूहा विस्फारितलोचनैर्विघटितोष्ठपुटैर्विलोकयन्तु। निमन्त्रिताः सर्वे सामन्तादिजना अहमहमिकया दुकूलवस्त्रैः सुवर्णालङ्कारै-र्बाहुभूषणैः कर्णपूरैः शिरोभूषणैः रत्नमालाभिः स्वदेहमलङ्कृत्य स्वयंवर-मण्डपमिव राजसभारङ्गं प्राविशन्। महोत्सवस्य मुख्यदिवसे भेरीपटह-दुन्दुभिकांस्यतालादिवाद्यनिनादेन समुद्घोषितः साम्राज्यमदमत्तानामाङ्ग्ला-

नामुत्सेको गौरीशिखरं सम्प्राप्तः । उपस्थितस्यापि युवराजस्य, अधिकारमदोन्मत्त. कर्झनमहाशयः स्वयं सिंहासनमुपविश्य सर्वेषां सामन्तनरेशानामभिवादनानि उपायनानि च गृहीत्वा शिलायां लिखितानि सुवर्णाक्षराणि विद्युद्दीपप्रकाशेन तान् दर्शितवान् —

'स्वर्गो यदि पृथिव्यां स्यादत्रैवायं न कुत्रचित्' । इति।

महता प्रयासेन धनव्ययेन च सम्पादितस्यास्य महोत्सवस्य लालित्यपूर्णं वर्णनमाङ्गलदेशस्थशासनसंस्थाधिकारिभ्यः प्रहिते निवेदने दृश्यते । उपलभ्यते तस्मिन्निवेदने एतादृशी वार्ता । कलाप्रदर्शनं द्रष्टुं धनं दत्त्वा अष्टचत्वारिंशत्सहस्रं जनाः समायाताः । शताधिकशतं सामन्तनरेशा उपस्थिताः । द्विशतं सहस्राणां जनाः प्रेक्षणार्थं समागताः ।

महोत्सवाय प्रभूतो धनव्ययो जातः । परम् एकोऽपि वराटकः प्रजाकल्याणाय नोपयुक्तः । कर्झनमहाशयस्य सुमहानहंकारविलासोऽयमिति महोत्सवरहस्यं केसरिणा वाचकेभ्यः कथितम् । 'स्नेहः स्नेहेन वर्धते' ।

'रिव्ह्यू ऑफ् रिव्ह्यू'वृत्तपत्रसम्पादकोऽलिखत् 'रत्नखचिता-लङ्कारैः सुशोभितानां सामन्तानां भूपतीनां पार्श्वभागे क्षुधापीडितजनानां सहस्राणि राजसभायामदृश्यरूपेणोपाविष्टन् । साम्राज्यवैभवदर्शनाय तथा चतुरङ्गबलसामर्थ्यप्रदर्शनाय च कृतोऽयमाडम्बरः उत्तरकाले इतिहासे न शोभिष्यते' इति ।

## १० कलकत्तानगरे शिवछत्रपतिमहोत्सवः

कलकत्तानगरे १९०३ वत्सरे छत्रपतिशिवरायमहोत्सवः कृतः । अष्टसहस्रपरिमितः श्रोतृवृन्दो व्याख्यानश्रवणार्थमुपस्थित आसीत् । अनया स्फूर्त्या वङ्गदेशे प्रतापादित्यमहोत्सवः समारब्धः । 'सुरेन्द्रनाथ बानर्जी'-प्रभृतीनां राष्ट्रधुरीणानां स्फूर्तिदायकानि व्याख्यानान्यभूवन् । 'इंग्लिश-मन्'वृत्तपत्रेण प्रथमं विरोधो दर्शितः । परम् अधुना मतान्तरं कृत्वा लिखितम् 'महाराष्ट्रदेशस्थितस्यास्य युगपुरुषस्य महोत्सवेन वङ्गदेशीयैर्मनोदार्यं विचारप्रागल्भ्यं च दर्शितम्' इति । 'पायोनियर'पत्रेणोपहासः कृतः । तेन लिखितम् 'द्विशताब्दात्प्राक् महाराष्ट्रियाणामन्तःकरणं यथाऽऽसीत्तथैवाद्यापि ।

वङ्गमहाराष्ट्रदेशयोर्मित्रभावजल्पनं वृथैव। यद्यत्राङ्ग्ला न स्युस्तर्हि अधुनाऽपि महाराष्ट्रिया वङ्गदेशं विलुण्ठिष्यन्ति। शिवरायमहोत्सवे आन्तरः कोऽपि हेतुः प्रतिभाति' इति। आङ्ग्लानामभावे वङ्गीयानां महाराष्ट्रियाणां च परस्पराचारः कथं स्यादिति प्रश्नस्योत्तरं किमपि भवतु। परम् आङ्ग्लशासनसंस्थायाः प्रजापीडनं समानमिति ज्ञात्वा मिथः सहानुभूत्या अस्य प्रतिकारः कथं कर्तव्य इत्युभयदेशयोर्विचारविनिमयः समुचित एव।

वङ्गवासिनस्तेजोवल्हीना इत्यप्यारोपो 'मेकॉले'प्रभृतिभिः कृतः। तस्य परिमार्जनं कथं भवेदिति वङ्गदेशीयानां चिन्ता। अग्रे भूतं क्रान्तिकारकाणामान्दोलनं तस्यारोपस्य निरसनार्थमिति आङ्ग्लानां मीमांसा। परं वङ्गदेशे अन्या क्रान्तिः सञ्जाता। व्यायामार्थं व्यायाममन्दिराणि तथा क्रीडनार्थं क्रीडाङ्गणानि तस्मिन्देशे नासन्। महाराष्ट्रदेशे व्यायाममन्दिराणां परम्परा प्राचीना। तस्याः सम्यग् ज्ञानं गृहीत्वा कैश्चिद्वङ्गवासिभिः स्वप्रदेशे क्रीडाङ्गणेषु विविधाः क्रीडास्पर्धाः समारब्धाः। 'सरलादेवी चौधराणी'नामिका एका आर्यमहिला एतासु स्पर्धासु तथा 'शिवरायप्रतापादित्या'दिराष्ट्रपुरुषमहोत्सवेषु धौरेयाऽऽसीत्।



# ७ मित्रकार्यपर्व

## १ ताईमहाराजप्रकरणम्

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥

चिरोलमहाशयादिभारतशत्रवस्तथा शासनसंस्थाधिकारिणोऽपि लोकमान्यानां महत्त्वं सम्मन्यन्ते । गुणाश्रयं हि महत्त्वम् । लोकमान्यैरात्मनः सर्वे गुणा राष्ट्रकार्याय समर्पिताः । तेषां सर्वे समुद्योगाः स्वातन्त्र्यसम्पादनार्थमासन् । यथा ते सर्वात्मना राष्ट्रकार्याय प्रायतन्त तथा मित्रकार्यमपि ते कर्तव्यबुद्धया दाक्षिण्येन च सम्पादयन्ति स्मेत्येतस्य 'ताईमहाराज'-प्रकरणमेकं निदर्शनम् । कायिकवाचिकमानसिकार्थिकक्लेशानां खनिरेवेदं ताईमहाराजप्रकरणम् । लोकमान्यानां मित्रपत्नीति परम्परासम्बन्धेन इयं मानिनी महतीं प्रसिद्धिं प्राप । परं लोकमान्यानां नैकोऽपि गुणस्तयाऽऽत्मसात् कृतः । आमरणमिदं प्रकरणं लोकमान्यानां पीडाकरमभूत् । अतः का एषा 'ताई'नाम्नी, योऽसौ लोकमान्यानां वयस्यः, किमेतत् ताईमहाराजप्रकरणमित्यधुनाऽस्माभिः संक्षेपतोऽवलोक्यते ।

'बाबामहाराज'नामको लोकमान्यानामेको वयस्य आसीत् । निधनसमये तेनात्मनो विभवस्य व्यवस्थापत्रं कृतम् । तस्मिन् मृत्युपत्रे ये विश्वस्ता बाबामहाराजैर्नियुक्तास्तेष्वेकं नाम लोकमान्यानामिति प्रथमराजद्रोहपर्वणि वाचकानां विदितमेव । पञ्चत्वं गतायां प्रथमभार्यायां ताईनाम्नी काचिद्रूपयौवनसम्पन्ना प्रौढकन्या बाबामहाराजेन पुत्रेच्छया परिणीता । 'सरदार'पदस्थ- उत्तमकुलोत्पन्नोऽयं बाबामहाराजः । कोल्हापुरछत्रपतीनां गुरुभावेनैतेषां पूर्वजा 'महाराज'-पदवीं प्राप्ता इति श्रूयते । तस्मादेतत्कुलोत्पन्नाः सर्वे जना 'महाराज'इत्युपपदेन विभूषिताः । अनेन बाबामहाराजस्य द्वितीयस्त्रीपरिग्रहेणेयं क्षुद्रकुलोत्पन्नकन्या ताईनाम्नी युगपत् महाराजपदमाप्ता । उक्तं च—

'अस्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः' ।

तस्मादस्माभिरप्यस्मिन् प्रकरणे एतस्याः समुल्लेखः 'ताईमहाराज' इति नामधेयेन क्रियते । विवाहादूर्ध्वमचिरादेव तस्याः शान्तानाम्नी एका कन्या जाता । पुनरप्येकदा विना विलम्बं सा अन्तर्वत्नी बभूव । अतः पुत्रदर्शन-सुखाशा तस्या मनसि समुत्पन्ना । परं दुर्दैववशात्तस्याः पतिर्बाबामहाराजो विषूचिकयाऽऽसन्नमृत्युर्भूत्वा सकलनिजविभवस्य व्यवस्थापत्रमकरोत् । तेन व्यवस्थापत्रेण लोकमान्यास्तस्य विभवस्य विश्वस्ता अभूवन् । अस्मिन् ताईमहाराजप्रकरणे अयं लोकमान्यानां सम्बन्धः ।

## २ दत्तकप्रकरणम्

बाबामहाराजनिधनानन्तरं ताईमहाराजनाम्न्याः पुत्रो जातः । परं मास-द्वयात्प्रागेव स पितृदर्शनार्थं दिवं गतः । अतो भागधेये पुनरपुत्रता प्राप्ता । 'अपुत्रस्य गतिर्नास्ति' इति धर्मविचारेण कुलस्य सन्तानकरः पुत्र आवश्यकः । स एव सकलैश्वर्यस्य अधिकारी स्यात् । अतः कस्यापि पुरुषस्य योग्यः पुत्रो विधिपूर्वकं कृतक इति ग्रहीतव्य इति विचारः । बाबामहाराजनिधनानन्तरं त्रिचतुराणि हायनान्यतीतानि । अतो लोकमान्याः पुत्रशोधनार्थं सयत्ना बभूवुः । अन्ये विश्वस्ताः 'खापर्डे-कुंभोजकर-नगरकर'महाशयाः । गोत्रजाः केचन बालाः कोल्हापुरनाम्नि नगरे तथा औरंगाबादनाम्नि नगरे आसन् । अनुभवेन कोल्हापुरस्था बाला लोकमान्यानामसम्मताः । आत्मनो मित्रकुल-मृणमुक्तं कृत्वा यः पुत्रः स्वकुलं समुन्नयेत्, स बालो विश्वस्तानां सम्मतो भवेत्, नान्यः । विश्वस्तेषु नगरकरमहाशयस्य कोल्हापुरनगरे प्रीति-रधिका । न तथान्येषां विश्वस्तानाम् । खापर्डे-कुंभोजकरौ लोकमान्यमता-नुवर्तिनौ । सर्वैर्विश्वस्तैः पुण्यपत्तने तथा वडगावग्रामे सभासु मन्त्रं कृत्वा एकः प्रस्तावः सम्मतः कृतः । अनेन प्रस्तावेनादेशो दत्तो यल्लोकमान्याः खापर्डेमहाशयाः बाबामहाराजपत्नी च औरंगाबादनगरं गत्वा विधिपूर्वकं दत्तविधानं सम्पादयेयुरिति । नगरकरमहाशयः पूर्वं विद्वान् आसीत् यत् 'औरंगाबाद'नगरं गत्वा तेन बालाः प्रेक्षितव्याः, तेषां सकलवृत्तान्तः प्राप्तव्य इति । परम् एतत्तस्य रुचिं नावहत् । अतस्तेनावधानं न दत्तम् । दत्तविधानार्थमपि स औरंगाबादनगरं न गतः । तस्मादत्र

पुण्यपत्तने स्थित्वा किमपि विपरीतमयं समाचरेदिति लोकमान्यै-स्तर्कितं शङ्कितं च। समाप्ते दत्तविधाने न किमपि भविष्यतीति लोक-मान्यानां बुद्धिः। अतः कालातिपातं विना प्रस्तावानुसारेण लोकमान्यैरात्मनो दूताः प्रहिताः। 'औरंगाबाद'नगरस्थां वार्तां लब्ध्वा लोकमान्याः खापर्डेमहा-शयाः बाबामहाराजपत्नी ताईमहाराजनाम्नी च तत्रागच्छन्। बालेन अल्पवयसा बुद्धिमता च भाव्यमिति लोकमान्यानां मनसि स्थितम्। ज्योतिषशास्त्रदृष्ट्या तेन भाग्यवता भाव्यमिति खापर्डेमहाशयानां विचारः। बालकं दत्तकत्वेन स्वीकर्त्री माताऽपि स्वबुद्ध्या तं पश्यति। एवं समागतान् बालानेभिस्त्रिभिः परीक्ष्य तेषामेको जगन्नाथो नाम सर्वेषां सम्मतः। अतो जगन्नाथस्य जनकेन सह विधिज्ञसाहाय्येन समयं कृत्वा लेखपत्रं कृतम्। अथैकस्मिन् शोभने दिवसे वेदशास्त्रसंपन्नान् द्विजानाहूय प्रतिष्ठितनागरि-कांश्च निमन्त्र्य यथाविधि दत्तविधानसंस्कारः समापितः। 'जगन्नाथ'नामा-ऽयं बालः इदानीं जगन्नाथमहाराजो जातः। अनन्तरं सर्वैः सह लोकमान्याः पुण्यपत्तनमाजग्मुः।

## ३ विरुद्धमन्त्रः

आसीत् भरतखण्डे दक्षिणस्यां दिशि वर्तमानानां 'सरदार'पदस्थानां जनानां कार्याण्यवेक्षितुं नियुक्तः 'ॲस्टन'महाशयः। तस्मै पत्रं लिखित्वा दत्तविधानविषयकं सर्वं वृत्तं लोकमान्यैर्निवेदितम्। पुण्यपत्तनं समागतेषु सर्वेषु नगरकरमहाशयेन ताईमहाराजनाम्न्यै बाबामहाराजपत्न्यै कर्णमन्त्रो दत्तः। औरंगाबादनगरं गतेषु सर्वेषु नगरकरमहाशयेन विश्वस्तसभायां सम्मतस्य दत्तकप्रकरणप्रस्तावस्याधोभागे 'अयं प्रस्तावो मम न सम्मतः' इति लेखो विश्वस्तानामनुपस्थितौ लिखितः। बाबामहाराजपत्न्या सह ॲस्टनमहाशयस्य दर्शनं गृहीत्वा तस्य पुरतस्तस्याः विधवायाः मुखेन समग्रं दत्तकप्रकरणं नगरकरमहाशयस्तस्मै निवेदितवान्, कथितवांश्च नायं दत्तक-पुत्रोऽस्माकं मान्य इति। शासनसंस्थाधिकारी ॲस्टनमहाशयस्तासप्रभृतिः आङ्ग्लदेशीयः। राजद्रोहकारिणो लोकमान्याः। सरदारपदस्थबाबामहा-राजस्य धर्मपत्न्याऽश्रुपूर्णलोचनाभ्यां कथितमिदं सुकोमलं दत्तकप्रकरणम्। स्वपदेव स्त्रीदाक्षिण्यपूर्णेन दयार्द्रेण मनसा ॲस्टनमहाशयस्तस्याः साहाय्यार्थं प्रधावितः। तस्मादनेन व्यक्तिनिष्ठदत्तकप्रकरणेन विधूमं राजकीयमस्वरूपम्।

औरंगाबादनगरे यथाविधि जातं दत्तविधानं केनोपायेन विफली-कर्तव्यमिति प्रश्न । अमान्य तद्दत्तविधानमस्माकमिति प्रथम. प्रकार. । औरंगाबादनगरे दत्तविधानं न जातमिति निर्धारयितुमन्यद्दत्तविधानं कर्तव्यमिति द्वितीय प्रकार । मृतलेखप्रमाणेन विश्वस्तैर्येऽधिकारा. स्वीकृतास्तान् सहृत्य, विश्वस्तान् दूरीकृत्य, बाबामहाराजपत्न्या स्वातन्त्र्येण सर्वाणि कार्याणि द्रष्टव्यानीति तृतीय. प्रकार. । इमं तृतीयप्रकारमनुसृत्य ताईमहाराजनाम्न्या सर्वेभ्यो विश्वस्तेभ्य शासनसंस्थाद्वारा सूचना दत्ता " अत. परमस्माकं किमपि कार्यं युष्माभिर्विश्वस्तैर्नावेक्षणीय"मिति । ॲस्टनमहाशयस्य न्यायालये मृतलेखप्रमाणं विफलीकर्तुमेकं प्रार्थनापत्रमपि प्रेषितम् ।

अन्यद्दत्तविधानं कर्तव्यमिति द्वितीय. प्रकारोऽपि बाबामहाराजपत्न्याऽवलम्बित । 'बाळ'नामकमेक बाल निश्चित्य तं बाळामहाराजं कर्तुं दत्तविधानं निश्चितम् । कोल्हापुरनरेशस्यानुज्ञाप्राप्तये प्रार्थनापत्रं प्रेषितम् । नगरकरमहाशयस्य निमन्त्रणेन बाळामहाराजस्य माता भ्राता च स्वजनै सह पुण्यपत्तन समागतौ । एवमखिलं दत्तविधानसम्भारमेकीकृत्य धार्मिक विधिं समाप्य साक्षिण कृत्वा इदं कार्यं निभृतं सम्पादनीयमिति सर्वेषा मनीषा, तदर्थं च सफला प्रयत्ना । परम् उक्त च—

'मनसा चिन्तितं कार्यं दैवमन्यद्विचिन्तयेत्' इति ।

## ४ प्रसङ्गावधानम्

केनापि गुप्तचरेणेयमपरदत्तविधानवार्ता लोकमान्येभ्य कथिता । श्रुताया वार्ताया झटिति नक्तमेव ते बाबामहाराजसदन गत्वाऽवदन् 'खापर्डे कुभोजकरादय सर्वे विश्वस्ता अत्र समागच्छेयु । अन्यद्दत्तविधानं यदि अत्रभवत्या इष्यते तर्हि अनन्तरं सुखेनैव कर्तव्य'मिति । लोकमान्याना सुदैवेनायं तस्या अनुनय सफलो जात. । स्थगितं च तस्मिन् दिने दत्तविधानम् । अनन्तरं खापर्डेमहाशया समागता । तस्मिन् सदने रात्रौ नाट्यपूर्णं प्रसङ्गो जात । बाळामहाराजभ्राता पण्डितमहाराजस्तामसप्रकृति । आत्मना सह तेन कोल्हापुरनगरात् केचन मल्ला आनीता', शस्त्राण्यपि सङ्गृहीतानि । अनया सामग्र्या महान् अनर्थ समभविष्यत्, पर महता कष्टेन स परिहृत । लोकमान्यपक्षीया अपि सन्देशेन तत्राऽऽ-

हृताः । बाबामहाराजपत्न्यै सामोपायेन सुविचारान् सूचयित्वा तस्याः मानसमस्माद्दत्तविधानात्परावर्तयितुं लोकमान्याः खापर्डेमहाशयाश्च प्रायतन्त । परं तेषां सर्वे प्रयत्ना निष्फला जाताः । अतः सर्वानेतान् सदनाद्बहिर्निष्कासयितुमन्तिमोपायो लोकमान्यैरवलम्बितः । न्यायनियमानुसारतः खापर्डे-टिळकमहाशयैः सर्वेभ्यो बाळामहाराजबान्धवगणेभ्यः पूर्वसूचना दत्ता, यत्प्रभातकालात्प्रागेव बाबामहाराजसदनाद्बहिः सर्वैर्गन्तव्यम् । अन्यथा तत्कालोचिताः सर्वे उपाया अस्माभिरवलम्बयितव्या इति । बाळामहाराजबान्धवगणेन शरणार्थिनाऽऽश्रयो याचितः । बाबामहाराजपत्न्याऽपि लोकमान्येभ्यस्तेषां कृते किञ्चिन्निवेदितम् । परं सर्वं तन्मोघं जातम् । स्पष्टमेव लोकमान्यैर्गर्जितम्'अन्यस्मिन्सदने अन्यद्दत्तविधानं कृत्वा प्रथमकृतं दत्तविधानं दूषयितुकामा यूयं सर्वेऽस्मान् पराभवितुं प्रयतध्वे । अतः प्रथमं सर्वैः सदनाद्बहिर्गन्तव्यम् । यदि सुखेन न गमिष्यथ तर्हि अर्धचन्द्रं दत्त्वा निष्कासयिष्यामः' इति । नान्या गतिरिति मत्वा पण्डितमहाराजादयस्ते सर्वे ताईमहाराजमामन्त्र्य सर्वमात्मनः सम्भारं गृहीत्वाऽन्यत्स्थानं जग्मुः । गतेषु तेषु द्वाराणि सङ्घटय्य तत्र रक्षापुरुषान् स्थापयित्वा गमनागमनेऽनुज्ञा ग्रहीतव्येति निर्बन्धो विश्वस्तैः कृतः ।

एवं सर्वत्र प्रतिषिद्धे बाबामहाराजपत्नी ताईमहाराजनाम्नी ॲस्टन-महाशयस्य दर्शनार्थं गता । तत्र परस्परविचारेण तेन ॲस्टनमहाशयेनैवमुपदिष्टं दृश्यते । यदनया कुटिलया स्वभर्त्रा निधनसमये कृतं लेखप्रमाणं दूरीकर्तुं शासनसंस्थाधिकारिणे प्रार्थनापत्रं प्रेषणीयमिति । तयाऽपि तथा कृतम् । अनन्तरमनया आयव्ययलेखकादयः सर्वे भृत्या दूरीकृताः । अन्यद्दत्तविधानं भविष्यतीति स्फुटमभवत् । विरताः सर्वे प्रयत्नाः । कोल्हापुरनरेशस्य दर्शनमपि लोकमान्यैर्गृहीतम् । अन्ततस्तस्मिन्नेव नगरे संस्थाननरेशसमक्षं बाबामहाराजपत्न्या ताईमहाराजनाम्न्या 'बाब'-नामको बालो दत्तविधानसंस्कारेणानुगृह्य 'बाळामहाराजः' कृतः । एवमेक एव मार्गो लोकमान्यानामुर्वरितः । स तु न्यायालयाश्रयणम् । अवलम्बितः स मार्गो लोकमान्यैः । औरंगाबादनगरे जातं प्रथमदत्तविधानं विधियुक्तमासीत् । द्वितीयं कोल्हापुरनगरे जातम् अन्यायमूलकम्, तस्मान्निषिद्धमिति निर्धारयितुं लोकमान्यैर्न्यायालये प्रार्थनापत्रं समर्पितम् ।

## ५ अभियोगपरीक्षणम्

ॲस्टनमहाशयेन न्यायालये मृतलेखप्रमाणविषयकं प्रकरणं परीक्षणार्थं प्रथमं गृहीतम् । उद्देशस्त्वयमेव । लोकमान्यानां दत्तकविषयकं प्रार्थनापत्रं मिथ्या कर्तव्यम् । अन्यस्मिन् प्रकरणे औरंगाबादनगरे जातं दत्तविधानमयोग्यमिति निर्णेतव्यमिति । अन्यच्च । यदि सम्भवेत् तर्हि असत्यसाक्षित्व-कपटलेखकारित्व-मिथ्याशपथयलेखकत्व-अन्यायेन ताई-महाराजगमनागमनप्रतिबन्धकत्वादिभिरनेकैरपराधैर्लोकमान्या दण्डनीया दण्डनीया इति । पूर्वग्रहदूषित ॲस्टनमहाशयः ऋजुमार्गं कथमनुसरेत् ! न्यायालयप्रविष्टेषु प्रार्थनापत्रेषु विद्यमानानां दोषारोपाणामेकत्र परीक्षणं तेन कृतम् । औरंगाबादप्रकरणे युक्तायुक्ताः सर्वे लेखाः परीक्षणे विनिवेश्य सर्वविवादविषयाणां निर्णयो लोकमान्यविरुद्धोऽभूत् । ॲस्टन-महाशयदत्तनिर्णयमनुसृत्य शासनसंस्थयाऽपि दण्डनीत्या विविधपरिच्छेदाश्रयेण लोकमान्या न्यायालये दोषेणारोपिताः। 'चाराज्जानन्ति राजानः' । प्रणिधिमार्गेण वृत्तान्तं लब्ध्वा रक्षापुरुषाधिकारिभिरात्मनो निवेदनं प्रहितम् । जना ब्रुवन्ति 'दुष्टा ह्येते दोषारोपाः। न्यायालये ते परीक्षणमपि नार्हन्ति । अतः शासनसंस्थया अभियोगा न कर्तव्याः' इति । शासनसंस्थाऽपि आत्मनो दुराग्रहं न मुञ्चति । बहुभिरपराधैर्लोकमान्येषु अभियोगान् कृत्वा न्यायदाने 'ह्वेमंटस्'महाशयो नियुक्तः । तेनोभयपक्षकृतसमर्थनं परीक्ष्य आत्मनो निर्णयो दत्त । बाबामहाराजपत्नी ताईमहाराजनाम्नी विप्रलम्भेन औरंगाबादनगरं नीता । साक्षिणो ब्राह्मणाः टिळकपक्षपातिनः । अतोऽसत्यं ते वदन्तीत्यादीनि बहूनि विधानानि तस्मिन्निर्णये वर्तन्ते । अनेन निर्णयेन लोकमान्या न्यायालये सार्धवर्षभोग्येण कारावासेन तथा च रूपकाणां सहस्रेण दण्डिताः । शासनसंस्थाया हेतुरेवायं यल्लोकमान्यानां विशुद्धा कीर्तिः कलङ्किता कर्तव्या इति ।

अस्य निर्णयस्य परीक्षणार्थं 'सेशन'नामके न्यायालये लोकमान्यानां विधिज्ञेन प्रार्थनापत्रं समर्पितम् । प्रतिभूस्वीकरणायापि पत्रं दत्तम् । अभियोगपरीक्षणकाले उभयपक्षयोः समर्थनं निशम्य श्रोतृसमूहस्य एवं मतिः सम्भूता यल्लोकमान्या दोषान्मुक्ता भविष्यन्तीति । परं न्यायाधीशो ल्यूकस-

महाशयो निर्णयवाचनावसरे अन्तिमे भागे एवमुक्तवान् 'साक्षिणो भाषणसमये टिळकमहाशयोऽसत्यमभाषत' इति । एवमसत्यभाषणापराधो निर्धारितः, सार्धवर्षभोग्यदण्डस्थाने षाण्मासिककारावासदण्डो जातः ।

## ६ वरिष्ठन्यायालयः

वरिष्ठन्यायालये पुनरपि निर्णयपरीक्षणार्थं समाविष्टमेतत्प्रकरणम् । न्यायाधीशौ जेंकिन्स-बॅटी-महाशयौ निर्णयपरीक्षणार्थमुपाविष्टौ । दिनत्रयेण परीक्षणं कृत्वा उभाभ्यामपि लोकमान्याः सर्वेभ्यो दोषेभ्यो विमुक्ताः । एवं कृत्वाऽपि तावुभौ न सन्तुष्टौ । उर्वरिता अपि दोषारोपा अनेन न्यायमूर्तिद्वयेन शासनसंस्थाविधिज्ञद्वारा परावर्तिताः । निर्णयपत्रके साधकबाधकप्रमाणानि दत्त्वाऽस्मिन् प्रकरणे स्वीकृतानां लेखानां तथा साक्षिवचनानां परीक्षणं कृत्वा न्यायमूर्तिद्वयेनोपसंहारे लिखितम् । टिळकपक्षसाक्षिभिः कथितं वृत्तं कनिष्ठन्यायाधीशेन सम्यक् न विमृष्टमिति यदि टिळकपक्षविधिज्ञ प्रतिपादयेत् तर्हि तन्नायोग्यम् । परीक्षणे समावेशितानां लेखानां परीक्षणमपि न समीचीनम् । तेन लेखानामर्थो विपरीतो जातः । समासेन अभियोगपरीक्षणे तथा निर्णये यानि तत्त्वानि प्रमाणानि इति स्वीकृतानि तानि न युक्तानि । प्रत्युत प्रमादपूर्णानीति मन्यामहे । तस्मात्कनिष्ठन्यायमूर्तिदत्तो दण्डो न योग्यः । अतो दोषाभावात्सत्वरमेव टिळकमहाशयो बन्धनान्मोचयितव्य इति । विद्युत्सन्देशेनायं निर्णयो भरतखण्डे सर्वत्र प्रसृतः । अभिनन्दनार्थं लोकमान्येभ्यः सन्देशाः प्रहिताः । पुण्यपत्तने सम्मानार्थमेका सभा निमन्त्रिता । अध्यक्षस्थाने 'अण्णासाहेब पटवर्धन'-महाशया आसन् । वरिष्ठन्यायालयन्यायमूर्तिभ्यो धन्यवादान् दातुं प्रस्तावः सम्मतः । तथा 'दाजीसाहेब खरे'महाशयेभ्यो 'दादासाहेब करंदीकर'-महाशयेभ्यो धन्यवादाः समर्पिताः । महता गौरवेण सभायां लोकमान्याः सत्कृताः । अस्मिन् समये तैरुक्तम् 'मया महद्धैर्यं दर्शितमिति भाषणमयुक्तम् । सङ्कटकाले नैराश्यमगत्वा यो धैर्यं नावलम्बते स मनुष्यसंज्ञां नार्हति' इति ।

दत्तकप्रकरणे प्रथमं कृतोऽभियोग एतावत्कालपर्यन्तं सुस्थिर आसीत् । इदानीं तस्य परीक्षणं सञ्चलितम् । यथावसरं सर्वेषां साक्षिणां वचनानि

सङ्गृह्य १९०६ वत्सरे पुण्यपत्तनस्थन्यायालयेन स्वनिर्णयो दत्तः। सर्वेषु विवादस्थलेषु दैववशादनुकूलोऽयं निर्णयो लोकमान्यानाम्। परं प्रतिपक्षेणेमं निर्णयं परीक्षितुं वरिष्ठन्यायालये प्रार्थनापत्रं समर्पितम्। तत्र 'हीटन'-महाशयास्तथा 'चंदावरकर'महाशया न्यायासने उपविष्टा आसन्। तै-र्विपरीतो निर्णयो दत्तः। अस्मिन् समये लोकमान्या 'मण्डाले'कारागृहे आसन्। तत्रेमं निर्णयं निशम्य निर्णयपत्रकं सम्यगधीत्य सर्वाणि विवाद-स्थलानि पत्रे लिखित्वा आत्मनो विधिज्ञद्वारा अतिवरिष्ठन्यायालयं प्रति आत्मनो निवेदनपत्रेण सह वरिष्ठन्यायालयनिर्णयो लोकमान्यैः परीक्ष-णार्थं समर्पितः। अस्य निवेदनपरीक्षणस्य निर्णयः १९१५ संवत्सरे लोक-मान्यैर्लब्धः। अयं निर्णयः पुनरेकदा दिष्ट्या सर्वथा लोकमान्यानामनुकूलो जातः। 'जेंकिन्स-बॅटी'महाशयाभ्यां दत्तेन व्यवहारप्रकरणनिर्णयेनान्ततो लोकमान्यानां सत्पक्षस्य विजयो जातः। अस्य विजयस्य कृते महन्मूल्यं लोकमान्यैर्दत्तम्। चतुर्दशवत्सरान् नक्तंदिवमस्य विषयस्य चिन्तनम्। रूपकाणां पञ्चाशत्सहस्रं धनक्षयः। समाधानं तु केवलमिदमेव यदनेन मूल्ये-नात्मनो वचनं सत्यं निर्णीतं, चारित्र्यं च निर्मलं जातम्। तस्मादमूर्तो आङ्ग्लन्यायदेवता तथैव तस्यै स्फूर्तिदाता अमूर्तः परमेश्वरः उभावपि अभिवादनार्हौ। १९०३ संवत्सरे क्लेमंटस्महाशयस्य निर्णयेन महत्सङ्कटं समुपस्थितम्। शीलस्य रक्षणार्थं संवर्धनार्थं च सर्वेषां जनानां समुद्योगः। तद्यदि विनष्टं स्यात्तर्हि कोऽर्थो धनलाभेन वा किं प्रयोजनं मलीमसेन जीवितेन वा। अनेन निर्णयेन उभयथाऽपि हानिः। परम् अस्मिन् परीक्षा-काले मेरुरिवाचलधैर्यवृत्तयो लोकमान्याः। प्रयत्नवादमङ्गीकृत्य दीर्घोद्योगे-नेदमपि दुःखं लोकमान्यैः सोढम्। अन्ते १९१५ संवत्सरे अतिवरिष्ठ-न्यायालयनिर्णयेनैतत्सर्वं दुःखं निरस्तम्। आनन्दस्यायं क्षणः परिवर्तित-भाग्यचक्रेण लोकमान्येभ्यो दर्शितः।

बहवो दोषा बहुभिर्जनैर्लोकमान्येषु प्रक्षिप्ताः। तेष्वेको लोकमान्यानां स्वभावोऽतीव 'आमही' इति। अस्मिन् विषये एका स्मृतिशलाका 'नाना नागपुरकर 'नामकेनोल्लिखिता दृश्यते। स लिखति "बाबामहाराजपत्नी ताईमहाराजनाम्नी निष्कपटवृत्त्याऽस्माभिः सह सुखेन क्रीडति स्म।

अतोऽहमेकदा धैर्येण तामपृच्छम् ' किमर्थं त्वं टिळकेन सह सदैव कलहं करोषि ? किं तवापकृतं तेन ? ' इति । सपद्येवाश्रुपूर्णलोचनाभ्यां मां दृष्ट्वा सा सद्गदमवादीत् ' वत्स, न मम किमप्यपकृतं तेन । न मम वराटकोऽपि तेन स्पृष्टः । परम् एक एव तस्य महान् दोषः । तस्याग्रही स्वभावः । अहमपि मानिनी । स यदि मम पुरत आगत्य वदिष्यति ' किमिदं क्रियते त्वया ' इति तर्हि सपद्येवाहं तस्य चरणौ शिरसि धृत्वा यत्स आदेक्ष्यति तत् करिष्यामि । परं कण्ठगतैः प्राणैरप्यहं स्वयं न कदाऽपि विरमामि ' इति " ।

लोकमान्यानां निःस्पृहत्वविषये अन्या स्मृतिशलाका वर्तते । ' यशवंतराव कुलकर्णी ' महाशयो लिखति " बाबामहाराजस्योद्याने निर्मिताः शाकादिपदार्था अपि लोकमान्यैर्न कदाऽपि स्वीकृताः । ते वदन्ति ' अस्माकमुद्याने विपुलाः शाकादिपदार्थाः सम्पद्यन्ते । विविधास्तेषां प्रकाराः । युष्माकमुद्याने कथमिदं सम्भवेत् " इति । लोकमान्यानामयं निःस्पृहतागुणः ताईमहाराजेन न्यायालयेऽपि स्वनिवेदने स्वीकृतः । न्यायाधीशेन मुहुर्मुहुः सूचकवाक्यैः पृष्टायास्तस्या एकमेवोत्तरमासीत् ' यद्यत् लोकमान्यैः कृतं तत्तत्सर्वं मम विभवकल्याणायैव ' इति ।

महतीयं कथा । नाट्यपूर्णं चमत्कृतिपूर्णं चेदं प्रकरणम् । परं स्थलसङ्कोचादत्रैवास्माभिर्विरम्यते ।

एवं लोकमान्यैः सह परम्परासम्बन्धेनेयं क्षुद्रजनकन्या लोकेषु प्रसिद्धिं गता । उक्तं च--

' येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ' । इति ।



# ८ राष्ट्रियसभापर्व

## १ राष्ट्रियसभा

१९०४ वत्सरे राष्ट्रियसभाधिवेशनं मुम्बापुर्यामभूत्। 'सर वुइल्यम् वेडरबर्न'प्रभृतीनां मतेनाऽऽङ्ग्लदेशे राष्ट्रियसभाकार्यस्यान्दोलनमावश्यकम्। एकं शिष्टमण्डलं सम्प्रेष्य, तथैव एकं कार्यालयं तत्र संस्थाप्य अविरतं कार्यमपेक्षितम्। 'पार्लमेंट'सभासदस्यानां वारं वारं दर्शनं गृहीत्वा, तेभ्यो भारतस्य दुःखानि निवेद्य, भारतविषयकः प्रश्नः तस्यां सभायामुत्पादयितव्यः। तेनैव भारतीयानां दुःखकथा आङ्ग्लदेशीयानां कर्णविवरमापतेदिति।

राष्ट्रियसभाधिवेशनं 'सर् हेनरी कॉटन'महाशयानामध्यक्षत्वे सम्पन्नम्। 'वेडरबर्न'महाशया अप्युपस्थिताः। लोकमान्यैरुभयोर्दर्शनं गृहीत्वा सभाकार्यविषये चर्चा कृता। लाला लजपतरायमहाशयानां 'फेरोजशहा मेथा'महाशयैः सह विषयनियामकमण्डले कलहो जातः। राष्ट्रियसभाघटनाविषयेऽपि महान् सङ्घर्षोऽभूत्। कॉटनमहाशयसम्पादिते ग्रन्थे एवं लिखितम् 'जहाल-मवाळपक्षभेदस्तदाऽऽसीत्' इति। सभाधिवेशने महत्स्वागतं जातं लोकमान्यानाम्।

अस्मिन्समये 'कर्झन'महाशयो राजप्रतिनिधिप्रमुख आसीत्। कॉटनमहाशया यदा राष्ट्रियसभाप्रस्तावान् तस्मै निवेदयितुं गतास्तदा कर्झनमहाशयेन तस्मै दर्शनमपि न दत्तम्। एतादृशस्तस्य रोषः कॉटनमहाशये।

लोकशिक्षणेन लोकप्रबोधस्य विविधाः प्रकारा अस्मिन् काले लोकमान्यैरङ्गीकृता दृश्यन्ते। तेषु केषांचन परिचयः स्थलसङ्कोचात्केवलोल्लेखमात्रेणात्र क्रियते।

## २ पञ्चाङ्गशोधनम्

पञ्चाङ्गसंशोधनविषये सर्वेषामैकमत्यं सम्पादयितुं बहवो यत्नाः कृताः। अयनांशसम्बन्धेन महान् मतभेदः। लोकमान्यानामेयमभिप्रायः 'निखिले भारते एकमेव नूतनं पञ्चाङ्गमुपयुज्येत। प्रथममेतत्सम्पाद्य अन्यमतभेदविषये विवादाः पश्चाद्भवेयुः' इति।

## ३ समाजसुधारणातत्त्ववादः

माधवराव रानडेमहाशयेषु दिवं गतेषु सामाजिकपरिषदो महत्त्वं शनैः शनैरल्पतरमुर्वरितम्। अस्मिन् विषये लोकमान्याः सोद्वेगं लिखन्ति 'समाजसुधारणा न कर्तव्येति कदापि वयं न ब्रूमः। नैकप्रकारेणास्माभिरिदं कण्ठरवेणोद्घोषितम्। परं सुधारकाणामस्माकं च मार्गोऽस्मिन् विषये भिन्नः। जातिभेदमूर्तिपूजादिविषयेषु पुरातनीं वैदिकसंस्कृतिं परित्यज्य सुधारकाः सुधारणामिच्छन्ति। प्राचीनसंस्कृतिस्तेषामुपहासविषयः। 'मार्टिन ल्यूथर' नामको महान् ख्रिस्तधर्मसुधारकः शार्मण्यदेशेऽभूत्। परं बायबल नामके ख्रिस्तधर्मग्रन्थे विश्वस्य तेन सुधारणामण्डनं कृतम्। बौद्धा इव भागवतधर्मिणोऽपि जातिभेदं तत्त्वतो न सम्मन्यन्ते। परं जना भागवतधर्मिणो लोकान् वैदिकान् सम्मन्यन्ते। न तथा बौद्धान्।

## ४ पुनः पण्डिता रमादेवी

पण्डितया रमादेव्या व्याख्याने पुनरुपद्रवः समारब्धः। परं श्रोतृवृन्देनैव तन्मतखण्डनं सभायामेव कृतम्। अनेन प्रसङ्गेन लोकमान्यैरिदं लिखितम् "विधवानां दुःखनिवारणे 'कर्वे'महाशयैः स्थापितः 'अनाथबालिकाऽऽश्रमः' रमादेव्याः शारदासदनात् शतगुणं श्रेयान्" इति। अस्याश्रमस्य वार्षिकं प्रतिवृत्तं केसरिपत्रे लोकमान्यैर्विस्तरेण मुद्रितम्। तदर्थं तेभ्यः कर्वेमहाशयैर्धन्यवादाः प्रदत्ताः।

## ५ 'काळ'वृत्तपत्रम्

पराजपेमहाशयानां 'काळ'वृत्तपत्रस्य प्रभोऽपि आङ्ग्लवृत्तपत्रसम्पादकैः पुनरुद्धृतः। तेषु 'मुम्बई टाइम्स'वृत्तपत्रं प्रमुखम्। लोकमान्या अलिखन् 'काळपत्रे लिखितानां लेखानामर्थोऽपि एतैराङ्ग्लवृत्तपत्रसम्पादकैर्न ज्ञायते। प्रखरटीकाक्षरस्य किं कारणम्? शासनसत्ताधिकारिणामुन्मादः। पारतन्त्र्यदुःखान्यस्माभिरनुभूयन्ते। राजद्रोहाभियोगेभ्यो वयं न बिभीमः। परं शासनसत्तयाऽस्माकं हेतूनां विपर्यासो न कार्यः' इति।

१९०५ वत्सरे 'भाल'पत्रसम्पादकः षाण्मासिककारावासेन दण्डितः।

## ६ ब्रुइनमहाशयनिधनम्

रँडमहाशयवधप्रकरणे वधकर्तुः शोधार्थं नियुक्तो गुप्तचराधिकारी ब्रुइनमहाशय आसीत् इति ज्ञायत एव वाचकैः। तस्य निधने जाते लोकमान्यैर्लिखितम् 'रक्षापुरुषसंस्थायां गुप्तचरविभागे विद्यमानोऽयं पुरुषः कैश्चिदनन्यसाधारणगुणैर्मण्डित आसीत्। सत्यशोधनार्थं नाना स्थलानि गत्वा, विविधान् जनान् दृष्ट्वा, आत्मनः कर्तव्यम् अयं पुरुषः कुशलतया सम्पादयति स्म। अधिकारिपुरुषेभ्योऽपि युक्तं मन्त्रं यथावसरमेष ददाति इत्यस्य विशेषः'। अतस्तस्य गुणग्रहणार्थमिदं लेखनम्।

## ७ उत्सवाः

राजकार्यधुरंधराणां 'नाना फडणीस'महाशयानामुत्सवार्थं १९०५ संवत्सरे लोकमान्याः 'वेळास'ग्राममगच्छन्।

छत्रपतिशिवरायोत्सवप्रसारस्तैः सोल्लासं कृतः। अस्मिन्नेव संवत्सरे जपानदेशे भारतीयछात्रगणेन कृतस्य छत्रपतिमहोत्सवस्य वार्ता लब्धा। १९०६ वत्सरे तन्महोत्सवार्थं वङ्गदेशे कलकत्तानगरे लोकमान्या निमन्त्रिताः। महान् सत्कारस्तेषां तत्र जनैः कृतः। लोकमान्यैस्तथा खापर्डे-महाशयैः छत्रपतिगुणदोषविवेचनमैतिहासिकदृष्ट्या कृत्वा शिवरायस्य शौर्य-वीर्यदाक्षिण्यपराक्रमशासनकौशल्यादयो गुणा वर्णिताः। जनैर्महता गौरवेण वैभवेन च महोत्सवः सम्पादितः।

## ८ नेमस्तपक्षनिराशा

१९०४–५ संवत्सरे गोखलेमहाशयैराङ्ग्लदेशे महत्कार्यं सम्पादितम्। राष्ट्रियसभया यथा भारते तथाऽऽङ्ग्लदेशेऽपि कार्यं विधेयमिति प्रस्तावः कृतः। तमनुसृत्य 'इंडिया-हाऊस'नामिका संस्था कार्यसातत्यार्थं स्थापिता। आङ्ग्लदेशे तदा द्वौ पक्षावास्ताम्। एकः 'कान्झरव्हेटिव्ह्'-नामकः, अपरो 'लिबरल्'इत्याख्यः। उभयोः सहकारेण कार्यमावश्यकं जातम्। अग्रे लिबरल्पक्षेण कान्झरव्हेटिव्ह्पक्षः पराजितः। भारते नेमस्तपक्षस्याशा तेन पुनरुज्जीविता। परम् अचिरेणैव 'सर जॉन् मोर्ले'महाशयैरुद्घोषितम् 'एकेन पक्षेण यत्कृतं तस्य अपरेण परिवर्तनमयुक्तम्। सकृद्विभाजितो वङ्गदेशः कदाऽपि पुनः संयुक्तो न भविष्यति। भारतीया अधिकारदान-

योग्याः । परं लिबरल्पक्षः प्रभूतानधिकारान् दास्यतीत्याशाऽपि न समीचीना' इति । अनया स्पष्टोक्त्या नेमस्तपक्षस्याकाङ्क्षा विफलीभूता ।

## ९ अधिकारमदः

कर्झनमहाशयस्याधिकारमदः परां कोटिमापन्नः । प्रमुखराजप्रतिनिधिपदस्थोऽयं पुरुषः कलकत्ताविद्यापीठस्य प्रमाणपत्रवितरणार्थं तत्र गतः । दीक्षान्तभाषणे छात्रानुद्दिश्य 'सत्यं वद' इति तत्त्वं तेनोपदिष्टम् । पर्यायेणायं सर्वेषां भारतीयानामुपदेशः । अखिलो वङ्गदेशो भाषणेनानेन प्रक्षुब्धः । अतः सत्यानृतविवेकविषयमधिकृत्य कुशलतया सत्यतत्त्वस्य विवरणं कृत्वा 'बायबल'नामकख्रिस्तधर्मग्रन्थाधारेण लोकमान्यैः केसरिपत्रे प्रथममेव दर्शितम् 'सत्यं नाम किम्' इति द्विसहस्रहायनेभ्यः प्राक् पाश्चात्त्या एव नाजानन् । पौर्वात्यास्तु तत् सम्यगेव जानन्ति । सत्यप्रियतामिषेण प्रमुखराजप्रतिनिधिना मनसि स्थितं क्रोधं निष्ठीव्य पवित्रं सरस्वतीमन्दिरमपवित्रं कृतम् । सत्यानृतविवेकस्य सूक्ष्मज्ञानं महाभारते दृश्यते एव ।

'अमृतबझारपत्रिका'नामकवृत्तपत्रस्य सम्पादकैः 'बाबु मोतीलाल घोष'महाशयैरुद्धृतः कर्झनमहाशयस्य असत्यभाषणप्रसङ्गः । इयं कथा तेनैवात्मनः प्रवासवर्णने महताऽभिमानेन लिखिता दृश्यते । 'कोरिया'देशे प्रधानमन्त्रिदर्शनार्थं गतं कर्झनमहाशयं स मन्त्रिमहाशयः पृष्टवान्—

मन्त्री– कियद्वयः अत्रभवताम् ।

कर्झन०– चत्वारिंशत्समाः ।

त्रयस्त्रिंशद्वर्षोऽयं युवा निःशङ्कमनसा प्रतिवक्ति स्म ।

मन्त्री– आङ्ग्लदेशराज्ञ्याः अत्रभवन्तो निकटवर्तिनः सम्बन्धिन इत्यस्माभिः श्रूयते । अपि सत्यमेतत् ?

कर्झन०– नैवम् । अद्यावधि मम विवाहोऽपि न जातः ।

इदमुत्तरमसत्यमिति ज्ञातमेव मन्त्रिमहाशयैः । प्रधानमन्त्रिकृपासम्पादनार्थमिदमसत्यभाषणम् । अथायं कर्झनमहाशयो भारतीयान् सत्यभाषणमहत्त्वमुपदिशति इत्यहो आश्चर्यम् ।

भारतदेशे प्रमुखराजप्रतिनिधिपदे नियुक्ते कर्झनमहाशये, एतत्सर्वं वृत्तमस्य पुस्तकस्य द्वितीयमुद्रणे प्रतिनिविष्टं न दृश्यते ।

## १० राष्ट्रियसभाधिवेशनम् ( १९०५ )

१९०५ वत्सरे राष्ट्रियसभाधिवेशनं वाराणसीक्षेत्रे जातम्। कर्झनमहाशयस्य कार्यपद्धत्याऽसन्तुष्टा गोखलेमहाशया आत्मन अध्यक्षीयभाषणे सर्वान् विषयान् साकल्येन विमृश्यावदन् "वङ्गदेशविभजनेन वङ्गवासिनोऽवमानिताः। तेषामान्दोलनं तु युक्तमेव। आङ्ग्लदेशीयानामवधानार्थं बहिष्कारयोगोऽपि समुचितः। स्वदेशे निर्मितानां पदार्थानां दैनंदिनकार्येषूपयोगस्तु स्वाभाविक एव" इति। स्वदेशनिर्मितवस्तुप्रचारो बहिष्कारयोगश्चेति द्वे साधने समुत्पन्ने।

## ११ वङ्गदेशान्दोलनम्

कर्झनमहाशयेन मोर्लेमहाशयं प्रति एकं निवेदनं सम्प्रेष्य वङ्गदेशविभजने तस्यानुज्ञा प्रार्थिता। मोर्लेमहाशयेनापि लोकमतमविचार्यैवानुज्ञा दत्ता। अनेन विजयेन १९०५ वत्सरे जुलैमासस्य विंशतितमे दिवसे कर्झनमहाशयेन वङ्गदेशस्य विभजनमुद्घोषितम्। वज्राघात इव वङ्गवासिनां मूर्ध्नि समापतितमेतद्विभजनम्। कंचित् कालं भ्रान्तचित्तास्ते जाताः। वङ्गवासिनामवमानार्थं वङ्गदेशं च दुर्बलीकर्तुं तथैव हिंदुयवनकलहार्थमिदं कृतमिति सर्वेषां मतिः।

तस्मिन्नेव संवत्सरे ऑगस्टमासस्य सप्तमे दिवसे कलकत्तानगरे महदान्दोलनं समारब्धम्। नगरभवने नागरिकाणामेका सभा निमन्त्रिता। परं स्थलसङ्कोचेन चतुर्षु स्थानेषु सभाकार्यमेकसमयावच्छेदेन समापितम्।

अद्यावधि सर्वेषामान्दोलनानामेकमेव पर्यवसानम्। आवेदनपत्र-प्रार्थनापत्र-निवेदनपत्रादीनि इति। न किमपि कृतिरूपमान्दोलनम्। नेमस्तपक्षीया राष्ट्रियपक्षीयाः, शिक्षिता अशिक्षिताः, सधना निर्धनाः, वृद्धास्तरुणाः, विद्यार्थिनो व्यवसायिनश्च सर्वे जना एकीभूय प्रतिकारार्थं सज्जा बभूवुः। स्वदेशीयवस्तूनां दैनंदिनव्यवहारे स्वीकारः, आङ्ग्लवस्तूनां बहिष्कारः इति साधनद्वयेनेदमान्दोलनं राष्ट्रधुरीणैः सञ्चालितम्। 'बंकिमचन्द्रस्य' 'आनन्दमठ'नामके पुस्तके विद्यमानेन 'वन्दे मातरम्' इति गीतेन महान् सङ्घर्षः समुत्पन्नः। एतत्पद्यगानमपराध इति अगण्यत रक्षापुरुषैः।

१९०५ संवत्सरस्य ऑक्टोबरमासस्य षोडशो दिवसः वङ्देश-विभजनस्य मुहूर्तो निश्चितः। अस्मिन् दिवसे प्रतिकारप्रदर्शनमाचरितव्य-मिति निर्धारितम्। कार्यक्रमो द्विप्रकारकः। एकः प्रकारो रक्षाबन्धनम्। अपरो तीर्थस्नानमुपोषणं च। अनेन चित्तशुद्धिः स्यात्। अभङ्गवङ्गकल्पनाद्योतक-मेकं सदनं विरचयितव्यमिति सर्वैर्निश्चितम्। तस्य नाम 'अभेदानन्दमठः' इति।

वङ्गभङ्गस्यान्दोलनारम्भे एकः सुयोगोऽभावितत्तया प्राप्तः। वङ्ग-भङ्गजनकः कर्झनमहाशयः कस्मिंश्चित् शासनसंस्थाप्रकरणे वरिष्ठाधिकारिणा पराभूतः। एकस्मिन् पक्षे प्रमुखसेनापतिपदस्थो वीराग्रणी. 'किचनेर'महा-शयः। अन्यस्मिन् पक्षे राजप्रतिनिधिपदस्थः कर्झनमहाशयः। अनयोः संघर्षे खड्गः एव प्रधानमिति स्पष्टं जातम्। अतः स्वपराभवं स्वमुखेनैवोच्चार्य कर्झनमहाशयेन प्रमुखराजप्रतिनिधिपदस्य त्यागपत्रं प्रहितम्। मानधनस्य पुरुषस्य मानभङ्गान्मरणं वरम्। कर्झनमहाशयस्य महत् शासनमेतत्। राज्यारोहणमहोत्सवे 'व्हिक्टोरिया'नाम्न्याः सम्राज्ञ्याः पुत्राय गौणं स्थानं दत्त्वा 'अहं राजप्रतिनिधिः' इत्यहंकारेण येनाग्रिमं स्थानं स्वीकृतं तस्य पुरुषस्य अभूतपूर्वोऽयं परिभवः। अपरं देहान्तशासनमिदम्। एवं प्रधान-भङ्गनिवर्हणं वङ्गभङ्गान्दोलनस्य शुभसूचको मुहूर्तो लोकसम्मतः।

उपरि निर्दिष्टं साधनद्वयं लोकैर्दैनंदिनकार्येषु कथमुपयोक्तव्यमिति विचारे प्रथमं स्वदेशीयवस्तूनां मध्ये परिधानीयवस्त्राणां प्रश्नः प्राधान्यमभ-जत। वङ्गवासिनां वस्त्रपरिधानपद्धतिः पाश्चात्त्या। आङ्ग्लानां पूर्णत्वेनानु-करणं वङ्गवासिनां स्वभावोऽभूत्। अनेन स्वदेशीयवस्तुप्रचारान्दोलनेन महत्परिवर्तनं जातम्। न केवलमूर्णादुकूलादिमहार्हवस्त्राणां परित्यागस्तैः कृतः। परं वस्त्रपरिधानक्रियायां स्वीकृताऽऽङ्ग्लपद्धतिरपि परित्यक्ता। अनया रीत्या 'स्वदेशी'नामकमान्दोलनं समुद्भूतम्। यथा देशीयवस्तूनां सर्वेषु कार्येषूपयोगस्तथा परदेशीयवस्तूनामनुपयोग इत्यपि तस्यान्दोलनस्यापरं रूपम्। अभिधानं तु तस्य बहिष्कार इति।

इदं साधनद्वयं महाराष्ट्रदेशे नापरिचितम्। परमनेन समयेन तेन साधनद्वयेन महत् क्षेत्रं समाक्रान्तम्। लेखनसातत्येन लोकमान्यैरिदं स्वदेशी-

यवस्तूनामान्दोलन ग्रामे ग्रामे प्रसारितम् । परदेशीयवस्त्राण्यग्निसात्कृतानि। एतादृश रौद्ररूपमनेनान्दोलनेन विधृतम् । पुण्यपत्तने परदेशीयवस्त्रदहनोप क्रमेण आयत्या लब्धकीर्ति क्रान्तिकारकाणा नेता सावरकरनामा प्रथम परिचितो जात । अनेन बहिष्कारयोगेन महत् क्षेत्र व्याप्तम् ।

वङ्गदेशे परा कोटिं गतमिदमान्दोलनम् । कैश्चिद्युवभिर्दृष्टम्- ता सभा , ते निषेधा , तानि तु खनिवेदनपत्राणि, अय स्वदेशीयवस्तुप्रचार , बहिष्कारयोगोऽपि लेशतो तु खनिवारणाय नालम् । तामसप्रकृति 'बॅम्फील्ड फुल्लर'नामक पूर्ववङ्गदेशराजप्रतिनिधि अधिकारमदेनोन्मत्तोऽभूत्। 'वन्दे मातरम्' इति गीतस्य राजमार्गेण गान तेन प्रतिषिद्धम् । मार्गेण जनाना सञ्चलने रक्षापुरुषैर्लगुडप्रहारो दापित । 'सुरेन्द्रनाथ बानर्जी महाशया क्षुद्रेण कारणेन रूपकाणा द्विशत दण्डिता । अत प्रक्षुब्धो तरुणजन क्रान्तिकारकाणा मार्गमाचरितवान् ।

एको विनोदपूर्णप्रसङ्गोऽत्र वर्णितो लक्ष्यते । वङ्गदेशे व्याख्यानावसाने सुरेन्द्रनाथ बानर्जीमहाशयाना कण्ठे सभाचालकै पुष्पहार समर्पित । तेनाचारेण शासनसंस्थापक्षीया मत्सरग्रस्ता वृत्तपत्रसम्पादका अवर्णयन् 'सुरेन्द्रनाथमहाशया राजमुकुट धारयित्वा राज्याभिषेकेण राजाधिराजपदवीं प्राप्ता' इति ।

द्वितीय एष प्रसङ्ग । महाराष्ट्रदेशे व्याख्यानार्थं 'बेळगाव'नामक नगर गतेषु लोकमान्येषु सभासमये मेघोऽवर्षत् । तदा एकेन स्वयसेवकेन लोकमान्याना मस्तकस्योपरि छत्र विधृतम् । भृश अब्रह्मण्य जातम् । अन्यस्मिन्नहनि विरोधकवृत्तपत्रैर्मुद्रितम् 'लोकधुरीणा साम्प्रत राजचिह्नानि धारयन्ति' इति । एवप्रकारको विरोधकाना प्रचार प्रवृत्त आसीत् ।

## १२ राष्ट्रियसभाधिवेशनम् ( १९०६ )

खिस्ताब्दस्य १९०६ वत्सरे कलकत्तानगर्यां राष्ट्रियसभाधिवेशन निश्चितम् । अध्यक्षपदे को राष्ट्रधुरीणो नियोक्तव्य इति विषये विचारप्रवणो जनो नामान्यसूचयत् । अस्मिन् सवत्सरे लोकमान्या टिळकमहाशया अध्यक्षपदमलङ्कुर्वन्तु इति कैश्चित्सूचितम् । लाल लजपतराजमहाशया इद स्थान विभूषयन्तु इत्यन्यैर्ध्वनितम् । अनयो कोऽपि तत्स्थान मण्डयतु,

राष्ट्रियपक्षीय एव सः। अतो नेमस्तपक्षीयाणामेतदसम्मतम्। अतस्ता-वुभावपि दूरीकर्तुं तैः 'दादाभाई नौरोजी'महाशयानां नाम सूचितम्। सर्वेषां तत्सम्मतम्। लोकमान्यैश्चिन्तितम् "यदि नौरोजीमहाशयाः 'स्वदेशी-बहिष्कार'नामकं शब्दद्वयमधिकारयुक्तवाण्या समुद्घोषयन्ति तर्हि बहु समीचीनं भवेत्" इति।

वङ्गभङ्गोत्थानेन याचनावादिनां तथा अधिकारवादिनां पक्षे प्रभूता मतभेदाः समुत्पन्नाः। तस्मादालस्यं परित्यज्य सर्वेषां प्रदेशानां लोकधुरीणाः कलकत्तानगरीं समागताः।

प्रथमेऽहनि स्वभाषणे अध्यक्षमहोदयैः दादाभाई नौरोजीमहाशयै-र्भारतस्य ध्येयं स्वराज्यमिति असन्दिग्धैरक्षरैरुद्घोषितम्। तत्प्राप्त्यर्थं च 'स्वदेशी-बहिष्कार-राष्ट्रियशिक्षणादीनि' साधनानि भारतेनाश्रयणीयानि इति प्रतिपादितम्। एते चत्वारः शब्दाः राष्ट्रियसभायाश्चतुःसूत्रीति नाम्ना प्रचलिताः।

शारीरकमीमांसायां यथाऽमिमाणि चत्वारि सूत्राणि चतुःसूत्रीति नाम्ना प्रसिद्धानि तथैव राजकारणविषये इमानि चत्वारि सूत्राण्यभूवन्।

महाभाष्यकारैः पतञ्जलिमहर्षिभिर्भाष्ये उक्तम् 'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति' इति। इमां महर्षिप्रणीतां पङ्क्तिमनुसृत्य राष्ट्रियसभाध्यक्षमहाशयैः सम्यग्ज्ञाताः सम्यक् प्रयुक्ताश्चैते चत्वारः शब्दा अस्मिँल्लोके भरतखण्डे आसन्नचत्वारिंशद्वत्सरानन्तरं काम-दुहोऽभूवन्।

एतदर्थकाः प्रस्तावा अपि अधिवेशने सदस्यानां सम्मता अभूवन्। सर्वमेतन्नेमस्तपक्षीयाणामसम्मतम्। परं किं कर्तव्यम्? अखिलभारतीय-प्रतिनिधिभिः सम्मता एते प्रस्तावाः।

लोकमान्या विनोदेन केसरिपत्रे लिखन्ति "यौवनपदवीमारूढाया राष्ट्रियसभायाः स्वराज्याधिकारनामकेन यूना सह जातो विवाहसम्बन्धो न केनापि साम्प्रतं विभजनीयः। जनकत्वेन सम्बन्धितपक्षस्य यद्यप्येष सम्बन्धः पूर्णत्वेन न सम्मतस्तथाऽपि तस्मिन् सम्बन्धे इदानीं कोऽपि व्यत्ययो विच्छेदो वा न समर्थनीयः। दिने दिने उत्साहबलवीर्यशालिनां

यूनां मतप्रवाहो लोकरुचये भवतीति राजकीयप्रगतिचिह्नं क्रमप्राप्तमेव" इति।

## १३ स्वदेशीयवस्तुप्रचारः

१९०७ वत्सरे लोकमान्यैर्महाराष्ट्रदेशे तथा राष्ट्रियसभया निखिल-भरतखण्डे महदान्दोलनं समारब्धम्। स्वदेशीयवस्तूनां प्रचारः, राष्ट्रिय-शिक्षणस्य महत्त्वम्, परदेशीयवस्तुषु बहिष्कारयोगः एते सर्वे विषया जनानां मनांसि समाकर्षन्ति।

स्वदेशीयवस्तुप्रसाराय मुम्बापुर्यां श्रेष्ठिनां सहकारेण विक्रयार्थं "स्वदेशी-कोऑपरेटिव्ह-स्टोअर्स"-नामकः एकः आपणः लोकमान्यैः स्थापितः। 'पैसाफंड'नामकः एको द्रव्यनिधिः स्थापित आसीत्। तस्य कार्यमपि अनेन निमित्तेन प्रगतम्। व्यवसायशिक्षणार्थं पूर्वं स्थापिता काचशाला अनेन 'पैसाफंड'नामकेन द्रव्यनिधिना वर्धिता।

पुण्यपत्तने, मुम्बापुर्यां, पंढरपुरक्षेत्रे, चिंचपोकळी-नामके मुम्बापुर्याः उपनगरे स्वदेशीयवस्तूनां प्रचारो व्याख्यानद्वारा जातः। राष्ट्रियशिक्षणस्य समुत्थानमपि महत्सम्भूतम्। सर्वत्र लोकाग्रणीनां व्याख्यानैर्विद्यार्थिजनस्य चेतसि महच्चैतन्यं समुद्भूतम्। भावनाप्रधानो हि छात्रगणः। व्याख्यानादीनां श्रवणेन, वृत्तपत्रवाचनेन च तेषां मनांसि राष्ट्रियसभापुरस्कृत-विषयैरावर्जितानि। अतः शासनसंस्थाधिकारिणां मनस्येको विचारः प्रादुर्भूतः। 'रिस्ले सर्क्युलर' इति नाम्ना कुप्रसिद्धस्याज्ञापत्रकस्य अस्माद्विचारादुद्गमः। अनेनाज्ञापत्रकेण विद्यालयाधिकारिणां हस्ते सर्वेऽधिकाराः समर्पिताः।

## १४ आज्ञापत्रकपरिणामः

अस्याज्ञापत्रकस्य एवंविधः परिणामो जातः। विद्यार्थिषु अध्यापकस्यैवाधिकारः। न तेषां जनकजननीनाम्। तेषां 'पितरः केवलं जन्महेतवः'। कीर्तनव्याख्यानप्रवचनश्रवणार्थं शिक्षकजनस्यानुज्ञां विना कदाऽपि छात्रैर्न गन्तव्यम्। न वा किमपि कार्यं कर्तव्यम्। पाठशालासु महाविद्यालयेषु वा बहिरपि छात्राणामपचारे गुरुजनो दूषणीयो दण्डनीयश्च।

'शिष्यापराधे गुरोर्दण्डः'। आङ्ग्लशासितप्रदेशेषु, नरेशाना सस्थानेषु, सर्वत्र अस्याज्ञापत्रकस्याधिकार । पुण्यपत्तनस्थफर्ग्युसनमहाविद्यालये अधीयान सावरकरमहाशय स्वदेशीयवस्तुप्रचारसभाया कार्यं कुर्वाणो महाविद्यालयप्राचार्यैर्दश रूपकान् दण्डित , महाविद्यालयछात्रनिवासस्थानान्निष्कासितश्च ।

राष्ट्रियभावनासवर्धने राष्ट्रधुरीणाना यत्न । विपरीतयत्ना च शासनसस्था। तस्या मतेन विद्यार्थिभि राष्ट्रियसमुत्थाने किमपि कार्यं न करणीयम् । यदि कृत स्यात्तर्हि विद्यार्थिभि· सह सा शिक्षणसस्थाऽपि दूषणीया दण्डनीया च। अत सर्वे मुख्याध्यापका शासनसस्थाकृतस्वल्पद्रव्यसाहाय्यार्थमेतादृशमाज्ञापत्र मानयन्ति ।

लोकमान्या प्रतिपादयन्ति "आङ्ग्लदेशे 'केम्ब्रिज्-ऑक्सफर्ड'प्रभृतिविश्वप्रसिद्धविद्यापीठाना छात्रगणा सदैव विद्यार्थिदशाया राष्ट्रकार्ये यथाशक्ति लोकाग्रणीभ्य साहाय्य यच्छन्ति। भारते यदि तत् स्यात्तर्हि किमर्थं दोषास्पद भवेत् । यदि शिक्षणसस्था एतादृशस्य राष्ट्राभ्युदय कार्यस्य पाठान् छात्रेभ्यो न दद्युस्तर्हि केनेद कार्यं कर्तव्यम्। अथ च तस्य शिक्षणस्य कि फलम् ?" 'सेल्वी'महाशयो वदति 'स्वदेशीयवस्तुप्रचारार्थ मान्दोलन युक्तम्। पर छात्रगणेन तत्कार्यं न करणीयम्'। भवतु नामैतत्। परं सेल्वीमहाशय कदाऽपि प्रचारार्थं गत किम् ? न कदाऽपि गत । एतादृशा प्राध्यापका स्वविषये निष्णाता अपि अस्माक कल्याणाय भारत देश नागता । अतस्ते नास्माक गुरव । अस्माक प्राचीनाध्यापका नि स्पृहा, सत्त्वशीला, जितेन्द्रिया, ज्ञानदानरता, लौकिकव्यवहारादलिप्ता लोक कल्याणाय राष्ट्रहिताय च सदैव प्रायतन्त । अद्यतनाध्यापकवर्गो धनप्रियो विषयसुखलोलुपश्च । तस्मात् ते नास्माक गुरव । महाभारतस्थश्लोकस्य किंचित्परिवर्तन कृत्वा लोकमान्या उद्गिरन्ति—

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ इति ।

अत एवैतादृश्यो राष्ट्रकार्यविरोधिन्य शिक्षणसस्था अनुपयुक्तास्तिरस्कारार्हाश्च। तस्माद्राष्ट्रियशिक्षणाय जनैरात्मनो धन चित्त च दातव्यमिति लोकमान्या

प्रतिपादयन्ति । यत्र यत्रावसरः प्राप्तस्तत्र तत्र लेखनव्याख्यानसम्भाषणद्वारा राष्ट्रियशिक्षणस्यान्दोलनं ते कुर्वन्ति । शासनसंस्थाकृतद्रव्यसाहाय्यं शिक्षणसंस्थाभिरवश्यं ग्रहीतव्यं, यतस्तद्द्रव्यमस्माकमेव । परं शिक्षणसंचालनस्वातन्त्र्यं न हातव्यम् । लोककल्याणाय शिक्षणम् । तत्साध्यं यदि वयं न साध्नुयाम तर्हि शिक्षणसंस्थानां किं प्रयोजनम् ?

## १५ वीरनवाली

आङ्ग्लसैनिकैरत्याचारे कृते न्यायाधीशैः गौरकायप्रमाणपुरुषगणनिर्णयेन अपराधिनो निर्दोषत्वेन मोक्तव्या इत्यस्य बहूनि निदर्शनानि सन्ति । वृत्तपत्रैरयं न्यायालयनिर्णयः कठोरशब्दैर्न्यषेधि । परं न कश्चिच्छासनसंस्थाधिकारी तदवधारयति । 'भारतीयानां प्राणानामिदं मूल्यम्' इति यदि वृत्तपत्रकारैर्लिख्यते तर्हि सम्पादका एव दण्डार्हा भवन्ति । परम् अयं श्वेतवर्णीयानां पक्षपातः तिरस्कार्य एव । न्यायाधीशैरेवानया रीत्या न्यायदेवताघातः क्रियते इत्यप्ययुक्तम् । केनाप्यधिकारिणा अस्य प्रतिवादः कृतः । अतो मराठावृत्तपत्रसम्पादकेन नामनिर्देशं कृत्वा एकस्मिन्नेव वत्सरे आसन्नत्रिंशानामेतादृशानाम् अपचाराभियोगानामेकां मालां विरच्य तस्मै प्रतिवादकाराय समर्पिता । तदपि तस्य न लज्जामावहति ।

१९०७ वत्सरे एकं हृदयविदारकं निदर्शनं जातम् । तस्य स्मृतिरपि मानसं व्यथयति । 'वीरनवाली'नामिका काचिद्युवतिः एकाकिनी भ्रातरं द्रष्टुं गच्छन्ती मध्यरात्रे आत्मनोऽग्निरथविश्रान्तिस्थानं प्राप्ता । मध्यरात्रे गृहं कथं गन्तव्यमिति विचारेण तत्रैव बाष्परथविश्रान्तिस्थाने स्त्र्यगारे सा न्यवसत् । तत्र विश्रान्तिस्थानाधिकारिणो दृष्टिपथं सा दुर्दैववशाद्गता । तामेकाकिनीं दृष्ट्वा गौरकायोऽयं नरपशुस्तामात्मनो निवासस्थानं नीत्वा तस्यामत्याचारं कृतवान् । तस्य पश्चात्तत्सेवकः फाजलउद्दिननामकस्तथैव कृतवान् । इमां वार्तां श्रुत्वा रक्षापुरुषैस्तौ द्वौ नराधमौ न्यायालयं नीतौ । तत्र महदाश्चर्यमभूत् । अभियोगपरीक्षणकाले प्रथममेवैताभ्यां कथितम् 'असन्मार्गगामिनीयं तरुणी वर्तते । अतो वयं न दोषार्हाः' इति । परं चिकित्सकदत्तप्रमाणैस्तत्र सिद्धमभूत् । वीरनवालीजनकेन, तस्याः श्वशुरेण च सा ऋजुस्वभावा सती च आसीदिति प्रमाणैर्दर्शितम् । एवं प्रमाणैः

सिद्धेऽपि अपराधे प्रमाणपुरुषगणस्थैर्नवभिर्गौरकायसदस्यै अपराधिनो पुरुषयोर्वचनेषु विश्वस्य तावुभावपि न दोषार्हाविस्यात्मनो निर्णयो दत्त । न्यायाधीशेन तन्निर्णय स्वीकृत्य तावुभौ अपराधिनौ दोषान्मुक्तौ। केसरिपत्र लिखति " अमेरिकाखण्डे यदीद् भवेत्तर्हि शासनसस्थामविगणय्य जन एव अपराधिन जीवन्त दहेत्। एकस्या गौरकायायामत्याचारे जाते भारतवासिनो वल्लराणा विंशति सश्रमकारावास प्राप्नुवन्ति । वीरनवाल्याश्च जन्मनो नाश कुर्वाणा अपराधिनो निर्दोष मुक्ता भवन्ति । अहो आङ्गलदेशीयानामिय न्यायप्रियता ।" इति ।

अन्यस्मिन् सप्ताहे चारित्र्यविघातेन निर्विण्णचित्ता वीरनवाली आत्मघातमकरोत्। केसरी गर्जति "आत्मन स्त्रीणा चारित्र्य रक्षितुम समर्थान् भारतीयान् ज्ञात्वा निजदु ख परमेश्वराय निवेदयितु वीरनवाली दिव गता । जानन्तु गौरकाया इदम् । सहस्र लेखा वा शत व्याख्यानानि वा यत् कार्य सम्पादयितु न शक्नुवन्ति तत्कार्यमेतादृशा अभियोगा कुर्वन्ति । गलितोत्साहान् हतवीर्यान् पुरुषान् साहसप्रियान् कर्तुं वीरननाल्या आत्मघाते कियत् सामर्थ्य वर्तते तदपि भारतशासनसस्था विजानातु । अनेन व्यतिकरेण व्यथितानि, प्रक्षुब्धानि जनचित्तानि न कदापि शाम्यन्ति " इति ।

इम वृत्तान्त वाचयित्वा लोकमान्या अस्वस्थमनसा निद्रासुख नान्वभवन् इति एका स्मृतिशलाका 'गङ्गाधरराव देशपाडे'महाशया कथयन्ति स्म ।

शासनसस्थाया न्यायविरुद्धाचरणेन जनाना मनासि प्रक्षुब्धानि । १९०७ सवत्सरे 'लाला लजपतराय महाशया विनापराध, विनाभियोग द्वीपान्तरकारावासेन दण्डिता । कलकत्ता-मद्रासप्रभृतिषु नगरेषु तथा महाराष्ट्रेषु महदुत्थान समुद्भूतम्। अखिलभरतखण्डे शासनसस्थानिषेधार्थ सभा निमन्त्रिता । केषुचिन्नगरेषु सभानिमन्त्रण शासनसस्थाधिकारिभि प्रतिषिद्धम् । सस्थानसामन्तैस्तु समुत्थानस्य सर्वे प्रकारा प्रतिषिद्धा । सभानिमन्त्रण, व्याख्यानानि, 'वन्दे मातर'मिति गीतगान, छत्रपतिमहोत्सवा, सर्वमपि प्रतिषिद्धम्। एभि कृत्यैरपि असन्तुष्टे सस्थाननरेशै

केसरिसदृशानि वृत्तपत्राणि आत्मनः संस्थानेभ्यो बहिष्कृतानि । उद्देशस्तु स्पष्टमेव । लोकवृत्तान्तमपि जना न जानीयुरिति ।

गणेशोत्सवेषु यथावसरं बहुषु स्थानेषु लोकमान्यैर्व्याख्यातम् । बडोदा-नरेशस्य 'गायकवाड-वाडा' इति नाम्नः प्रासादे, 'रेमार्केट'नामकस्य-साम्प्रतं 'फुले मार्केट'इत्यपरनामधेयस्य- विस्तृते प्राङ्गणे, गणपतिविसर्जन-वेलायां 'सद्यःस्थिति'विषयमधिकृत्य लोकमान्यैर्बहु व्याख्यातम् । विसर्जन-काले तैरुक्तम्, 'नष्टे स्वराज्ये किमपि महत् दुःखमापतितमिति वयं न जानीमः । गणपतिपूजनस्यान्ते मन्त्रपुष्पसमर्पणविधिरस्ति । तस्मिन् स्वाराज्यं वैराज्यं पारमेष्ठ्यमित्यादयः शब्दा वर्तन्ते । वङ्गदेशस्यान्दोलनेन न समुत्पन्ना ह्येते वैदिकाः शब्दाः । स्वराज्यप्राप्तये गणेशप्रार्थना कर्तव्या इत्यस्माकं प्राचीना पद्धति'रिति ।

## १६ प्रादेशिकपरिषद्

द्वादशहायनानन्तरं सुरतनगरे मुम्बईप्रदेशपरिषदोऽधिवेशनं जातम् । तत्र नेमस्तपक्षीयाणां मेथाप्रभृतीनां प्रभुत्वं दृष्टम् । महाराष्ट्रेषु राष्ट्रिय-पक्षस्य बहुमतम् । विवादस्थानानि स्वदेशी-बहिष्कारादिविषयाः । राष्ट्रिय-शिक्षणविषये महान् संघर्षः ।

प्रयागक्षेत्रे प्रादेशिकपरिषदोऽधिवेशनं जातम् । तत्रापि नेमस्त-राष्ट्रिय-पक्षयोः सङ्घर्षः । कलकत्तानगरे जातस्य राष्ट्रियसभाधिवेशनस्य प्रस्तावाः केषांचन नेमस्तपक्षीयाणामसम्मताः ।

## १७ 'मोर्ले-मिंटो'-सुधारणाः

'लॉर्ड मिंटो'नामकः प्रमुखराजप्रतिनिधिरासीत् । 'सेक्रेटरी ऑफ् स्टेट् फॉर् इंडिया' इति पदारूढस्तत्त्वज्ञो 'सर् जॉन् मोर्ले'महाशयः उदारमतवादिनां पुरस्कर्ता । तस्मात् राज्यशासनविषयकान् काँश्चिदधिकारान् भारतीया लप्स्यन्ते इति नेमस्तपक्षीयाणां महत्याशा । परम् अन्ते सा विफलीभूता । केवलं द्वौ भारतीयपुरुषौ 'इंडिया ऑफिस'नामके आङ्ग्ल-देशस्थकार्यालये मोर्लेमहाशयेन नियुक्तौ ।

## १८ गोखले-टिळकवादः

कलकत्तानगरे राष्ट्रियसभाधिवेशने बहिष्कारयोगः प्रस्तावेन सम्मतो जातः। तस्यार्थविषये प्रभूतो मतभेदः। यद्यत् परकीयं तत्तत्त्यक्तव्यमिति लोकमान्यानां मतिः। यावच्छक्यं शासनसंस्थाकृतनियमानामविरोधेन शासनसंस्था सर्वत्र निरोद्धव्या इति। गोखलेमहाशयानां मतेन केवलं वस्त्रव्यवहारे एव बहिष्कारयोगः आचरणीयः। औद्योगिकविषये बहिष्कारयोगो युक्तः। परं राजकारणे अयुक्तः। 'बायकॉट्'इत्याङ्ग्लशब्दो गोखलेमहाशयान् प्रति कण्टकायते।

## १९ राष्ट्रियसभास्थलम्

राष्ट्रियसभाऽधिवेशनं सुरतनगरे सम्पादयितव्यमित्यस्य प्रधानकारणम् अयं बहिष्कारयोगः। प्रथमं 'लाहोर'नामकनगरम् अधिवेशनस्य स्थानं निर्धारितमासीत्। परं तत्राध्यक्षस्थानं लोकमान्या एव भूषयिष्यन्तीति सम्भयं दृष्ट्वा नेमस्तपक्षीयैस्तन्नगरं त्यक्त्वा नागपुरनगरं निश्चितम्। तत्रापि राष्ट्रियपक्षस्य बहुमतम्। लोकमान्या एवाध्यक्षस्थाने नियोक्तव्या इति तत्रत्यानां राष्ट्रियपक्षीयाणामाग्रहः। अवर्धत एवायं विवादः। परं मेथा-गोखलेप्रभृतिभिः पूर्वमेव तथा नियोजितं यथा सुरतनगरस्थनेमस्तपक्षीयैः राष्ट्रियसभाधिवेशनाय निमन्त्रणं दातव्यमिति। एवं मुम्बापुर्याम् 'फेरोजशहा मेथा'महोदयानां सदने राष्ट्रियसभासमित्याः अधिवेशने सुरतनगरनेमस्तपक्षीयैर्निमन्त्रणं दत्तम्। मेथा-गोखलेप्रभृतिभिस्तत्स्वीकृतम्। इमं विषयमधिकृत्य लोकमान्या लिखन्ति 'साम्प्रतमीदृशी स्थितिः। यत्र कुत्रापि मेथामहाशया राष्ट्रियसभां नयन्तु। तत्र राष्ट्रियपक्षसदस्यैरुपस्थातव्यम्। परम् अयं विवादो न समाप्तः' इति।

## २० अध्यक्षपदम्

राष्ट्रियसभाधिवेशनं सुरतनगरे भवितव्यमिति यथा मेथा-गोखलेप्रभृतिभिर्निश्चितम्, तथा अध्यक्षस्थाने 'रासबिहारी घोष'महाशया नियोक्तव्या इत्यपि निश्चितप्रायम्। अन्यस्मिन्नेवाहनि लाला लजपतरायमहाशया बन्धनान्मुक्ता इति वार्ता सर्वत्र प्रसृता। तेषामभिनन्दनार्थं स्थाने

स्थाने प्रस्तावाः सम्मताः । तथा राष्ट्रियसभाध्यक्षस्थाने तत्रभवन्त एव नियोक्तव्या इत्यपि लोकैः सूचितम् । स्वागतसमित्याः कार्यालये पत्राणि विद्युत्सन्देशाश्च सर्वतः प्राप्ताः । सुरतनगरेऽपि स्वल्पो राष्ट्रियपक्ष आसीत् । तं समाधातुं गोखलेमहाशया मेथामहाशयैः प्रहिताः । राष्ट्रियपक्षसदस्येभ्यस्तैः कथितम् ' लजपतरायमहाशयानां निर्वासनविषयमधिकृत्य अधिवेशने प्रस्तावः कर्तव्यः । तस्मादध्यक्षस्थाने तत्रभवतां नियुक्तिरसमञ्जसा ' इति । परं राष्ट्रियपक्षेण प्रत्युक्तम्, ' लजपतरायमहोदयानामध्यक्षस्थाने नियुक्तिः प्रस्तावानां शतमतिशेते । अतस्तेभ्य एवाध्यक्षपदं दातव्य'मिति । सभाधिवेशने अध्यक्षस्थानार्थं लजपतरायमहाशयानां नाम सूचयितुं प्रतिरोधे जाते राष्ट्रियपक्षसदस्यैः सभात्यागः कृतः । अधिकारिपदस्थानां मदस्तु अयमेव । अनन्तरं ' राशविहारी घोष 'महाशयानां नाम यथाविधि सूचितं सम्मतं चाभूत् ।

अनेन प्रस्तावेन प्रक्षुब्धं जनमतम् । एकस्मिन् पक्षे राष्ट्रियसभाधिकारिवर्ग आसीत् । अन्यस्मिन् पक्षे भारतीयजनमतम् । अनयोर्विवादे एक एव उपाय आसीत् यत् ' राशविहारी घोष'महाशयैरध्यक्षपदं न स्वीकार्यमिति । लोकमान्यैर्वङ्गदेशे ' बाबु मोतीलाल घोष'महाशयेभ्यः पत्रे लिखितम् 'राजकारणतत्त्वार्थं पादयोः पतित्वाऽपि प्रार्थयितुं सन्नद्धोऽस्म्यहम् । केनाप्युपायेन लजपतरायमहोदयेभ्योऽध्यक्षस्थानं दातुं राशविहारी घोषमहाशयैस्तन्न स्वीकार्य'मिति । केसरिपत्रे लोकमान्यैरेकमग्रलेखं मुद्रयित्वा भारतस्याभ्युदयार्थं लजपतरायमहोदयकृतस्वार्थत्यागस्तथा उपभुक्ता आत्मक्लेशाश्च शतगुणेन वरिष्ठा इति विस्तरेण वर्णितम् । शासनसंस्थातोऽधिकारग्रहणार्थं राष्ट्रियसभा प्रवृत्ता । अतः शासनसंस्थया सह तस्याः कलहो निसर्गसिद्धः । अधिकारिजनेभ्यः किं रोचते, किं न रोचते इति राष्ट्रियसभया किमर्थं द्रष्टव्यम् । उक्तं च--

नरपतिहितकर्ता द्वेष्यतां याति लोके ।
जनपदहितकर्ता त्यज्यते पार्थिवेन ॥ इति ।

लजपतरायमहाशयानां सत्कारोऽध्यक्षपददानेन कर्तव्यः । तदेव समीचीनं भवेत् । अन्यथा तूष्णीं स्थातव्यम् ।

स्वागतसमित्या यद्यपि रासविहारी घोषमहाशयानां नाम निश्चितं तथापि राष्ट्रियसभायाः अधिवेशने प्रथमं यदा अध्यक्षपदार्थं नाम सूच्यते तदा अन्यस्यापि नाम सूचयितुं प्रतिनिधीनामधिकारो वर्तत एव। प्रस्ताव-शब्दरचनां मेथामहाशया वा गोखलेमहाशया वा कुर्वन्तु नाम। राष्ट्रियसभां प्रगतिपथमानेतुं राष्ट्रियपक्षसदस्याः संख्याबाहुल्येनोपतिष्ठन्तु। तथैव नेमस्तपक्षीयैर्वा मेथामहाशयैर्वा यदि किंचिदपकृतं तर्हि तत् शान्तचित्तेन सोढव्यम्। परं कोऽप्यपचारो न कर्तव्यः इति।

## २१ 'सुरत'नगरे राष्ट्रियसभाऽधिवेशनम्

## राष्ट्रियसभाभङ्गः

राष्ट्रियसभाया इतिहासे १९०७ संवत्सरे 'सुरत'नाम्नि नगरे जातस्य राष्ट्रियसभाऽधिवेशनस्य वृत्तान्तश्चिरस्मरणीयः। न भूतो न भविष्यतीत्येतादृशोऽयं प्रसङ्गः। यैः स प्रत्यक्षीकृतः –भाग्यवन्तः ते (!)– ते तं कदाऽपि न विस्मरन्ति, कथाप्रसङ्गे च तं रसपूर्णवाण्या वर्णयन्ति।

भारतस्य सर्वेषु विभागेषु जनानां मनसि नवचैतन्यं समुद्भूतम्। वङ्गदेशविभजनं तस्य मूलकारणम्। अतीते संवत्सरे राष्ट्रियसभाध्यक्षपदे विराजमानैः 'दादाभाई नौरोजी'महोदयैर्भारतस्याभ्युदयार्थं चत्वारि सूत्राण्युद्घोषितानि 'स्वदेशी-बहिष्कार-राष्ट्रियशिक्षण-स्वराज्य'नामकानि। तेष्वेकं स्वराज्यं साध्यरूपम्, अन्यानि तस्य साधनानि। एतानि तत्त्वानि प्रस्तावेष्वपि ग्रथितानि। परम् एते प्रस्तावाः मेथाप्रभृतीनां नेमस्तानां रुचिं नावहन्। अतस्तैः सर्वत्र यथावसरमात्मनो विरोधः प्रदर्शितः। ज्ञातमेव तत्सर्वैः सुरतप्रादेशिकपरिषदि। मेथाप्रभृतीनां विचारस्तु एते प्रस्तावा न पुरस्कार्याः राष्ट्रियसभायाः अस्मिन्नधिवेशने इति। महद्विवादस्थानमेतत्। राष्ट्रियपक्षस्य मतेन एकदा बहुमतेन सम्मता जाताः प्रस्तावा अनुसरणीया एव। अद्यावधि प्रार्थनापत्रैर्निवेदनपत्रैर्न किमपि लब्धम्। ख्यातनामानो ज्ञानवृद्धा नौरोजीमहाशया एतान् पुरस्कृतवन्तः। सर्वेषु भारतविभागेषु राष्ट्रकार्यप्रवणानां लोकधुरीणानां तथाऽनुभववृद्धानां जनानामेतदेव मतं यदेते प्रस्तावाः पुरस्कार्या एवेति। अपुरस्कारे विशेषाग्रहस्तु मेथा-गोखले-प्रभृतीनामेव। राष्ट्रियसभायाः सर्वाणि सूत्राणि मेथाप्रभृतीनां हस्ते आसन्।

अतस्तेषां प्रभुत्वं सभायाम्। लोकमान्यप्रभृतीनां राष्ट्रधुरीणानां मते एतद्युक्तम्। उभयपक्षीयैः राष्ट्रियसभाऽऽक्रमणस्य सर्वे उपाया अवलम्बिताः। प्रधानप्रश्नस्तु राष्ट्रियपक्षस्य बहुमतं कथं भवेत्? तस्मिन् विषये राष्ट्रियपक्षीयैर्निश्चितं राष्ट्रियपक्षस्य सर्वैः सदस्यैः सुरतनगरेऽधिवेशनायोपस्थातव्यमिति।

द्वितीयः प्रश्नः अध्यक्षपदस्य। कस्मै इदं दातव्यम्? राष्ट्रियपक्षसदस्यानामाग्रहो लाला लजपतरायमहाशयेभ्यो दातव्यः स बहुमानः। मेथाप्रभृतिभिर्निश्चिताः राशबिहारी घोषमहाशयाः। तस्मादुभयपक्षीयाः सेनापतयः स्वसेनासमूहैः सह सुरतनगरे अधिवेशनात्प्रागेवोपस्थिता अभूवन्। अध्यक्षपदविषये महान् सङ्घर्षः समुद्भूतः। लजपतरायमहाशयैरध्यक्षपदं न स्वीकर्तव्यमित्यस्मिन् विषये मेथाप्रभृतिभिः कृतः समुद्योगः सफलो जातः। एवं जाते राष्ट्रियसभाधिवेशनात् प्राक् लजपतरायमहाशया यदा कार्यार्थं मुम्बापुरीं समागतास्तदा तत्रस्थनेमस्तधुरीणैस्तेषां सत्कारोऽपि न कृतः। सुरतनगरं समागतेषु लोकमान्येषु एकां सभां निमन्त्र्य 'बाबु अरविंद घोष'महाशयानामध्यक्षत्वे राष्ट्रियपक्षस्य स्थापना कृता। राष्ट्रियसभाधिवेशने मतदानसमये राष्ट्रियपक्षसदस्यैः कथं वर्तितव्यम्, अध्यक्षमहाशयानां निर्वाचनकाले किं कर्तव्यमित्यस्यापि विमर्शो जातः। कलकत्तानगरे राष्ट्रियसभायाः अधिवेशने सम्मताः प्रस्तावा यथापूर्वं सम्मन्तव्याः एवमेव राष्ट्रियपक्षस्य विज्ञप्तिः। यद्येषा नेमस्तपक्षस्य सम्मता, तर्हि तेषामध्यक्षा घोषमहाशया राष्ट्रियपक्षस्य सम्मता भवेयुरिति सामोपायो राष्ट्रियपक्षस्य मान्यो जातः।

लजपतरायमहाशया यदा सुरतनगरं समायातास्तदा तेषामभूतपूर्वं स्वागतं नागरिकैः कृतम्। राष्ट्रियसभाध्यक्षाणां स्वागतादधिकतरं स्वागतं फेरोजशहामहाशयानाम्। ततोऽप्यधिकतरं लोकमान्यानां लजपतरायमहाशयानां च।

## २२ अधिवेशनभङ्गः

निश्चिते दिवसे द्विवादनवेलायामधिवेशनस्य प्रारम्भः स्वागताध्यक्षाणां 'मालवीय'महाशयानां भाषणेन जातः। भाषणं यद्यपि दीर्घमासीत्तथाऽपि श्रोतृगणेन सर्वं शान्तचित्तेन श्रुतम्। अनन्तरं सभापतीनां नाम

सूचयितुं यदा 'अम्बालाल देसाई'महाशया उत्थितास्तदा सदस्येषु कोलाहलः समुत्पन्नः । कथमपि समापिते तैः स्वभाषणे 'सुरेन्द्रनाथ बानर्जी'महाशया वक्तुमुदतिष्ठन् । तदा श्रोतृवृन्देन महान् कलकलः कृतः । तेषां भाषणं श्रोतुं न कोऽपि समुत्सुकः । अस्याप्येकं कारणमासीदिति श्रूयते । 'मिदनापुर'-प्रकरणे बानर्जीमहाशयानामाचारोऽविचारपूर्वको जातः इति श्रूयते । अतस्तेऽप्रिया जाताः । वङ्गदेशीयास्तन्नासहन्त । बानर्जीमहाशया मञ्चोपरि स्थित्वा धीरगम्भीरस्वरेण वक्तुं प्रायतन्त । स्वागताध्यक्षाः सततं घंटानाद-मकुर्वन् । परं न कोऽपि सदस्यः भाषणं श्रुतवान् । न वा तूष्णीं भूत्वा स्थितवान् । प्रतिक्षणमवर्धत सागरकल्लोल इव प्रतिनिधिकोलाहलः । स न शाम्यतीति ज्ञात्वा स्वागताध्यक्षै'र्मोल्वीय'महाशयैः कैश्चित्सभ्यैः सह मन्त्रं कृत्वा तस्मिन् दिवसे स्थगितमधिवेशनम् ।

केचन सदस्या रोषेण सभास्थानं नात्यजन् । विरुद्धपक्षीयाः सभा-कार्यं संचालयिष्यन्तीति मत्वा केचिदन्ये बहिर्नागच्छन् । स्थले स्थले विवादाः समजायन्त । सामोपायाः पुनः समारब्धाः । 'चुनीलाल सरय्या-लाला लजपतराय'प्रभृतिभिर्वरिष्ठैः प्रतिष्ठितैर्मध्यस्थभूमिकां स्वीकृत्य सामो-पाये साहाय्यं कृतम् । परं सर्वं तन्निष्फलमभूत् । लोकमान्याः स्वयं सामोपचारार्थं स्वागताध्यक्षाणां दर्शनार्थं गताः । परं संध्याकर्मणि व्यापृता-स्ते अवसराभावे दर्शनं नायच्छन् । स्वागतसमित्या निश्चितानां प्रस्तावा-नामेकं मुद्रितपत्रकं प्रमादेन लोकमान्यानां हस्ते पतितम् । तस्मिन्नपि सामोपायानां न कोऽपि मार्गो दृष्टः । अतोऽध्यक्षमहोदयानां सूचनासमये विरोधं दर्शयितुं लोकमान्यैर्निश्चितम् । स्वागताध्यक्षेभ्यो माल्वीयमहाशयेभ्यः पत्रं लिखित्वा अध्यक्षपदस्य सूचनायाः प्रत्यक्षं विरोधमकृत्वा अध्यक्षाणां निर्वाचनं स्थगयित्वा सामोपचारार्थमेका समितिर्लोकमान्यैः सूचिता । उत्तर-प्रेषणाय पुरुषोऽप्येकः प्रहितः । तथाप्युत्तरं न लब्धम् ।

## २३ लोकमान्यविरुद्धप्रचारः

एवैव रात्रिर्वरिता । सर्वोऽपि रजनी सूक्ष्मासूक्ष्मोपायैर्लोकमान्य-विरुद्धं जनमतं क्षोभयितुं सुरतनगराग्रणीभिर्यापिता । एकस्मिन् पत्रके लेखकेन स्वनामोल्लेखमकृत्वा इदं लिखितमासीत् "शृणुत रे सुरतपौराः,

उत्तिष्ठत, जागृत। युष्माकं मुखानि लोकमान्यैः कलङ्कितानि। तानि प्रथमं क्षालयत। स्ववृत्तपत्रे लोकमान्यैर्युष्मभ्यं दत्तानि निन्दाव्यञ्जक-विशेषणानि 'धी गुजराथी' इति नामकेन वृत्तपत्रेण प्रसिद्धिं नीतानि। उत्तरं दातुं लोकमान्या असमर्था अभूवन्। गुर्जरबान्धवा मया न निन्दिता इत्यपि तैरुक्तम्। तथैव गुर्जरबन्धूनां साहाय्यं याचितम्। विप्रलम्भन-मेतद्युष्माकम्। व्याख्याने तैरुक्तं नाहमत्रागतो राष्ट्रियसभाविभजनार्थ-मिति। परं पूर्वस्मिन्नहनि प्रत्यक्षीकृतं युष्माभिर्यल्लोकमान्यानां राष्ट्रियपक्षेण कृतम्। अद्य पुनः सभाधिवेशनं वर्तते। अतो युष्माभिः कथं वर्तितव्यम्? सभास्थाने टिळकपक्षीया यथा संक्षोभं न जनयिष्यन्ति तथा यूयमा-चरिष्यथ। अथवा लोकमान्यैः स्वसम्पादितवृत्तपत्रे यल्लिखितं तत्सत्यमेवेति दर्शयिष्यथ। पुरा द्विवारं शिवाजीमहाशयेन सुरतनगरं विलुण्ठितम्। तदैव तेनोक्तम् 'पुनरेकदा विलुण्ठयिष्यामी'ति। स पुनरागन्तुं नाशक्नोत्। परम् अद्य टिळकमहाशयः समागतः। स युष्माकं कर्णौ, नासिकां च छित्वा गमिष्यतीति कृत्वा उत्तिष्ठत, जागृत" इति। लोकमान्येषु जातिद्वेषारोपोऽपि कृतः। सुलभोऽयमुपायः। कोऽपि जनो झटित्यस्मिन् विश्वसेत्।

अनेन हस्तपत्रकेण प्रक्षुब्धमखिलं सुरतनगरं लोकमान्यविरुद्धम्। भृगुवासरे प्रातःकालमारभ्य स्वागतसमित्याऽधिवेशनमण्डपे स्थले स्थले हिन्दुनाविकास्तथा संक्षोभकारिणो यवनाः एकीकृत्य स्थापिताः। केचन स्वयंसेवकाः सङ्गृहीताः। परं ये टिळकपक्षीया इति सन्देहस्तेभ्यः प्रवेशो न दत्तः। ये गुर्जरदेशीयाः सभास्थानमागतास्ते सर्वे हस्ते यष्टीर्गृहीत्वैवागताः। रक्षापुरुषा अपि पूर्वं निवेदिता आसन्।

मध्याह्नसमये एकवादनवेलायामेव सभास्थानं सदस्यपूर्णमासीत्। पूर्वदिनस्योर्वरितं कार्यं समारब्धम्। सुरेन्द्रनाथ बानर्जीमहाशया आत्मनो व्याख्यानं समापितवन्तः। जातं सर्वं विस्मृत्य कार्यं करणीयमिति तैः प्रार्थितम्। अनन्तरं घोषमहाशया अध्यक्षस्थानमलङ्कुर्वन्तु इति सूचना अनुमोदनेन सह सभाया पुरत आगता। तस्याः सम्मतिदर्शन-समयः सम्प्राप्त इति ज्ञात्वा प्राङ्निवेदितामुपसूचनां पुरस्कर्तुं लोकमान्या व्यासपीठमगच्छन्। प्रतिनिधीनां पुरत उपस्थाय उपसूचनां पठितुं यदा ते

प्रारभन्त तदा रासविहारी घोषमहाशयाः अध्यक्षपदप्रस्तावः सम्मतो जात इति मत्वा स्वयमुत्थाय वक्तुं प्रारभन्त। निर्वाचनेन अध्यक्षस्थाने मम नियुक्तिः इति प्रस्तावः सम्मतो जातः। साम्प्रतमहम् अध्यक्ष इत्युक्त्वा *यावदात्मनो मुद्रितं भाषणं वाचयितुं ते प्रारभन्त तावल्लोकमान्यैः कथितम्* 'अध्यक्षस्थाने अत्रभवतां नियुक्तिरिति प्रस्तावो नाद्यापि सम्मतः। तस्यैव प्रस्तावस्य उपसूचनां कर्तुमहमत्रोपस्थितोऽस्मि'। लोकमान्यैरेवमुक्ते 'युक्तम्, अयुक्तम्, समीचीनम्, असमीचीनम्' इति तारस्वरेणाक्रोशो मण्डपे सर्वत्रोत्थितः। स्वागतसमित्याः सदस्येषु टिळकमहोदयानां नामोच्चारणपूर्वकं गुर्जर-भाषायामुच्चारिता अपशब्दा लोकैः श्रुताः। केचिदवदन् 'भोः टिळकमहाशयाः, आगच्छत व्यासपीठादधः' इति। लोकमान्याः प्रत्यवदन् 'अधः आगच्छत इति ब्रुवाणाः के यूयम्? अस्मिन् विषये अहमध्यक्षमहाशयानामप्याज्ञां न पालयामि। यदि धृष्णुथ तर्हि मामुद्धृत्य अधो निधत्थ' इति। *टिळकमहा-शयानामुपरि प्रक्षेप्तुं 'वैकुण्ठलाल देसाई 'नामकेन सदस्येन एकं विष्टरं* समुद्धृतम्। अन्ये केचन लोकमान्यानभियातुमुद्यताः। एवं स्थिते महा-सङ्कटे लोकमान्याः पतिता इति ज्ञात्वा अधस्तान्निषण्णास्तेषां वयस्यास्तान् संरक्षितुं व्यासपीठं गन्तुमुद्यताः। अत्रान्तरे केनापि सदस्येन पादत्राण-*माकाशे प्रक्षिप्तम्। फेरोजशहा मेथा-सुरेन्द्रनाथ बानर्जी-लोकमान्यटिळक-* महाशयाः मिथो निकटवर्तिनः आसन्। तेषु मेथा-सुरेन्द्रौ मृदुमधुरं स्पृष्ट्वा तत् पादत्राणं मञ्चोपरि पतितम्। व्यासपीठस्य समीपं, तथा मण्डपस्य पूर्वभागे प्रथमं हस्ताहस्ति द्वन्द्वं प्रवृत्तम्। अनन्तरं विष्टर-प्रक्षेपणम्। ततो दण्डादण्डि युद्धं समारब्धम्। अल्पेनैव कालेन नेमस्त-पक्षीयाः सर्वे सदस्याः पश्चिमद्वारेण मण्डपाद्बहिर्निर्गताः। व्यासपीठे केवलं लोकमान्यास्तेषां मित्राणि चासन्। अस्मिन् काले आदावेव स्थाने स्थाने *प्रस्थापिता नाविकास्तथा संक्षोभकारिणो यवना आविरभूवन्।* रक्षापुरुषा अपि समागताः। व्यासपीठं गच्छन्तो जनास्तैर्निरुद्धाः। अन्ये मण्डपा-न्निष्कासिताः। 'कौजलगी-देशपाण्डे'नामकौ द्वौ सदस्यौ प्रहारैर्विद्धौ। किञ्चिद्रुधिरमपि भूमौ पतितम्। रक्षापुरुषैः सर्वः सभामण्डपो निर्मानुषः कृतः।

अनेन प्रकारेण राष्ट्रियसभायाः अधिवेशनं न जातम् । भग्ना राष्ट्रियसभा । आत्मनः पृथक् सभा स्थापयितव्या इति नेमस्तपक्षीयैर्मेथा-प्रभृतिभिः प्रागेव निश्चितमिति दृश्यते । उभयपक्षनेतारः सुरतनगरे कंचित्कालमासन् । 'मोतीलाल घोष-मैत्र-चतर्जी-हरकिसनलाल' प्रभृतयो नेतारो लोकमान्यान् द्रष्टुं गताः । अधिवेशनं वयं कुर्मः इति तेऽब्रुवन् । लोकमान्या अपि मित्रगणेन सह सम्मन्त्र्य तानलिखन् । वयमपि सभां कर्तुं सन्नद्धाः । परं तत्र सङ्केतद्वयं वर्तते । भवन्तु नाम अध्यक्षाः घोष-महाशयाः । परं कलकत्तानगरे सम्मता जाताश्चत्वारः प्रस्तावा अस्मिन्नप्यधिवेशने मान्या भवन्तु । तथैव अध्यक्षीयभाषणे राष्ट्रियपक्षाप-मानार्थं ये शब्दा घोषमहाशयैरुक्तास्ते भाषणाद्वर्जनीया इति ।

भग्नायां राष्ट्रियसभायामुभयपक्षीयैरात्मनो निवेदनपत्राणि प्रकाशितानि । नेमस्तपक्षीयैर्लिखितम् "टिळकपक्षोऽधिवेशनात्प्रागेव सभाभङ्गाय सन्नद्ध आसीत् । अध्यक्षाः पूर्वमेव नियुक्ता आसन् । अध्यक्षमहोदयानां प्रवेशकाले एव तेषां हस्ते एकेन स्वयंसेवकेन टिळकलिखितं पत्रं निहितम् । तस्मिन् पत्रे सूचितमासीत् कंचित्कालमधिवेशनकार्यं स्थगयितव्यमिति । तदयुक्तमिति अध्यक्षमहोदयैश्चिन्तितम् । सुरेन्द्रनाथमहाशयानां भाषणानन्तरं 'पण्डित मोतीलाल नेहरु' महाशयैर्भाषितम् । अध्यक्षाणां सूचना सभया सम्मता । अनन्तरं घोषमहाशया वक्तुं प्रारभन्त । टिळकमहाशया व्यासपीठमागत्य आत्मनः उपसूचनां वाचयितुं वक्तुं च प्रारभन्त । अध्यक्षैरनुज्ञा न दत्ता । अनुज्ञामविगणय्य वक्तुमेव तेषामाग्रहः । महान् कोलाहलः समुद्भूतः । कैश्चिदध्यक्षाणां विरोधः प्रदर्शितः । कैश्चित् टिळक-महाशयानां विरोधः प्रदर्शितः । परां कोटिं गते अस्मिन् विग्रहे समाप्ता सभा इति अध्यक्षैरुद्घोषितम्" इति ।

राष्ट्रियपक्षेण निवेदितम् "कलकत्तानगरे राष्ट्रियसभाया अधिवेशने सम्मताः प्रस्तावा यदि परागतिपथं न अनेष्यन्त तर्हि लोकमान्याः किमपि नोपासूचयिष्यन् इत्याश्वासनं दत्तपूर्वम् । लजपतरायमहाशयैरपि मध्यस्थस्य भूमिकां स्वीकृत्य प्रयतितम् । टिळक-खापर्डे-अरविन्द घोष-मोतीलाल घोषमहाशयैः सुरेन्द्रनाथानां दर्शनं गृहीत्वा स्वयं निवेदितम् । तेषां निवेदनं

निशम्य सुरेन्द्रनाथमहाशयैर्मालवीयमहाशया निमन्त्रिताः । परं तैः तस्यापि दर्शनं न स्वीकृतम् । राष्ट्रियपक्षस्य सर्वे प्रयत्नाः नेमस्तपक्षीयैर्विफलीकृता इति ज्ञात्वा टिळकमहाशयैरुपसूचनां कर्तुं पूर्वसूचना लेखेन दत्ता । उत्तरमपि तस्याः न प्राप्तम् । स्वागतसमित्याः एकः कार्यवाहः टिळकमहाशयान् हस्तेन ग्रहीतुमधृष्णोत् । परं गोखलेमहाशयैः स प्रतिषिद्धः" । राष्ट्रियपक्षेणैवं बहु लिखितम् ।

## २४ वार्ताहरलिखितवृत्तान्तः

' नेव्हिसन् 'नामकः कश्चिन् परदेशस्थवृत्तपत्रवार्ताहरो ' राशविहारी घोष 'प्रभृतिभिः सह कलकत्तानगरान् सुरतनगरं प्राप्तः । तस्य भोजन-निवासस्थानादिव्यवस्था पृथगासीत् । नेमस्तैः सह बहुवारं मिलित्वा स मन्त्रं कृतवान् । अतो राष्ट्रियपक्षस्य विचारधारा तस्य न तथाऽवगता, यथा नेमस्तपक्षस्य । तेन सम्पादिते ग्रन्थे सुरतनगरराष्ट्रियसभावर्णनं विद्यते । नेमस्तराष्ट्रियपक्षीये प्रकाशितानि निवेदनानि पूर्वग्रहदूषितानि सम्भविष्यन्तीति केचिन्मन्येरन् । परं परदेशस्थवार्ताहरलिखितवृत्तान्तोऽल्पांशेन पूर्वग्रहदूषितः स्यादिति कृत्वा ' नेव्हिसन् 'महाशयसम्पादितग्रन्थात् अत्र किञ्चिदुद्ध्रियते । पक्षातीतेन कृतस्य वर्णनस्य महत्त्वमधिकं विद्यते । नेव्हिसन् महाशयो लिखति " ' ख्रिस्तमस 'दिवसे वयं सर्वे सुरतनगरं प्राप्ताः । महान् जनसमूहो धूमशकटस्थाने उपस्थितोऽभूत् । अतो धूमशकटादवतरितुं विलम्बो जातः । ' वन्दे मातरम् ' इति जयघोषेण निनादितमखिलं नभः, बधिरौ च कर्णौ । सुगन्धिजलसिञ्चनमप्यासीत् । परमत्रापि मृत्युशब्दो विप्रकृष्टात् श्रुतः । ' डाक्का 'विभागप्रशासको गुलिकाप्रक्षेपणेनासन्नमृत्युर्भूत्वा रुग्णालये वर्तते इति वार्ता कर्णपथमागता । गौरकाया राज्यकर्तारो योजनसहस्रं सुदूरमाङ्ग्लदेशे स्थिताः । तेभ्यो यदि राज्याधिकाराः प्राप्तव्यास्तर्हि एतादृशैरधिकारिपुरुषवधैर्महानन्तरायो भवेदिति विचारेण विषण्णा नेमस्ताः । कलकत्तानगरे सम्मतानां प्रस्तावानां परिवर्तनं गोखलेमहाशयैः कृतम् । वयमेतन्न सहामहे इति राष्ट्रियपक्षस्य मतम् ।

संशयग्रस्तं वातावरणम् । अविश्वासः सर्वत्र । सभाधिवेशनं नागपुरनगरे भविष्यतीति प्रथमं निश्चितमासीत् । परं तत्स्थानं परित्यज्य अधि-

वेशनाय सुरतनगरं स्वीकृतमिति प्रथममविश्वासकारणम् । शासनसंस्थया सह युद्धायोपयुक्तानि साधनानि अधुना जीर्णान्यभूवन् । इदानीमन्यानि साधनान्यपेक्ष्यन्ते । वङ्गदेशविभजनेन सर्वं विपरीतं जातम् । लजपतरायमहाशयाः सन्धिं कर्तुं प्रायतन्त । उभयपक्षीयाः पञ्च पञ्च सदस्या एकत्र मिलित्वा मन्त्रयेरन्निति तैः सूचितम् । परं गोखलेमहाशयैरुक्तम् ' सार्धसहस्रं प्रतिनिधिसंख्या । तेषां कृते पञ्च सदस्यान् सूचयितुमधिकारो मह्यं केन दत्तः ' इति । लोकाग्रणीनां गमनागमनं, मन्त्रविनिमयः सर्वत्रावर्तत । ' टिळक-खापर्डे-अरविन्द घोष-मोतीलाल घोष'महाशयैः सुरेन्द्रनाथ बानर्जीमहाशया दृष्टाः । लोकमान्यैः सूचितम् ' कलकत्तानगरे जाते अधिवेशने सम्मताः प्रस्तावा यथापूर्वमत्रापि सम्मता भवेयुः । अध्यक्षस्थाने लजपतरायमहाशयानां नियुक्तिर्यदि न स्यात्तर्हि तेषां गौरवार्थं किञ्चिद्वक्तव्यमवश्यं भवति । एवं जाते अध्यक्षस्थाने यदि कोऽप्यन्यो नियुज्येत तर्हि वयं विरोधं न दर्शयेम' इति । सुरेन्द्रनाथानामेतत् सम्मतम् । परं तैः सूचितम् ' गोखले-मालवीयमहाशयानां दर्शनार्थं गन्तव्य'मिति । गोखलेमहोदयानां दर्शनार्थमेते न गताः । मालवीयमहाशयैरेते न दृष्टाः ।

अपराह्णकाले अधिवेशनार्थं षोडशशतं सदस्या उपस्थिता अभूवन् । अध्यक्षमहोदयाः सभास्थानं सम्प्राप्ताः । स्वागताध्यक्षाणां मालवीयमहाशयानां भाषणं समाप्तम् । 'अम्बालाल'महाशयानां पश्चात्सुरेन्द्रनाथ बानर्जीमहाशया वक्तुमुत्थिताः । वदनसम्पुटमुद्घाट्य पञ्चषान् शब्दान् वदन्तु तेषु घनगर्जितमिव महान् कोलाहलः समुद्भूतः । व्यासपीठस्य दक्षिणभागे निषण्णाः सदस्या आसनादुत्थायोच्चैराक्रोशन् । नागपुरविभागस्था ह्येते प्रतिनिधयः । ' मद्रास'प्रदेशस्थाः श्वेतोष्णीषधरास्तैः सह सम्मिलिताः । घोषमहाशयाः क्रोधाविष्टचेतसः तारस्वरेणाक्रोशन् । गोखलेमहाशया उद्विग्नमानसाः अभूवन् । केचिद्वदन्ति ' अपमानिता राष्ट्रियसभा ' । अन्ये ब्रुवन्ति ' अपमानितो वङ्गदेशः' । मालवीयमहाशयैर्विसर्जितं तस्य दिवसस्याधिवेशनम् । लोकमान्यनिकटवर्तिनः केळकरमहाशया राष्ट्रियपक्षीयाः । तैः सह सम्भाषणे तेऽवदन् 'कोलाहलो भविष्यतीति न केनापि तर्कितम् । अध्यक्षाणां निर्वाचनकाले विरोधो दर्शयितव्य इत्यस्माभिर्निर्धारितम् । परं

तस्य नायं प्रकार. । नाभविष्यदयं योत्साहस्तो यद्यस्माकं सामोपायानामुत्तरं वयं प्राप्स्याम ' इति । विना विलम्बं गतोऽहं टिळकमहाशयान् प्रति । ते मामवदन् "पत्रस्योत्तरार्थे विलम्बो जातः । तस्यायं दुर्विपाकः । गोखले-महाशयैरिदानीमेव प्रेषिताः प्रस्तावाः । तेष्वत्र तत्र अंशतो भेद आसीत् । परं बहिष्कारप्रस्तावे महत्परिवर्तनं दृष्टम् । नेमस्तराष्ट्रियपक्षयोः सर्वे मत-भेदा अस्मिन् प्रस्तावे समाविष्टाः । बहिष्कारशब्दस्यार्थः अन्यदेशनिर्मित-वस्तूनामपरिग्रहः इति न कृत्वा बहिष्कारयोग इति यदि क्रियेत तर्हि राष्ट्रियसभाया आधारस्तम्भो विनष्टो भवेत् । राष्ट्रियसभायां 'जहाल'पक्षस्य प्राबल्यं भवेत् । तेषां हस्ते सभायाः सर्वाणि सूत्राणि गच्छेयुः" इति ।

एतादृशेषु मतभेदेषु सत्सु सामोपायाः कथं सफलीभवेयुः ? बहि-ष्कारस्य प्रस्तावे कृतं परिवर्तनं मूलग्राहि । टिळक-गोखले-बानर्जीमहाशया एकत्र मिलित्वा यदि मन्त्रयेरन् तर्हि कोऽपि पर्यायो निष्पद्येत । परं निष्फलमेतत्सर्वम् । सङ्घर्षेण मतभेदाः परां कोटिं गताः । उभयपक्षीयाणां लज्जाकरो राष्ट्रियसभाभङ्गः इति सर्वेषां सम्मतम् । न कोऽपि निद्रासुख-मलभत तस्यां निशायाम् ।

अन्यस्मिन्नहनि सर्वे सदस्या अधिवेशनार्थं पुनरुपस्थिताः । घोषमहा-शयैरात्मनो मुद्रितं भाषणं समानीतम् । परं तस्मिन् भाषणे राष्ट्रियपक्षे टीकास्त्रं प्रक्षिप्तमासीत् । लोकमान्यानां कृते व्यासपीठे एकमासनमवर्तत । परं ते तस्य पुरतः अधोभागे एव न्यषीदन् । सत्कारपूर्वं समायातेषु अध्यक्ष-महाशयेषु लोकमान्यैः स्वयंसेवकद्वारा पत्रं प्रेषितम् । इयं सभा कंचित् कालं स्थगितव्या इति तस्मिन् पत्रे सूचितम् । विधायकसूचनां कर्तुकामा लोकमान्या इति तस्याः सूचनाया अर्थस्तैरेवोक्त । परं मालवीयमहाशयैः कथितं 'राष्ट्रियसभाया अधिवेशनमेव स्थगितव्यमिति तस्यार्थो मया ज्ञातः' इति । अर्थविषये बहुविवादो जातः । महासङ्कटपतितधूर्तमहानुभावसदृशं सुरेन्द्रनाथानां भाषणं जातम् । भाषणस्यादावन्ते च न केनापि करतलानि ताडितानि । 'मोतीलाल नेहरु 'महाशया अपि पञ्चषाणि वाक्यान्युक्त्वा तूष्णीं बभूवुः ।

वेशनाय सुरतनगरं स्वीकृतमिति प्रथममविश्वासकारणम्। शासनसंस्थया सह युद्धायोपयुक्तानि साधनानि अधुना जीर्णान्यभूवन्। इदानीमन्यानि साधनान्यपेक्ष्यन्ते। वङ्गदेशविभजनेन सर्वं विपरीतं जातम्। लजपतरायमहाशयाः सन्धि कर्तुं प्रायतन्त। उभयपक्षीयाः पञ्च पञ्च सदस्या एकत्र मिलित्वा मन्त्रयेरन्निति तैः सूचितम्। परं गोखलेमहाशयैरुक्तम् 'सार्धसहस्रं प्रतिनिधिसंख्या। तेषां कृते पञ्च सदस्यान् सूचयितुमधिकारो मह्यं केन दत्तः' इति। लोकामणीनां गमनागमनं, मन्त्रविनिमयः सर्वत्रावर्तत। 'टिळक-खापर्डे-अरविन्द घोष-मोतीलाल घोष'महाशयैः सुरेन्द्रनाथ बानर्जीमहाशया दृष्टाः। लोकमान्यैः सूचितम् 'कलकत्तानगरे जाते अधिवेशने सम्मताः प्रस्तावा यथापूर्वमत्रापि सम्मता भवेयुः। अध्यक्षस्थाने लजपतरायमहाशयानां नियुक्तिर्यदि न स्यात्तर्हि तेषां गौरवार्थं किञ्चिद्वक्तव्यमवश्यं भवति। एवं जाते अध्यक्षस्थाने यदि कोऽप्यन्यो नियुज्येत तर्हि वयं विरोधं न दर्शयेम' इति। सुरेन्द्रनाथानामेतत् सम्मतम्। परं तैः सूचितम् 'गोखले-मालवीयमहाशयानां दर्शनार्थं गन्तव्य'मिति। गोखलेमहोदयानां दर्शनार्थमेते न गताः। मालवीयमहाशयैरेते न दृष्टाः।

अपराह्णकाले अधिवेशनार्थं षोडशशतं सदस्या उपस्थिता अभूवन्। अध्यक्षमहोदयाः सभास्थानं सम्प्राप्ताः। स्वागताध्यक्षाणां मालवीयमहाशयानां भाषणं समाप्तम्। 'अम्बालाल'महाशयानां पश्चात्सुरेन्द्रनाथ बानर्जीमहाशया वक्तुमुत्थिताः। वदनसम्पुटमुद्घाट्य पञ्चषान् शब्दान् वदत्सु तेषु घनगर्जितमिव महान् कोलाहलः समुद्भूतः। व्यासपीठस्य दक्षिणभागे निषण्णाः सदस्या आसनादुत्थायोच्चैराक्रोशन्। नागपुरविभागस्था ह्येते प्रतिनिधयः। 'मद्रास'प्रदेशस्थाः श्वेतोष्णीषधरास्तैः सह सम्मिलिताः। घोषमहाशयाः क्रोधाविष्टचेतसः तारस्वरेणाक्रोशन्। गोखलेमहाशया उद्विग्नमानसाः अभूवन्। केचिद्वदन्ति 'अपमानिता राष्ट्रियसभा'। अन्ये ब्रुवन्ति 'अवमानितो वङ्गदेशः'। मालवीयमहाशयैर्विसर्जितं तस्य दिवसस्याधिवेशनम्। लोकमान्यनिकटवर्तिनः केळकरमहाशया राष्ट्रियपक्षीयाः। तैः सह सम्भाषणे तेऽवदन् 'कोलाहलो भविष्यतीति न केनापि तर्कितम्। अध्यक्षाणां निर्वाचनकाले विरोधो दर्शयितव्य इत्यस्माभिर्निर्धारितम्। परं

तस्य नायं प्रकारः। नाभविष्यदयं कोलाहलो यद्यस्माकं सामोपायानामुत्तरं वयं प्राप्स्याम ' इति। विना विलम्बं गतोऽहं टिळकमहाशयान् प्रति। ते मामवदन् "पत्रस्योत्तरार्थं विलम्बो जातः। तस्यायं दुर्विपाकः। गोखले-महाशयैरिदानीमेव प्रेषिताः प्रस्तावाः। तेष्वत्र तत्र अंशतो भेद आसीत्। परं वहिष्कारप्रस्तावे महत्परिवर्तनं दृष्टम्। नेमस्तराष्ट्रियपक्षयोः सर्वे मत-भेदा अस्मिन् प्रस्तावे समाविष्टाः। वहिष्कारशब्दस्यार्थः अन्यदेशनिर्मित-वस्तूनामपरिग्रहः इति न कृत्वा वहिष्कारयोगः इति यदि क्रियेत तर्हि राष्ट्रियसभाया आधारस्तम्भो विनष्टो भवेत्। राष्ट्रियसभायां 'जहाल'पक्षस्य प्रावल्यं भवेत्। तेषां हस्ते सभायाः सर्वाणि सूत्राणि गच्छेयुः" इति।

एतादृशेषु मतभेदेषु सत्सु सामोपायाः कथं सफलीभवेयुः? वहि-ष्कारस्य प्रस्तावे कृतं परिवर्तनं मूलमाहि। टिळक-गोखले-वानर्जीमहाशया एकत्र मिलित्वा यदि मन्त्रयेरन् तर्हि कोऽपि पर्यायो निष्पद्येत। परं निष्फलमेतत्सर्वम्। सङ्घर्षेण मतभेदाः परां कोटिं गताः। उभयपक्षीयाणां लज्जाकरो राष्ट्रियसभाभङ्गः इति सर्वेषां सम्मतम्। न कोऽपि निद्रासुख-मलभत तस्यां निशायाम्।

अन्यस्मिन्नहनि सर्वे सदस्या अधिवेशनार्थं पुनरुपस्थिताः। घोषमहा-शयैरात्मनो मुद्रितं भाषणं समानीतम्। परं तस्मिन् भाषणे राष्ट्रियपक्षे टीकास्त्रं प्रक्षिप्तमासीत्। लोकमान्यानां कृते व्यासपीठे एकमासनमवर्तत। परं ते तस्य पुरतः अधोभागे एव न्यषीदन्। सत्कारपूर्वं समायातेषु अध्यक्ष-महाशयेषु लोकमान्यैः स्वयंसेवकद्वारा पत्रं प्रेषितम्। इयं सभा कंचित् कालं स्थगितव्या इति तस्मिन् पत्रे सूचितम्। विधायकसूचनां कर्तुकामा लोकमान्या इति तस्याः सूचनाया अर्थस्तैरेवोक्तः। परं माळवीयमहाशयैः कथितं 'राष्ट्रियसभाया अधिवेशनमेव स्थगितव्यमिति तस्यार्थो मया ज्ञातः' इति। अर्थविषये वहुविवादो जातः। महासङ्कटपतितधूर्तमहानुभावसदृशं सुरेन्द्रनाथानां भाषणं जातम्। भाषणस्यादावन्ते च न केनापि करतलानि ताडितानि। 'मोतीलाल नेहरु 'महाशया अपि पञ्चषाणि वाक्यान्युक्त्वा तूष्णीं वभूवुः।

माल्वीयमहाशयैरध्यक्षपदार्थं सूचितं नाम सर्वैः स्पष्टं श्रुतम् । परं सा सूचना सम्मता जाता इति यदा तैरुक्तम्, तदा विविधप्रकारेण महान् कोलाहलः समुद्भूतः । तस्मिन् कोलाहले घोषमहाशयाः स्वस्थानं परित्यज्य अध्यक्षस्थानं समारुह्य कृतज्ञताप्रदर्शनार्थमेकं वाक्यमवदन् । तदेव तेषां भाषणस्यादिमं वाक्यं चरमवाक्यं चाभूत् । स्वभावगभीरा निर्भया लोकमान्याः स्वस्थानं परित्यज्य अध्यक्षस्थानसंमुखं समागत्य तस्य पुरतः स्थित्वा विस्पष्टाक्षरैः स्वनिषेधमाविरकुर्वन् स्वविरोधमदर्शयंश्च । परम् एतत्सर्वं ते शान्तमनसा स्थिरबुद्ध्या एवाकुर्वन् । घनगर्जितमिव तेषां शब्दं श्रुत्वा अहममन्ये 'अयं पुरुषसिंहो भवितव्यतां तृणाय कल्पते' । उक्तं च—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा' इति ।

माल्वीयमहाशयास्तदाऽवदन् 'सभाविष्टम्भं सूचयितुमत्रभवन्तः असमर्थाः । टिळकमहाशयाः प्रत्यवदन् 'के अत्रभवन्तो मामवरुन्धन्ति ? नात्रभवन्तः सभाऽध्यक्षाः' इति । एतदुपरि घोषमहाशया अब्रुवन् 'अहमपि युष्मभ्यं तदेवादिशामि' इति । टिळकमहाशयाः प्रत्यभाषन्त 'युष्माकं निर्वाचनं नाद्यापि सभायाः सम्मतम् । अहं प्रतिनिधीन् उद्दिश्य ब्रवीमि' इति । उत्तरं भाषणं न केनापि श्रुतम् । स्वौ बाहू उरसि निधाय, कराग्रौ कुक्षिस्थौ कृत्वा टिळकमहाशयास्तत्रैव व्यासपीठे अध्यक्षस्थानस्य पुरतोऽतिष्ठन् । टिळकमहाशयानुभयतो नेमस्तपक्षीया युवानः उत्थायोत्थाय अपकारार्थं हस्तविक्षेपानकुर्वन् । मुष्टीः बद्ध्वा, मुखान्युद्धृत्य ते व्याक्रोशन् । केचिदवदन् 'प्रक्षिपत एतं व्यासपीठस्याधस्तात्' । टिळकमहाशयस्य पृष्ठभागे घोषमहाशया मञ्चमारुह्य तारस्वरेण निषेधशब्दमुच्चारयन्ति स्म । परम् अस्मिन् महति सङ्घर्षे कः कं शृणुयात् ! घोषमहाशया घण्टां निनादयन्ति । शान्तस्वभावा गोखलेमहाशया नेमस्तपक्षीयाणां क्रोधं सान्त्वयन्ति स्म । उभौ बाहू विस्फार्य टिळकमहाशयान् संरक्षितुं तेषां ( लोकमान्यानां ) निकटमेव गोखलेमहाशया अतिष्ठन् । परं टिळकमहाशया न कस्यापि साहाय्यं गणयन्ति । वक्षःस्थलनिहितबाहुः तिरस्कृतस्वकृतिपरिणामोऽयं पुरुषः अत्याचारं वा असृक्पातं वा समाह्वयते 'एत, अत्रागत्य मां हत' इति । कोऽपि किमपि कुर्यात् । स्वर्गं गच्छानि वा निरयं पतानि वा ।

नाहं पदात्पदमपि विचलिष्यामि इति ।

शुभ्रवस्त्रधारी श्रोतृवृन्दो घनगर्जनामकरोत् । अत्रान्तरे आकाशे समुत्पतितमेकं पादत्राणं सुरेन्द्रनाथ बानर्जीमहाशयस्य मुखकमलं मृदुमधुरं परिचुम्ब्य व्यासपीठे न्यपतत् । तामुपानहं दृष्ट्वा इयं सूचना विद्यते इति मत्वा श्वेतोष्णीषधारिणो जनाः जलनिधितरङ्गा इव क्रमेण व्यासपीठं समारुह्य हस्तयष्टीः आकाशे व्याधुन्वन्, क्रोधारुणनेत्राश्च व्याक्रोशन् । क्षणमात्रादेव उद्ध्वस्तमभूदधिवेशनम् । महान् जनसंक्षोभः समभूत् । न ज्ञातानि मित्राणि तथा रिपवः । युद्धेऽपि शौर्यं, वीर्यमौदार्यं च दृष्टम् । अत्रान्तरे रक्षापुरुषाः समायाताः । क्षणादेव सभामण्डपो रिक्तो जातः ।

अन्येद्युः पुनश्च सामोपायाः समारब्धाः । रक्षापुरुषाणां द्विशतं सभामण्डपं प्राविशत् । तेषां संरक्षणे नवशतसंख्याकैर्नेमस्तपक्षीयैरात्मनोऽधिवेशनं समापितम् । प्रतिज्ञापत्रके स्वनाम लिखित्वा प्रवेष्टव्यमिति दण्डकेन एतैः सर्वैः प्रतिज्ञापत्रकं हस्ताङ्कनपूर्वकं दत्त्वा एकीभूय घोषमहाशयानामध्यक्षत्वे गोखलेमहाशयैः पुरस्कृताः सर्वे प्रस्तावाः स्वीकृताः । संवत्सरपर्यन्तं कार्यं कर्तुमेका समितिर्नियुक्ता । अस्मिन्नधिवेशने लजपतरायमहाशयैरुद्घोपितम् "अहं प्राचीनायामेव राष्ट्रसभायां स्थास्ये" इति । अयमेव एकः पुरुषः सर्वानतिशेते इत्येव मनसि सर्वैश्चिन्तितं भवेत् ।

राष्ट्रियपक्षेणापि आत्मनोऽधिवेशनम् अरविंद घोषमहाशयानामध्यक्षत्वे संपादितम् । आयत्यां कार्यार्थमेका समितिर्नियुक्ता" इति ।

अन्यदेशीयतटस्थस्य साक्षिणः एवंविधं लेखनं विद्यते । अतोऽधिकतरं विश्वासार्हम् इति कृत्वा विशेषेणोल्लिखितम् ।

आकल्लूजपत्तनस्थेन कवल्गीकरनाम्ना एकेन नेमस्तपक्षसदस्येनापि एवंप्रकारेण लिखितम् ।

## २५ नेमस्तपक्षनिवेदनम्

नेमस्तपक्षेणात्मनो निवेदने स्वदृष्ट्या साद्यन्तो वृत्तान्तः कथितः । 'सर्वो जनः आत्मीयं कान्तं पश्यति' इति वचनानुसारतोऽनेन पक्षेण निवेदितम् "अस्मत्पक्षे न कोऽपि दोषः । सर्वो दोषो राष्ट्रियपक्षस्य ।

सुरतनगराधिवेशनात्प्रागेव नेमस्तपक्षं निन्दितुं, दूषयितुं च प्रारभन्त केसरिपत्रे लोकमान्या. । नागपुरनगरतः सुरतनगरं राष्ट्रियसभायाः आगमनम्, अधिवेशनाध्यक्षविषयको विवादः, पूर्वाधिवेशनसम्मतानां प्रस्तावानां परिवर्तनं, तस्य कारणानि, नूतनप्रस्तावपत्रकप्रसिद्धीकरणे विलम्बः इति सर्वं वृत्तं गोखलेमहाशयैरधिकारवाण्या समर्थितम्। समासेन परम्पराविरुद्धं न किमप्याचरितं स्वागतसमित्या। लोकमान्यैरेव नूतनः परम्पराविघातो निर्मितः। अद्यावधि सर्वे प्रतिनिधयः एकत्र न्यवसन्। परमस्मिन् संवत्सरे टिळकपक्षीयैरात्मनो निवासः पृथक् कृतः। प्रत्यहं सभायां भाषित्वा प्रतिनिधिमनांसि कलुषीकृत्य पूर्वमेव सभाविरोधो लोकमान्यैर्निश्चितः। अध्यक्षस्थानार्थमन्यन्नाम सूचयितुमशक्यमिति तैर्ज्ञातपूर्वमेव" इति।

## २६ राष्ट्रियपक्षनिवेदनम्

राष्ट्रियपक्षस्य निवेदने लोकमान्यैर्लिखितम् "कः सत्पक्षः, कः असत् पक्षः इति तावत्प्रथमं ज्ञातव्यं भवति। अनन्तरं कस्य पक्षो दोषार्हो भवतीत्यवलोकनीयम्। अस्माकं मतभेदास्तु मूलग्राहिणः। कलकत्तानगरे राष्ट्रियसभाधिवेशने सर्वेषां प्रतिनिधीनां बहुमतेन प्रस्तावाः सम्मताः। तेषां परिवर्तने मेथाप्रभृतिभ्यः केनाधिकारो दत्तः? वस्तुतस्तु स्वदेशी–स्वराज्य–राष्ट्रियशिक्षण–बहिष्कारादयो विषया मेथाप्रभृतिभ्यो न प्रियाः। अतः सम्मता अपि प्रस्तावास्तैर्न पुरस्क्रियन्ते। अतः प्रथमप्रश्नस्तु अयमेव। को रोचते राष्ट्रियसभाप्रतिनिधिभ्यः? तामसप्रकृतिर्मुम्बापुरीस्थः 'औरंगजेब'-महाशय. (मेथामहाशयः)? उत कलकत्तानगरे जातस्य राष्ट्रियसभाधिवेशनस्याध्यक्षपदारूढो विख्यातनामा 'महर्षि.' (दादाभाई नौरोजीमहाशय.)? स्वागताध्यक्षैर्वा राष्ट्रियसभाध्यक्षैर्वा कृतोऽन्यायः प्रमादो वा अक्षम्य एव। सभाप्रतिनिधयस्तं कथं सहेरन्? उपसूचनाप्रेषणे सदस्यानामधिकारो वर्तते इत्यस्मिन् विषये शतशः प्रमाणानि वर्तन्ते। प्रथमतो माल्वीयमहाशयानामेवाचारो नियमबाह्यः। तेनाचारेण महति संक्षोभे जाते टिळकमहाशया कथं दोषार्हा भवन्ति? नि.पक्षपाती जनो यदि निर्णेतुमुपतिष्ठेत् तर्हि उभावपि पक्षौ अंशतः दूषणीयौ इत्येव ब्रूयात्" इति।

अनन्तरमुभयपक्षीयैरात्मनः पक्षौ स्थापितौ पुरस्कृतौ च। उभाभ्यामपि एकैकां सभां पृथक् निमन्त्र्य, एकं प्रतिज्ञालेखं कृत्वा तस्योपरि हस्ताङ्कनं निर्दिश्य ये तं सम्मन्यन्ते ते एव सदस्याः सभागृहे प्रवेशमर्हन्ति इति निश्चितम्। नेमस्तपक्षस्य प्रतिज्ञापत्रके मेथा-गोखले-प्रभृतीनां विचारधाराऽऽसीत्। राष्ट्रियपक्षस्य प्रतिज्ञापत्रके कलकत्ताधिवेशनप्रस्तावानां पुनरुच्चार आसीत्। स्वराज्यं ध्येयम्। राष्ट्रियशिक्षणादीनि तत्साधनानि। येषां तानि सम्मतानि तैरेव सभा प्रवेष्टव्या, नान्यैरित्यादीनि राष्ट्रियपक्षस्य मूलतत्त्वानि। नेमस्तपक्षेण सह सम्मन्त्र्य सन्धिं सम्पादयितुमेकां समितिं नियुज्य अवसरो दत्त आसीत्। राष्ट्रियसभायाः पुनरुज्जीवने सयत्नोऽयं पक्षः।

## २७ इतस्ततः

सुरतनगरात् पुण्यपत्तनं समागतेषु लोकमान्येषु केसरिपत्रेण लेखमालामारभ्य अध्यक्षस्याधिकाराणां शास्त्रशुद्धविवेचनं कृत्वा नूतनराष्ट्रियपक्षोपन्यासस्य मूलतत्त्वानि तथा शास्त्रशुद्धरचनां विशदीकृत्य कैरुपायैरुभयपक्षयोः सन्धिर्भवेदिति दर्शयित्वा तत् कार्यं सम्पादयितुं सर्वाणि साधनान्युपयोक्तव्यानीत्युपदिष्टम्।

'बाबु अरविन्द घोष'महाशयाः पुण्यपत्तनं समागताः। महाराष्ट्रदेशे जातस्य लोकप्रबोधस्य सम्यग्ज्ञानं प्रत्यक्षीकृत्य वङ्गदेशकृतान्दोलनवृत्तान्तः, तस्याधारतत्त्वानि तैः कथितानि। उभयप्रदेशयोर्जातस्योत्थानस्य साम्यं तैर्दृष्टम्। महाराष्ट्रदेशे अन्येष्वपि प्रसिद्धनगरेषु 'अरविन्द घोष'महाशयैर्व्याख्यातम्।

### (अ) राष्ट्रमतवृत्तपत्रम्

राष्ट्रियपक्षविचारधाराप्रचारार्थमेकं दैनिकं वृत्तपत्रमावश्यकं जातम्। अतो मण्डलमेकं निर्माय 'राष्ट्रमत'इति नाम्ना स्वल्पमूल्यं दैनिकमेकं समारब्धम्। स्वदेशः, स्वधर्मः, स्वराज्यं, स्वावलम्बनमिति स्वादिशब्दचतुष्टयमस्य वृत्तपत्रस्याधारस्तम्भाः।

### (आ) समर्थविद्यालयः

राष्ट्रियशिक्षणप्रसारार्थं कोल्हापुरनगरे 'समर्थविद्यालय'नामकं शालागृहमासीत्। तत् पुण्यपत्तननिकटवर्तिनं 'तळेगाव'नामकं ग्राममानीय

तत्र प्रतिष्टापितम् । तस्मिन् शालागृहे सर्वेषां शास्त्राणामध्यापनं कृत्वा शालागृहस्य महाविद्यालये, महाविद्यालयस्य महाराष्ट्रविद्यापीठे परिणतिर्भवेदिति सञ्चालकानां महती आकाङ्क्षा । व्यवसायशिक्षणार्थमत्र काचशालाऽपि प्रस्थापिता । द्रव्यसम्पादनार्थं स्थले स्थले प्रचारः कृतः । नूतनपक्षस्य प्रसारार्थं ग्रामे ग्रामे, नगरे नगरे सभाः निमन्त्र्य राष्ट्रियपक्षमतप्रसारः कृतः । 'धुळे'नाम्नि पत्तने प्रादेशिकपरिषदोऽधिवेशनं निश्चितम् । स्वागतसमित्यां सर्वे पक्षाः समावेशिताः । सर्वेषां पक्षाणां समन्वयः कथं कर्तव्यः इति मार्गं दर्शयितुकामेन सदस्यगणेनात्र विमर्शः कृतः ।

## (इ) नगरपालिकानिर्वाचनम्

पुण्यपत्तननगरपालिकायाः निर्वाचनकालः सम्प्राप्तः । नेमस्तपक्षराष्ट्रियपक्षयोर्बलाबलपरीक्षणस्यायं समयः । नेमस्तपक्षेणात्मनः सर्वं बलमेकीकृत्य पुरस्कृतं एकं पुरुषं 'हरि नारायण आपटे'महाशयं पराभूय, राष्ट्रियपक्षस्य चत्वारः पुरुषाः 'अण्णासाहेब पटवर्धन–बाबासाहेब पेंडसे–गणेश व्यंकटेश जोशी–शिवरामपंत परांजपे'महाशया बहुमतेन नियुक्ताः । अध्यक्षपदं राष्ट्रियपक्षाय दातुं कृतः प्रयत्नो विफलो जातः ।

## (उ) विभागसभा

'पुणें'विभागसभायाः प्रथमाधिवेशनं जातम् । 'गणेश व्यंकटेश जोशी'महाशयैरध्यक्षस्थानात् राष्ट्रियसभायाश्चत्वारि सूत्राण्युपदिष्टानि । विविधविषयप्रस्तावपुरस्कारार्थं नेमस्तपक्षीया अपि सभायामुपस्थिताः । मद्यपाननिषेधादयो बहवो विषया मतभेदरहिताः । अतः सभाधिवेशनं सर्वपक्षाणां सङ्ग्राहकं जातम् ।

विचारक्षेत्रे राष्ट्रियशिक्षणं मद्यपाननिषेधश्च प्राधान्यं भजेते । मद्यपानविषये लोकमान्यैरुक्तम् 'मद्यपाननिषेधो वैदिकधर्मस्य महत्त्वपूर्णं तत्त्वं वर्तते । तस्य पालने लाभालाभदृष्ट्या कस्यापि प्रत्यूहः परिहरणीयः । कारावासादपि मद्यपानं दुःखतरम् । यद्येकं मद्यविक्रयस्थानं मया विसर्जितं तर्हि स्वर्गलाभो भवेदिति मत्वा युवभिः प्राणदानायापि सन्नद्धैर्भाव्यम् । यदीदं मद्यपाननिषेधरूपं सामान्यकार्यं कर्तुं वयमसमर्थास्तर्हि स्वराज्याय

कथं योग्या भवेम ' इति । अस्मादेव आपणान्मद्यपाननिरोधनस्याभ्युत्थानं समुत्पन्नम् ।

राष्ट्रियसभाविभजनेन कैश्चिल्लोकमान्या दूषिताः । दृष्टं तैर्लोकमान्यानां कर्तृत्वं प्रभावश्च । नूतनराष्ट्रियपक्षस्य सामर्थ्यं, तेजः, ध्येयं, वैदुष्यम्, अनुयायिनां मदः, यथाकालं यष्टिग्रहणप्रवृत्तिः, सर्वमेतदनया विभागसभया दर्शितम् । राष्ट्रधुरीणस्य शब्दमात्रेणानुयायिनः प्राणपरित्यागेऽपि तत्परा इति दृश्यं न दृष्टपूर्वम् । एवंविधः सन्देशो 'मॅकूनिकल्'महाशयेनैकेन ख्रिस्तधर्मोपदेशकेन 'टाइम्स'पत्राय प्रहितः ।

## ( ए ) मद्यपाननिषेधः

मद्यपानप्रतिबन्धार्थमान्दोलनं प्राचीनम् । १९०५ वत्सरे इदमान्दोलनं पुनः प्रचालितमासीत् । 'शंकरराव लवाटे'महाशयैरस्यान्दोलनस्य पुरस्कारः कृतः । पुणेविभागसभायां लोकमान्यैः कठोरशब्दैर्मद्यपानविरुद्धं टीकास्त्रं प्रक्षिप्तम् । तेन 'ठाणे-बेळगांवा'दिविभागेषु लोकैर्मद्यप्राशनं परित्यक्तम् । नगरविभागे समुत्थानं जातम् । पुनरेकदा पुण्यपत्तने आन्दोलनकालः समायातः । स्थले स्थले वर्तमानानि पानगृहाणि रिक्तानि बभूवुः । शासनसंस्थायाः धनोत्पादनसाधनं नष्टप्रायम् । अतः किं कर्तव्यमिति अधिकारिणोऽपि विचारमूढा अभूवन् । मद्यपानप्रतिबन्धार्थमापणानां पुरतो निरोधनं लोकैः स्वयंसेवकमार्गेण कृतम् । मद्यपानार्थं समागतान् जनान् सम्प्रार्थ्य तान् मद्यपानात् परावर्तयितुं स्वयंसेवकाः प्रायतन्त । ग्रामे ग्रामे लवाटेमहाशयैर्व्याख्यानप्रवचनद्वारा परिणामावहमान्दोलनं कृतम् । स्वयंसेवकानामेकं मण्डलं स्थापयित्वा निरोधनं प्रचालितम् । मद्यपाननिषेधसभासु नेमस्तराष्ट्रियपक्षभेदं विस्मृत्य सर्वे पक्षा एकत्र समागताः । स्वयंसेवकानां निरोधनं शान्तिप्रधानमार्गेण जातम् । केनापि कारणेन प्रक्षोभो न कर्तव्य इति नियमः ।

यथा यथा मद्यपाननिरोधनं सफलं जातं तथा तथा अधिकारिणां मनःसु क्रोधेनाधिष्ठानं कृतम् । क्षुद्रेण कारणेनाभियोगं कृत्वा शासनसंस्थया स्वयंसेवका दण्डिताः । दण्डोद्देशस्तु समुत्थानमिदं विफलं भवेत्, जना यथाकामं मद्यपानं कुर्युः, शासनसंस्थाधिकारिणो धनं सम्पादयेरन्निति ।

मद्याकाधिकारिभिः निरोधनविषयकाणि भीतिप्रदानि निवेदनानि राजप्रतिनिधये प्रेपितानि । अधिकारिभिर्निवेदितम् ' पुण्यपत्तने आङ्ग्लभूपतीनां राज्यं समाप्तप्रायम् । टिळकमहाशयस्य राज्यं समारब्धमिति दृश्यते । अद्य पानगृहाणां पिधानं जातम् । श्वः शासनसंस्थाकार्यालयानां पिधानं सम्भवेत् ' इति । ' कारमायकेल 'नामकेन विभागप्रशासकेन लोकमान्याः दर्शनार्थं निमन्त्रिताः । क्रोधसन्तप्तमनसा सम्भाषणं जातम् । वरिष्ठेभ्योऽस्य सम्भाषणस्य वृत्तान्तनिवेदनेन लोकमान्यानामपराधशतं पूर्णमभूत् । ' सर् जॉर्ज क्लार्क 'नामकेन राजप्रतिनिधिना मनस्येवं निर्धारितम् '. टिळकमहाशयः कारागृहदर्शनेन विना न शाम्येत् ' इति । स्वयंसेवकानां दण्डनं सर्वत्र प्रसृतम् ।

मद्यपाननिरोधनप्रतिबन्धार्थं शासनसंस्थया केचन नियमाः कृताः । तेपामुल्लङ्घनेन नरो दण्डार्हो भवति इत्यपि विहितम् । उद्देशस्तु स्पष्ट एव यदेतदान्दोलनं परित्यक्तव्यमिति ।

एतेपां शासनसंस्थाप्रचलितनियमानां निपेधार्थमेका सभा पुण्यपत्तने निमन्त्रिता । ' भाण्डारकर'महाशयैरध्यक्षस्थानं मण्डितम् । गोखलेमहाशयैः पत्रद्वारा आन्दोलनसम्बन्धिनी आत्मनः सहानुभूतिः प्रदर्शिता । तैर्लिखितम् ' देशान्तरेऽपि एतादृशं समुत्थानं शास्त्रविहितम् । अतः समुत्थानस्य कृतेऽस्माभिः सन्नद्धैर्भाव्यम् ' इति । भाण्डारकरमहाशयैरुक्तम् ' सामाजिकदोपाणामुन्मूलनं शिक्षितानां जनानां कर्तव्यमेव । वेदकाले यद्यपि सुरापानं ज्ञातमासीत् तथापि वेदेपु तन्निपिद्धं गण्यते इति प्राचीनाचार्याणां मतम् । प्रजाभिर्मद्यपानं न कर्तव्यमिति शासनसंस्थयाऽपि अभिहितम् । किमर्थं तर्हि जनास्तथा नोपदिशेयुः ? शासनसंस्थयोपदिष्टे न दोपः । परं जनैरेवमुपदिष्टे कथमयमपराधो भवतीति न ज्ञायते । मद्यपाननिपेधस्य नायमुद्देशः यच्छासनसंस्थायाः कार्ये कोऽप्यन्तरायः कर्तव्य इति । विपरीतोऽयं भ्रमः शासनसंस्थायाः । सर्वथा त्याज्य एव सः । तथैव जनोपदेशकार्यमपि अस्माभिर्न परित्यक्तव्य'मिति ।

सभायां प्रथमः प्रस्तावो लोकमान्यैः पुरस्कृतः । तस्मिन् प्रस्तावे शासनसंस्थादत्तादेशस्य तथा समुत्थानप्रतिरोधस्य निपेधः कृतः । लोप-

मान्यैर्व्याख्यातम् 'शासनसंस्था ब्रूते अस्माभिः केवलं पानगृहाणि उद्घाटितानि। तत्र गत्वा सुरापानं कर्तव्यमित्यस्माभिर्नोपदिष्टम्' इति। स्वयंसेवका अपि किं कुर्वन्ति? पानगृहाणां पुरतः स्थित्वा केवलमुपदिशन्ति मद्यपानं न कर्तव्यमिति। किमत्र स्खलितं स्वयंसेवकानाम्? 'मॅक्निकल्'नामकेन ख्रिस्तधर्मप्रचारकेणानुमोदितोऽयं प्रस्तावः। अन्यैरपि वक्तृभिः पुष्ट्यर्थमुक्तम्। प्रतिष्ठितनागरिकाणामेकं मण्डलं राजप्रतिनिधिदर्शनार्थं प्रेषितव्यमित्यपि सभायां निश्चितम्।

अयं सभावृत्तान्तो बहून्यनुमानानि सूचयति। आन्दोलनकार्यं केवलं शान्तिसूक्तपठनेन कृतम्। न संक्षोभेण। आन्दोलनहेतुर्न राजकारणम्। नीतिशिक्षणोपदेशे सर्वेषामधिकारः। तस्यायमाग्रहः। इदमान्दोलनं नैकपक्षस्य। न वा कस्यापि एकस्याः जात्याः। सर्वो जनस्तस्मिन् समाविष्टः। परं शासनसंस्थाग्रहस्तु एक एव। ब्राह्मणानामिदमभ्युत्थानमिति। मद्यपाननिषेधस्तु केवलमवगुण्ठनम्। स्वयंसेवकशिक्षणार्थमियं पाठशाला। साहसप्रियान् तरुणान् सन्नद्धान् कर्तुमिदं व्यायामगृहम्। सङ्घशक्तिनिर्माणे प्रयत्नोऽयम्। अधिकारिणामपमानार्थमेतत् शिक्षणम्। कातरेषु बलप्रयोगः। प्रजानां पानस्वातन्त्र्ये प्रहारोऽयम्। निरोधनमार्गेण शासनसंस्थाधर्षणाय तर्जनमिदम्। नेदमान्दोलनं लोककल्याणाय। प्रच्छन्नं राजकारणमिदम्। स्वातन्त्र्यसम्पादनायायं संक्षोभप्रस्तावः। 'धुळे'नाम्नि नगरे प्रदेशपरिषदोऽधिवेशनं जातम्। नेमस्तपक्षेण सामोपायार्थमत्रौ विमर्शः कृतः। 'प्रयागक्षेत्रे' जातायां परिषदि अस्या विचारधारायाः परिवर्तनं जातम्। राष्ट्रियपक्षेण प्रादेशिकपरिषदि सामोपायार्थमेका समितिः स्थापिता। अखिलभ्रधिवेशने लोकमान्यैः संयुक्तराष्ट्रियसभाधिवेशनप्रस्तावमधिकृत्य बहु भाषितम्।

प्रादेशिकपरिषदोऽधिवेशनानन्तरं 'खापर्डे'प्रभृतिभिः सह लोकमान्या 'अकोला'नगरं गताः। तत्रैकस्मिन् व्याख्याने तैरुक्तम् "केचित् यात्रिकाः स्वराज्यगङ्गौघं दृष्ट्वा तत्र गन्तुं सुदीर्घप्रवासमङ्गीकुर्वन्ति। केचित्तं प्रवाहमपि न पश्यन्ति, दीर्घप्रवासं च न सहन्ते। तैरात्मनस्तीर्थयात्रा गोदावरीनदीतीरे एव समापयितव्या। परम् अस्माकं निश्चयस्तु स्वराज्यगङ्गातीरे काशीक्षेत्रमेव गन्तव्यमिति। मार्गप्रमादेन वा चरणपीडया वा यदि वयं

मध्येमार्गं गतप्राणास्तर्हि 'अन्ते मतिः सा गतिः' इति वचनेन तीर्थयात्राफलं सम्पादयितुं स्वराज्यगङ्गातटाके एव राष्ट्रियपारणां कर्तुं वयमुत्सहामहे" इति।

अनेन समयेन वङ्गदेशे अग्निगोलकस्फोटैः प्रलयः समारब्धः। शासनसंस्थाकृतप्रजापीडननिरसनार्थं क्रान्तिकारकाणामयं समुद्योगः। अस्मिन् विषये लोकमान्यैः केसरिपत्रे लिखितम् अग्रेऽवलोकनीयं भवेत्। राजद्रोहाभियोगाः शासनसंस्थया समारब्धाः। कैश्चिदाङ्ग्लदेशीयैरपि लिखितम् 'शासनसंस्थाधिकारिकृतप्रजापीडनस्यायं नैसर्गिको विपाकः' इति। परं शासनसंस्था अभ्युत्थानविनाशायैव सन्नद्धाऽभूत्।

## (ओ) 'नेमस्त-जहाल'पक्षयोः सन्धिः

१९०८ संवत्सरे फेब्रुआरीमासे 'सन्धिः कथं भवेत्' इति शीर्षकं दत्त्वा लिखितेऽग्रलेखे लोकमान्याः प्रतिपादयन्ति "आङ्ग्लदेशे पार्लमेंटसभायाः निदर्शनमस्माकं पुरतः सदैव वर्तते। आत्मनो मतभेदं पक्षभेदं च विस्मृत्य राष्ट्राभ्युदयार्थं सर्वे जना एकत्र मिलित्वा आत्मनः कार्यं सम्पादयन्तीति प्रत्यक्षमेव। राष्ट्रियसभां नेमस्तपक्षेणैवागन्तव्यम्, न राष्ट्रियपक्षेण इति तु असमञ्जसम्। मतभेदे मतैक्यं, द्वैते अद्वैतं तत्र दृश्यते। अस्माकं सर्वं विपरीतमेव। अस्माकं स्वराज्यं वा स्वातन्त्र्यं वा सुदूरमेव। इदानीमकालस्तस्य विचारस्य। पुष्पवादिनां फलवादिभिः सह कलहेन किं प्रयोजनम्? भूमौ बीजमुप्त्वा जलं निषिच्य अङ्कुरो वर्धयितव्यः। संवर्धितेऽङ्कुरे उभयोः पक्षयोः कार्यसिद्धिर्भवति। वेदान्ते स्वर्गप्राप्तिः मोक्षश्च, व्यवहारे पुष्पं फलं च, राजकीयकार्ये स्वराज्यं स्वातन्त्र्यं चेति समानि द्वन्द्वानि। सत्यपि ध्येयभेदे कार्यसातत्यमावश्यकं भवति। फलसम्पादने न केषामपि मतभेदः। एवंप्रकारको विरोधः सर्वत्र दृश्यते" इति। वङ्गदेशे लोकमान्यानां मतप्रभावः। नान्यत्र। 'पटना'नगरे प्रादेशिकपरिषदोऽधिवेशने राष्ट्रियपक्षस्य मताधिक्यम्। न तथा 'मद्रास'-प्रदेशे, अन्यस्मिन् प्रदेशे वा।

अन्ते नेमस्तपक्षेण 'कन्व्हेन्शन' इति नाम्ना आत्मनः स्वतन्त्रा सभा स्थापिता। तस्याः प्रतिज्ञापत्रमासीत्। प्रतिज्ञापत्रके हस्ताङ्कनं कृत्वा

एव सदस्येन सभास्थानं गन्तव्यमिति नियमः । एतत् सर्वं राष्ट्रियपक्षस्या-सम्मतम् । एवं राष्ट्रियपक्षेण सन्ध्यर्थं कृताः सर्वे प्रयत्ना निष्फला अभूवन् ।

राष्ट्रियपक्षेण सन्धिविमर्शार्थं नियुक्तया समित्या मुम्बापुर्यामेका सभा निमन्त्रिता । तस्यां राष्ट्रियसभायाः स्वतन्त्रमधिवेशनं 'नागपुर'पत्तने ग्रहीतव्यमिति निश्चितम् । स्वागतसमित्या आत्मनः कार्यं समारब्धम् । एकं स्वयंसेवकमण्डलं निर्मितम् । अधिवेशनार्थं स्थानं नियुक्तम् । अतः प्रतिनिधिप्रेषणार्थं सर्वेषु प्रदेशेषु विचारः समुद्भूतः । एवं स्थिते नागपुर-प्रशासकेनात्मनः आज्ञापत्रकेण निरुद्धं तदधिवेशनम् । नागपुरनागरिकैर्यथा तर्कितं तथा जातम् । निरुद्धे नागपुराधिवेशने स्वतन्त्रराष्ट्रियसभाधिवेशन-कल्पना पुनर्न समुद्भूता । नेमस्तपक्षेण प्रतिसंवत्सरं कृतं 'राष्ट्रियसभा' इति नाम्ना अधिवेशनं लोकेषु अप्रियमभूत् । शनैः शनैः संयुक्तराष्ट्रियसभा-पक्षः सबलो जातः । अन्ते 'मण्डाले'कारागृहान्मुक्तेषु लोकमान्येषु राष्ट्रिय-सभा एव राष्ट्रियपक्षेण प्रवेष्टव्या इति समुत्पन्ना कल्पना यशस्विनी जाता ।



# ९ द्वितीयराजद्रोहाभियोगपर्व

## १ पक्षभेदः

अद्यावधि लोकमान्यैरारब्धान्यान्दोलनानि शासनसंस्थायै नारोचन्त। राष्ट्रियपक्षस्य सामर्थ्यं प्रभावश्च शुक्लपक्षेन्दुरिव प्रतिदिनं ववृधे। राष्ट्रियसभाविभजनेन लोकमान्याः कस्यचिज्जनस्याप्रिया अभूवन्। परं येन कारणेन तैरयं मार्गः समाश्रितस्तस्य कारणमीमांसा न केनापि अप्रमाणीकृता। केवलं नेमस्तराष्ट्रियपक्षभेदः स्पष्टो जातः। नेमस्तपक्षमतेनाञ्जलिं बद्ध्वा प्रार्थनापूर्वकनिवेदनेनाखिलं कार्यं सम्पादनीयम्। अनेन मार्गेण यदि कार्यसिद्धिर्न स्यात्तर्हि कालान्तरेण शासनसंस्थायाः मतपरिवर्तनं भवेत्। परं शासनसंस्थाविरोधोऽस्माभिः कदाऽपि न कर्तव्यः। कृते प्रतिरोधे किं फलं भविष्यति? शासनसंस्थाधिकारिणः क्रोधसन्तप्तमनसा प्रजापीडनमधिकं करिष्यन्ति। तस्माच्छान्तिसूक्तपठनेनैव सर्वं कार्यं सम्पद्येत। अयं मार्गो राष्ट्रीयपक्षस्य रुचये नाभूत्। सोऽब्रवीत् 'आजन्मनो राष्ट्रियसभयाऽयं मार्गोऽनुसृतः। तेन किं फलं प्राप्तम्? स्वराज्याधिकारदाने उभावपि पक्षौ शासनसंस्थायाः समानौ। आङ्ग्लाः प्रथममत्र वाणिज्यार्थमागताः। भारतीयानां दोषान् दृष्ट्वा शनैः शनैस्तैराक्रमणं कृतम्। तस्मादधिकारदाने तेषां प्रवृत्तिः कथं सम्भवेत्? अधिकारिणामधिकारमदः परां कोटिं गतः। अन्यच्च। यथाऽस्माकं सर्वाणि गृहकार्याणि अस्माभिरेव करणीयानि तथैव सर्वाणि राज्यकार्याणि। तस्माद्यदि आङ्ग्लाः सामोपायैरधिकारदानं न कुर्युस्तर्हि अस्माकं विरोधोऽस्माभिः प्रदर्शयितव्य एव। कलकत्ताधिवेशने सम्मताश्चत्वारः प्रस्तावाः प्रगतिपराः। यदि राज्यकर्तारः सुखेनास्मभ्यं राज्याधिकारान्न दास्यन्ति तर्हि प्रतिकारेणापि अस्माभिस्ते ग्राह्या एव। अस्माकं गृहे अस्माकमेव अधिकारः। नान्येषाम्। तस्माच्छासनसंस्थानियमाननुल्लङ्घ्यास्माभिः प्रतिरोधः कर्तव्य एव' इति।

## २ अभियोगानुज्ञा

अनेन राष्ट्रियपक्षमार्गेण लोकैः सामर्थ्यं सम्पादितम्। तस्माच्छासनसंस्थयाऽपि निर्णीतम् अस्य पक्षस्य नेतारो निरोद्धव्या इति। 'सर् जॉर्ज

क्लार्कमहाशयस्तदा मुम्बईप्रदेशराजप्रतिनिधिरासीत्। तेन महता निर्बन्धेन राजद्रोहाभियोगाय मोर्लेमहाशयस्यानुमतिर्लब्धा। वस्तुतस्तु मोर्लेमहाशयोऽभियोगकरणे नैव समुत्सुकः। क्लार्कमहाशयेनैवैतत् स्वसम्पादितग्रन्थे लिखितम्। अन्ते तेन १९०८ वत्सरे जूनमासस्य त्रयोविंशे दिने लोकमान्येष्वभियोगं कर्तुमनुज्ञा दत्ता। अन्येद्युरेव मुम्बापुर्याः प्रशासकस्य ॲस्टनमहाशयस्य पुरतः अभियोगस्य प्रार्थनापत्रं समर्पितम्। प्रार्थनापत्रे एवं लिखितम् "मे-मासस्य द्वादशस्य दिनस्य केसरिपत्रे 'देशस्य दुर्दैवम्' इति शीर्षकं दत्त्वा अग्रलेखो मुद्रित आसीत्। अयं लेखो जनानां मनसि शासनसंस्थाविषये द्वेषबुद्धिं तथाऽवमानबुद्धिं जनयति। अथवा तथा तस्य प्रयत्नः। शासनसंस्थायाः दण्डनीतिशास्त्रस्य '१२४अ, १५३अ' परिच्छेदयोराधारेण दण्डनीयोऽयं राजद्रोहापराधः" इति। सपद्येव लोकमान्यान् निग्रहीतुमाज्ञापत्रं दत्तम्। तेनाज्ञापत्रेण पुण्यपत्तनस्थस्य केसरिवृत्तपत्रस्याखिलं पत्रव्यवहारं, तथैव लोकमान्यानां व्यक्तिनिष्ठं पत्रव्यवहारमपि ग्रहीतुमाज्ञापत्रं दत्तम्। अनेनाज्ञापत्रेणासन्तुष्टोऽयं प्रशासकः सिंहगडनाम्नि दुर्गे विद्यमानं लोकमान्यानां निवासस्थानमपि विचेतुमनुज्ञां दत्तवान्।

केसरिपत्रसम्पादकेषु अभियोगो भविष्यतीति ज्ञातमेव पूर्वं लोकमान्यैः। 'काळ'पत्रसम्पादकेषु अभियोगो जातः। अतः 'शिवरामपंत परांजपे'-महाशयेभ्यः साहाय्यं दातुं मुम्बापुरीगमनं लोकमान्यानामावश्यकम्। तत्र गन्तुं यदा ते पुण्यपत्तनात् प्रातिष्ठन्त तदा तैः सह 'बापूसाहेब गांधी'-नामको विधिज्ञ आसीत्। यावत्ताउभौ पुण्यपत्तनस्थाग्निरथविश्रान्तिस्थानं सम्प्राप्तौ तावदेव गांधीमहाशयस्य कर्णे केनापि गुप्तचरेणोक्तम् 'लोकमान्येष्वभियोगो भविष्यति। प्रायेणेदमेव तेषामन्तिमं मुम्बापुरीगमनम्' इति। लोकमान्या यदा बाष्परथे स्थानापन्नास्तदा गांधीमहाशयस्तेषां कर्णे मन्दं वदति स्म 'श्वो मुम्बापुरीं गमिष्यामः। गृहं गत्वा किमप्युर्वरितं कार्यं यदि सम्पादनीयं भवेत्तर्हि तदेवास्माभिः प्रथमं कर्तव्यम्' इति। सपद्येव लोकमान्यैरव्यग्रमनसा उक्तम् 'किं तत्र कर्तव्यं भवति ? किं गृहं गत्वा सैन्यं समादयितुमाज्ञापयितव्यम् ? उत सैनिकाः शिक्षयितव्याः ? उताहो

हस्त्यश्वरथपदातिशृङ्गारे यतितव्यम् ? आहोस्वित् शत्रु दुर्गमभियास्यतीति कृत्वा दुर्गं परित परिखावलय खनितव्यम् ? अखिल भरतखण्ड शासन-सस्थया कारागृह कृतम् । अतो वय सर्वे कारागृहे एव वसाम । प्रत्यक्ष कारागृहगमन नाम एका कक्षा विहाय कक्षान्तरे प्रवेशनम्' इति । अहो धीरोदात्ता इय वाणी । न कस्मादपि लोकमान्याना भय विद्यते । उक्त च पञ्चतन्त्रे--

'समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति (जलस्थो वानरो यथा)॥' इति ।

'स्थितप्रज्ञस्य का भाषा' इत्यर्जुनप्रश्नस्योत्तर लोकमान्यैराचारेण दत्तमिति वय मन्यामहे ।

### ३ अभियोगपूर्वकारावासः

लोकमान्याना निरोधात् प्रागपि ईदृश प्रसङ्गो जात । 'सरदार गृह'मागत्य 'यशवतराव कुलकर्णी' महाशयेभ्य केनापि कथितम् 'टिळक महाशय बन्दिशाला नेतुमाज्ञापत्रके प्रशासकेन हस्ताङ्कन कृतम्' इति । लोकमान्यास्तदा तत्र नासन् । समागतेभ्यस्तेभ्यो यशवतराय उदन्त कथितवान् । तदा लोकमान्या उदगिरन् 'किमनेनोदन्तकथनेन ? प्रति कारासमर्थे राष्ट्र किं करिष्यति' इति । आज्ञापत्र गृहीत्वा प्रहरकालपर्यन्त यदा राजदूतो नागतस्तदा लोकमान्या यशवतरायमहाशयमाहु 'इयन्त काल प्रतीक्ष्यापि न सम्प्राप्त तदाज्ञापत्रक मिति । अनन्तर घटिकामानेण रक्षापुरुषाधिकारी समायात । त दृष्ट्वा लोकमान्या समुद्गिरन्ति 'बहुकालो गत आज्ञापत्रके जातस्य हस्ताङ्कनस्य । नातिदूरे प्रशासककार्यालयोऽस्मात् स्थानात् । यदि विना कालातिपात यूयमागमिष्यथ तर्हि प्रतिभूविषये प्रार्थना-पत्रमर्पयितुमयतिष्यामहि' इति । साधारोऽयमधिक्षेप । रक्षापुरुषाणा मुद्देशस्तु लोकमान्या कारावासमनुभवेयुरिति । शासनसस्थायाश्चारा यथा वरिष्ठाधिकारिभ्यो लोकवार्ता कथयन्ति तथा लोकमान्यान' हितचिन्तका स्तेभ्यो गुप्तवार्ता सतत कथयन्त्येव ।

केसरिपत्रकार्यालयादखिल पत्रव्यवहारो रक्षापुरुषैर्नीत । सर्वेषु पत्रेषु वैरेक लोकमान्यैर्प्रेषित पत्र लब्धम् । स्फोटकद्रव्यविषयमधिकृत्य

लिखितानां ग्रन्थानां द्वे नामनी तस्मिन् पत्रे लिखिते आस्ताम्। इदमप्रेषितं पत्रं लब्ध्वा '*मुलिन्हन्*'*नामको रत्नापुरप्राधिकारी हर्षनिर्भरो भूत्वा* ताण्डवमकरोत्। 'सिंहगड'नाम्नि दुर्गे राजदूतैन किमप्यासादितम्। अग्निगोलकानां साधनानि वा यानिचित् शस्त्राणि वा तत्र प्राप्स्याम इति तेषां दृढा आशा। परं ते नैराश्यं गताः। अन्येद्युः '*अशाश्वता एते उपायाः*' इति शीर्षकं दत्त्वा प्रकाशितमग्रलेखमधिकृत्य अन्याभियोगो रचितः। अग्निगोलकानां विवेचनं तस्मिंल्लेखे आसीत्।

लोकमान्याः बन्दिशालायामेवावर्तन्त। अस्य नूतनाभियोगस्याज्ञापत्रं तान् दर्शयित्वा रत्नापुराधिकारिणा लोकमान्यानां हस्ताङ्कनं गृहीतम्। जूनमासस्य एकोनत्रिंशे दिने न्यायाधीशस्य पुरतः प्राथमिकपरीक्षणार्थमभियोगपत्रकं निहितम्। 'भास्कर विष्णु जोशी' महाशयेन अग्रलेखानां रूपान्तरं समर्पितम्। केसरिपत्रं मुम्बापुर्यां ग्राहका वाचयन्तीत्यस्मिन् विषये 'नारायणराव दातार' महाशयेन निवेदनं दत्तम्। लोकमान्यानां कृते प्रतिभूविषये दत्तं प्रार्थनापत्रं न्यायमूर्तिना न स्वीकृतम्। कारागृहं गत्वा लोकमान्यान् द्रष्टुं वयस्यगणायानुज्ञा दत्ता। वरिष्ठन्यायालये गतेऽभियोगे पुनरेकदा प्रतिभूस्वीकरणाय प्रार्थनापत्रं दत्तम्। १८९७ संवत्सरे राजद्रोहस्य प्रथमाभियोगे यो 'दावर'नामको विधिज्ञो लोकमान्यैः स्वपक्षप्रतिपादनार्थं नियुक्तः स एवाधुना वरिष्ठन्यायालयस्य न्यायाधीशो जातः। तस्य पुरतो निहितमिदं प्रतिभूविषयकं प्रार्थनापत्रम्। तेनापि तन्न स्वीकृतम्। *निर्णयपत्रके 'दावर'महाशया लिखन्ति 'प्रतिभूस्वीकारेण* लोकमान्यानां बन्धमोक्षोऽसमञ्जसः। केन कारणेनेदमहमाचरिष्ये इत्यपि कथनं न समीचीनम्' इति।

## ४ अभियोगपरीक्षणम्

जुलैमासस्य तृतीयेऽहनि शासनसंस्थायाः कृते महापण्डितविधिज्ञेन न्यायाधिकारिभ्यः प्रार्थनापत्रकं समर्पितम्, यत् टिळकमहाशयस्याभियोगपरीक्षणार्थं विशेषप्रमाणपुरुषाणां गणो नियोक्तव्य इति। लोकमान्यानां विधिज्ञेन 'बॅप्टिस्टा'महाशयेन तत् प्रतिषिद्धम्, उक्तं च 'प्रथमं तावत् विशेषप्रमाणपुरुषगणं प्रार्थयितुं लोकमान्यानामेवाधिकारः। ते यदि विशेषगणं

प्रार्थयन्ते तर्हि अर्हति किलायं प्रश्नो विमर्शम्। लोकमान्या एतादृशं विशेषप्रमाणपुरुषगणं न प्रार्थयन्ते। अन्यच्च। न कोऽपि तस्मिन् गणे 'मराठी'-भाषाभिज्ञः स्यात्। राजद्रोहाभियोगोऽयम्। यान् लेखानधिकृत्याभियोगो रचितः ते अग्रलेखा मराठीभाषायां मुद्रिताः। अतो महाराष्ट्रभाषाभिज्ञा एव प्रमाणपुरुषा अस्मिन् गणे समावेष्टव्याः। पुण्यपत्तने खलु अयमभियोगः कर्तव्य एव, यतस्तत्र मराठीभाषाभिज्ञा बहवो जना वर्तन्ते। अग्रलेखेषु महत्त्वपूर्णानां विषयाणां विवरणं कृतम्। विशेषेण तु अग्निगोलकानाम्। एभिरग्निगोलकैर्गौरकायेषु अत्याचारा विहिताः। तस्मान्मराठीभाषाभिज्ञा यदि प्रमाणपुरुषगणे न स्युस्तर्हि न्यायदानं सुकरं न भवेत्' इति। परम् एतदपि न्यायाधीशैर्न स्वीकृतम्। किं ध्वनितमनेन? न्यायाधीशाः प्रतिपादयन्ति 'टिळकमहाशयस्य हितायैव विशेषप्रमाणपुरुषगणो नियोक्तव्यः' इति। प्रतिभुवः अस्वीकरणं टिळकमहाशयस्य हितायैव! विशेषप्रमाणपुरुषगणोऽपि तस्य हिताय!! तथा दण्डोऽपि न केवलं टिळकमहाशयस्य हिताय, अपि तु अखिलभरतखण्डस्य हिताय!!! उक्तं च—

'परोपकाराय सतां विभूतयः।' इति।

एवं यथाऽपराधिनः कल्याणाय तथा भारतदेशस्य कल्याणायैवेदं सर्वं न्यायाधीशदावरमहाशयैः कृतम्। कामं देशहितचिन्तका राष्ट्रसेवका एव न्यायाधीशमहाशयाः। महद्भाग्यमेतद्भारतदेशस्य यल्लोकमान्याः कारावासदण्डमलभन्त। अस्मादेव सद्भाग्याद्भगवद्गीतारहस्यजननम्।

जुलैमासस्य त्रयोदशे दिवसे सोमवासरे (१३-७-१९०८) लोकमान्यानां द्वितीयराजद्रोहाभियोगस्य परीक्षणं समारब्धम्। विधिशास्त्रमहापण्डितो 'ब्रॅन्सन्'नामकः शासनसंस्थापक्षं प्रतिपादयति स्म। 'इन्व्हेरॅरिटी-विनिंग्' नामकौ अन्यौ द्वौ विधिशास्त्रज्ञौ तस्य सहायकौ। लोकमान्यानां पक्षे शासनसंस्थापक्षखण्डनाय तथा स्वपक्षमण्डनाय लोकमान्याः स्वयमेव बद्धपरिकरा अभूवन्।

प्रमाणपुरुषगणे नव प्रतिष्ठितनागरिका नियुक्ताः। तथाहि। '१ वुड, २ मेग्, ३ हिलियार्ड्, ४ पाल्नजी, ५ दावर, ६ हडसन्, ७ शापुरजी सोरावजी, ८ ट्रेम्पसन्, ९ अंडरसन् मार्टिन्' इति। एतेषां प्रमुखः

अंडरसन् महाशयः । एतेषु सप्त आङ्ग्लदेशीयाः, द्वौ 'इरतुष्ट्रा'-नुयायिनौ । चतुर्षु आरोपेषु त्रयः परीक्षणार्थं गृहीता. । चतुर्थो न ग्रहीतव्य इति शासनसंस्थाविधिज्ञेनाभियोगान्ते प्रार्थनीयमिति राजपक्षविधिज्ञेन कथितम् ।

एकैकमारोपमधिकृत्य पृष्टा लोकमान्या अवदन् 'नाहमपराधी' इति । अनन्तरं शासनसंस्थापक्षस्य प्रथमं प्रतिपादनं 'इन्व्हेरॅरिटी 'महाशयेन कृतम् । द्वावपि लेखौ आक्षेपार्हौ इति तेन प्रतिपादितम् । दण्डनीत्याः १२४ ( अ ) तथा १५३ ( अ ) क्रमाङ्कयोः परिच्छेदयोर्विवरणं कृत्वा, समग्रौ अग्रलेखौ राजद्रोहपूर्णौ इति मत्वा, प्रायेण सर्वेषां मुख्यविधानानां स्पष्टीकरणं दत्त्वा, विधिज्ञेन कथितं यदुत् टिळकमहाशयेन लिखितं तत्तल्लक्षणया गौरकायजनानुद्दिश्य लिखितम् इति ।

अनन्तरम् अभियोगपरीक्षणं जातम् । आक्षिप्तलेखानामाङ्ग्लभाषया रूपान्तरं प्रमाणार्थं दत्तम् । अनन्तरं भाषान्तरकर्मणि नियुक्तो 'जोशी'-महाशयो लोकमान्यैः परीक्षितः । पश्चाद्रक्षापुरुषाणामधिकारी 'सुलिव्हन्'-नामकः परीक्षितः । स्फोटकद्रव्यविषयमधिकृत्य लिखितानां ग्रन्थानां नामानि यस्मिन् पत्रे लिखितान्यासन् तत्पत्रविषयको वृत्तान्तस्तेन कथितः । एतत् सर्वं परीक्षणार्थं स्वीकृतम् ।

## ५ लोकमान्यानां निवेदनम्

भौमवासरे अपराह्णकाले शासनसंस्थापक्षस्य प्रतिपादनं समाप्तम् । अनन्तरं न्यायाधीशैर्निवेदनार्थं लोकमान्या आहूताः । तैर्स्वनिर्मितमात्मनो निवेदनं प्रथमं वाचयित्वा परीक्षणार्थं समर्पितम् । निवेदने लोकमान्यैर्लिखितम् । सम्पादकत्वेन प्रकाशकत्वेन च केसरिवृत्तपत्रे प्रकाशितानां लेखानां समस्तो भरो मयि वर्तते । अतोऽभियोगे जाते प्रतिवादो मयैव कर्तव्यः इति तु क्रमप्राप्तमेव । राजकीयविषयाणामूहापोहो मराठीभाषायां नूतनः । अतः केषांचन आङ्ग्लशब्दानामर्थान् बोधयितुं मया मराठीभाषायां केचन शब्दा उपयुक्ता. । तेषामर्था नाद्यापि निर्धारिताः । अग्रलेखेषु मया एतादृशाः शब्दा उपयुक्ताः । अधिकारिवर्गविषयके लेखने मया सर्वेषु

स्थलेषु 'गोरा–सरकारी अधिकारी–इंग्रजी–राज्यकर्ता' इत्यादयो विविधा मराठीभाषायां विद्यमानाः शब्दा एकेनैवार्थेनोपयुक्ताः । 'जुलमी-माथेफिरू-तेज-आवेश-त्वेष-चीड-एकमुखी-मतिभ्रष्ट-बुद्धिभ्रंश' इत्यादीनां मराठीशब्दानां आङ्ग्लभाषायां कृतं रूपान्तरमसमीचीनम् । तत्सर्वमपि ममासम्मतम् । ( अस्मिन् समये लोकमान्यानां सम्मताः शब्दास्तैः सूचिताः ) एकस्मिन् पत्रे मया स्वयं लिखितानि स्फोटकद्रव्यविषयकाणां पुस्तकानां नामानि वर्तन्ते । अध्ययनार्थं तानि पुस्तकानि मयाऽपेक्ष्यन्ते । शासनसंस्थया स्फोटकद्रव्यविषयकमेकं विधेयकं विधिमण्डले सम्मतं कृतम् । तस्य विवेचनार्थमेतानि पुस्तकान्यावश्यकानि । अतस्तेषां नामानि मया लिखितानि । जूनमासस्य नवमे दिवसे केसरिपत्रे मुद्रितस्य लेखस्यायमेव विषयः "असन्तोषनिरसने 'प्रजापीडन'मिति नैव एकः उपायः" इति ।

## ६ लोकमान्यानां समर्थनम्

शासनसंस्थापक्षविधिज्ञेन प्रमाणीकृते राजद्रोहारोपे, लोकमान्यैः स्वलेखसमर्थनार्थं विस्तरेण प्रतिपादितमात्मनोऽनपराधित्वम् । बहूनि अवतरणानि उद्धृतानि । लोकमान्यानां भाषणं विस्तृतम् । राजद्रोहविषयकं साङ्गोपाङ्गविवेचनं तद्वर्तते । स्थलाभावात् सङ्क्षेपतोऽपि तस्य सारांशलेखनमशक्यप्रायम् । तथापि किञ्चित् प्रयत्यते ।

लेखानां समस्तो भरो लोकमान्यैः स्वीकृतः । परम् अनेन लेखनेन राजद्रोहः कथं भवति इति प्रथमः प्रश्नः । लोकमान्यैः प्रतिपादितं मराठीभाषायां मुद्रितान् लेखान् महाराष्ट्रभाषाऽभिज्ञा एव सम्यग् जानन्ति । प्रमाणपुरुषगणसदस्यानामेकोऽपि न जानाति मराठीभाषाम् । अतस्तेषां पुरतः आङ्ग्लभाषया लेखानां रूपान्तरं विद्यते । अतो लेखानां वाच्यार्थं, लक्ष्यार्थं, व्यङ्ग्यार्थं ज्ञातुं प्रमाणपुरुषगणसदस्या असमर्थाः । लेखेभ्यो राजद्रोहः प्रभवति, न वा प्रभवति इति साम्प्रतं द्रष्टव्यं भवति । यदि प्रमाणपुरुषाः तं न पश्यन्ति तर्हि तेषामेव निर्णयः प्रमाणम् । राजद्रोहः परिणामेन निर्णेतव्यः । राजद्रोहप्रयत्ने हेतुर्वा उद्देशो वा तथा च पूर्वसङ्केतः आवश्यको भवति । लेखेन राजद्रोहहेतुः सिद्धो न भवति इति दर्शयितु-

मुदाहरणानि दत्त्वा लोकमान्यैर्विवेचितम् ‘ उपस्थिते वादविषये यदि केनापि पूर्वपक्षः कृतस्तर्हि केवलं तस्य खण्डनमेवाग्रलेखे वर्तते । शासनसंस्थाकार्यदोषान् दूरीकुरुत इत्यादिप्रकारकोपदेशः कथं राजद्रोहात्मकः । शासनसंस्थायाः स्खलनं यदि वृत्तपत्रैः प्रदर्श्यते तर्हि कथं तद्राजद्रोहमावहतीति न ज्ञायते ’ ।

अनेन प्रकारेण लोकमान्यैर्विविधा विषयाः प्रतिपादनेन विशदीकृताः । राजद्रोहः, तस्य प्रयत्नः, तस्योद्देशः, परिणामश्चैते सर्वे विषया द्रष्टव्या भवन्ति । प्रचलितविषयेषु वृत्तपत्रसम्पादकैर्लेखनमवश्यं भवति । अग्निगोलकानां स्फोटः, पुरुषाणां घातः, सशस्त्रप्रतिकारः, ‘ खुदीराम बोस ’-नामकस्य तरुणस्याभियोग इत्याभियोगाः किं कथयन्ति ? प्रजानामसन्तोष एवास्य निदानम् । अस्मिन् समये शासनसंस्थायै उपदेशो मादृशानां सम्पादकानां कर्तव्यं भवति । सम्पादकः स्वतन्त्रविचारप्रवर्तकः पुरुषः । उक्तं च—

‘ अप्रियस्यापि पथ्यस्य वक्ता श्रोता च दुर्लभः । ’ इति ।

वृत्तपत्रसम्पादकेन कृत उपदेशः शासनसंस्थायै कथं रोचिष्यते ? ‘ पायोनिअर ’दिवृत्तपत्रैर्लिखितम् ‘ अत्याचारपरम्परेयं समारब्धा ’ इति । मया तस्य केवलं प्रतिवादः कृतः । अनुभूताः परिणामा एव युष्माभिर्लिख्यन्ते । परं तेषां कारणमीमांसा न क्रियते । यदि प्रजाभिरग्निगोलकाः प्रक्षिप्तास्तर्हि तेषां कारणं किं सम्भवेत् इति यूयं निश्चिनुत इति । प्रचलितविषयेषु जनानां मार्गदर्शनं वृत्तपत्रसम्पादकानां कर्तव्यं भवति ।

सर्वमेतन्मम लेखनं प्रमादपूर्णभाषान्तरेण विकृतं प्रतिभाति । प्रगतिपथं वर्तते प्रस्तुतं जगत् । एतादृशे जगति आधुनिकविषयानुद्दिश्य प्रकाशिता लेखाः पुराणकोशसाहाय्येनाङ्ग्लभाषावगुण्ठिताः शासनसंस्थाधिकारिभिः । जीर्णोऽयं कोशो नूतनशब्दानां रूपान्तरक्रियायां कथमुपकारको भविष्यति ? समासेन एतादृशं भाषान्तरं मूललेखप्रतिपादितविषयस्यार्थं न सम्यग्वदति । तस्मादस्मिन् दोषपूर्णे भाषान्तरे विश्वस्य अहं दोषार्ह इति प्रमाणपुरुषगणेन न निर्णेतव्यम् । अन्यच्च । मराठीभाषायां मुद्रितेन लेखेन तां भाषां विजानत्सु लोकेषु कः परिणामोऽभूदित्यपि

द्रष्टव्यं भवति । मद्रासप्रदेशे जातस्याभ्युत्थानस्य वा वङ्गदेशे समुत्पन्नस्य प्रक्षोभस्य वा मराठीभाषायां प्रकाशितो लेखः कथं कारणं सम्भवेत्? अस्मत्प्रलेखस्य नायं विपाकः ।

अनन्तरम् ' दुहेरी इशारा ' ( उभयमुखी सूचना ) इति शीर्षकं दत्त्वा प्रकाशितेऽग्रलेखे किं प्रतिपादितमिति साकल्येन लोकमान्यैर्विवेचितम् । इयं भयसूचना यथा राष्ट्रियसभायै तथा शासनसंस्थायै अपि दत्ता। मोर्लेमहाशयोऽपि एवं वदति ' अखिलभारते यथा शान्तिः पुष्टिश्चास्तु तथा राज्याधिकारदृष्ट्याऽपि भारतः प्रगतिपथं गच्छतु ' इति । परं राजकीयविषये यदा प्रतिगतिर्दृश्यते तदा लोकानामभ्युत्थानं भवति । अभ्युत्थाने जाते आङ्ग्लवृत्तपत्रसम्पादकाः कठोरं प्रजापीडनमुपदिशन्ति । अधिकारदानचर्चाऽपि ते न सहन्ते । एतादृशानां सम्पादकानां प्रतिवादं कुर्वाणः सम्पादको राजद्रोहापराधेन आरोप्यते । यदि कस्मिंश्चित्स्थले किञ्चिदान्दोलनं समुद्भूतं तर्हि एतेषामाङ्ग्लपत्राणामेक एव व्याक्रोशः, एक एवोपायः-- कठोरमनसा प्रजापीडनम् । अत्र वयं ब्रूमः ' अपराधिनो दण्डनीयाः । सर्वत्र शान्तिः स्थापनीया । अत्याचारा निषेद्धव्याः । परं तेन सह स्वराज्यस्य अधिकाधिकारा अपि दातव्याः' । अन्यथा क्रान्तिकारकाः कथं तूष्णीं भवेयुः । यद्यपि मानवः स्वभावकोमलस्तथाऽपि तस्य स्वाभिमानो विद्यत एव इति आङ्ग्लवृत्तपत्रसम्पादकैस्तथा शासनसंस्थाधिकारिभिर्ज्ञातव्यम् । एष मम लेखनस्य हेतुः । आङ्ग्लाः परोपकारार्थं न भारतदेशं शासति इति विधाने मया कृते किं मम स्खलितम्? ' पंजाब'प्रदेशस्य 'ओडायर'नामको वरिष्ठप्रशासकः एवमेव ब्रूते ' आङ्ग्लानां धृतिः स्वार्थपरायणा । आयत्यामपि सा तथैव स्थास्यति इति । अधिकारविभाजनसमित्याः पुरतो मया एवमेव निवेदितम् । वयमेव प्राज्ञाः, सर्वज्ञाः इति मत्वा सर्वेऽधिकाराः शासनसंस्थाधिकारिभिः स्वहस्ते दृढं विधृताः । तैरेव एते राज्याधिकारा उपभोक्तव्याः । नान्यैः इति शासनसंस्थाधिकारिणां स्वभावो मया दूषितः । यत् समित्याः पुरतः प्रतिपादनं तदत्रैव । सर्वेभ्यः सूचनां दातुं मयाऽस्मिन् लेखे पृष्टम् ' यूयमेतेभ्योऽत्याचारेभ्यः कमपि बोधं गृह्णीथ न वा' इति ।

विविधैः प्रमाणैः, दृष्टान्तैः, कथाभिः, ग्रन्थावतरणैर्लोकमान्यैः स्वपक्षो विशदीकृतः । ते प्रत्यपादयन् 'अग्निगोलकानां रहस्यम्' इति शीर्षकं दत्त्वा योऽग्रलेखो मया केसरिपत्रे मुद्रितः, तस्मिन्नेव आङ्ग्लवृत्तपत्रसम्पादकानामत्याचारविषयकाणि मतानि मयोद्धृतानि वर्तन्ते । राजप्रतिनिधिसहितशासनसंस्थाधिकारिणां शाश्वतिको विरोधः राष्ट्रियसभासदस्यैः सह । अतो विवादावसरः । अग्निगोलकैरत्याचार इत्येका तस्य प्रतिक्रिया । सा किमर्थं क्रान्तिकारकैरवलम्बिता इति विचारणीयं भवेत् ।

स्फोटकद्रव्यविषयकपुस्तकानि यस्मिन् पत्रे लिखितानि दृश्यन्ते तत्पत्रमुद्दिश्य अहमेवं प्रतिपादयामि "शासनसंस्था मनुते तत्पत्रं मम विरुद्धममूल्यं प्रमाणम्, अथ अनुमास्यति च अग्निगोलकान् सम्पादयितुमहं समुद्यतः । कुत इति पृष्टे शासनसंस्था ब्रूते 'पश्यत एतत् पत्रम् । स्फोटकद्रव्यविषयकाणां पुस्तकानां नामानि अत्र वर्तन्ते' इति । यदीदम् एवममूल्यरत्नं तर्हि कथं मया तत् सुगुप्तं न निहितम् ? उत्तानस्थले कथं पतितमभूत् । इदं पत्रं कथं लब्धम् इति कथाऽपि रक्षापुरुषैः कथिता । स्फोटकद्रव्यविधेयकस्य विवेचनं कर्तुं य इच्छति तस्य तद्विषयकं समीचीनं ज्ञानमावश्यकं भवति । कानि स्फोटकद्रव्याणि, कानि तेषां नामानि, किं तेषां स्वरूपम्, के गुणधर्माः, कथं तानि प्राप्तव्यानि इति शास्त्रशुद्धं ज्ञानं सम्पादकस्यावश्यकम् । यदि तत्र स्यात्तर्हि स किं लिखेत् ? जूनमासस्य षोडशदिनस्य केसरिपत्रे मया स्फोटकद्रव्यविषयस्य विवरणं कृतम् । अयं सम्बन्धः तस्य स्फोटकद्रव्यविषयकस्य पत्रस्य" इति ।

दण्डनीत्याः १२४ (अ) तथा १५३ (अ) परिच्छेदयोरेकीकरणेन समुद्भूतस्य दोषस्य, तथा 'वर्ग-पक्ष'-शब्दयोर्मिश्रीकरणेन समुत्पन्नस्य दोषस्य विवेचनेन अग्रलेखस्यार्थविषये प्रमादः कथं जातः इति निर्दिश्य प्रमाणपुरुषगणस्याधिकारविषये लोकमान्यैः प्रतिपादितम् । मुद्रणस्वातन्त्र्यरक्षणार्थमाङ्ग्लदेशे जातानां प्रयत्नानां फलं निर्दिश्य १८८४ वत्सरे आङ्ग्लदेशे जातस्यैकस्य राजद्रोहाभियोगस्य परीक्षणकाले 'चेंबरलेन'महाशयेनोक्तमेकं वाक्यं तैरुद्धृतम् । चेंबरलेनमहाशयो ब्रूते 'शासनसंस्था यद्येवं करिष्यति तर्हि जनानां शतसहस्रं लंडननगरमभियास्यती'ति ।

ईदृशेन भाषणेन चेंबरलेनमहाशयेऽभियोगो न कृतः। यदि स अभविष्यत्तर्हि न दूषणास्पदम्। मम लेखे एतादृशं वाक्यं विचेतव्यं भवेत्। शासनसंस्थाविधिज्ञो ब्रूते, मयि दोषारोपः आङ्ग्लभाषायां कृतेनाग्रलेखस्य रूपान्तरेण कृतः। इदं भाषान्तरं न मया कृतम्। नापि स्वीकृतम्। सदोषमिदं भाषान्तरम्। अग्रलेखस्थिता मराठीभाषाशब्दा आरोपपत्रके किं नोद्धृताः। शासनसंस्थया अभियोगार्थमनुज्ञा दत्ता साऽपि इदं प्रमादपूर्णं भाषान्तरमधिकृत्य दत्ता। तस्मात्साऽपि अयोग्या भवति। अग्रस्थानीयो वादग्रस्तः प्रश्नस्तु अयमेव। मराठीभाषायां लिखितस्याग्रलेखस्य सम्यग्ज्ञानं प्रमाणपुरुषगणसदस्यानां कदाऽपि न सम्भवति। अयमेकोऽसम्भवः। अन्यश्च। मूलाग्रलेखानां सम्यग्ज्ञानाभावे अग्रलेखवाचकानां मनसि वाचनेन कः परिणामो भविष्यतीति ज्ञानस्य सभ्यानां सुतरामसम्भवः। अतो राजद्रोहारोपः पूर्णतया न सिद्धो भवति इति।

एतावत्कालपर्यन्तमविरतमात्मनः समर्थनं प्रतिपाद्य अष्टमे दिवसे लोकमान्यैः समारोपः कृतः। तस्मिन् समारोपे तैरुक्तम् 'समाप्ते मम प्रतिपादने शासनसंस्थाविधिज्ञो भाषिष्यते। अन्तिमं भाषणं तेषामेव। प्रत्युत्तरदाने न ममाधिकारः। शासनसंस्थाविधिज्ञस्य सम्भाव्यप्रश्नांस्तर्कयित्वा सर्वं मया निवेदितम्। तस्मिन् यत् किंचन स्खलितं भवेत्तत्सर्वं क्षम्यतामिति प्रार्थये'। शान्तमनसा सर्वमिदं निवेदनं न्यायमूर्तिना तथा प्रमाणपुरुषगणेन श्रुतमिति कृत्वा सर्वेभ्यो धन्यवादान् दत्त्वा लोकमान्या विरेमुः।

## ७ शासनसंस्थाविधिज्ञस्य प्रतिपादनम्

समाप्ते लोकमान्यनिवेदने महापण्डितेन शासनसंस्थाविधिज्ञेनात्मनः प्रतिपादनं समारब्धम्। तेनोक्तम् "टिळकमहाशयेन प्रदीर्घे स्वभाषणे चर्चिताः प्रश्नाः प्रस्तुतविषयस्यासम्बद्धाः। तस्मादनावश्यकाः। कारणं विना तेनायं कालापव्ययः कृतः। प्रधानप्रश्नस्तु अयम् 'आक्षिप्ता लेखाः राजद्रोहं प्रतिपादयन्ति, वा न प्रतिपादयन्ति'। राजद्रोहविधेयकस्य परिणतिः, मुद्रणस्वातन्त्र्यं, प्रमाणपुरुषगणस्याधिकाराः इत्यादयो विषया अस्मिन्नभियोगे न सम्बद्धाः। अतस्ते नार्हन्ति विमर्शम्। अग्निगोलकैरत्याचारो ममाप्यसम्मतः

इति यत् टिळकमहाशयेनोक्तं तद्दम्भपूर्णम्। अन्यथा कथं तैः स्तुतिगर्भं तल्लिखितम्? दण्डनीत्यां वर्तमाना आत्मसंरक्षणमर्यादा अमलेखेनातिक्रान्ता। टिळकमहाशयस्य हेतुरशुद्धः। विवादार्थं स शुद्धः इति यद्यपि मन्येत तथापि तेन तस्यापराधित्वं नापह्रियते। केवलं दण्डो न्यूनो भविष्यति। चिन्तयन्तु अत्रभवन्तस्तस्य दर्पोक्तिः 'देशाभिमानसहितो राजद्रोहो यदि कुत्रापि विद्यते तर्हि स मया कृतः। अधिकारान् प्रदत्त। अन्यथा अग्निगोलकैरातिथ्यं स्वीकुरुत इत्यहं वदिष्यामि यतोऽहं वृत्तपत्रसम्पादकः। अथ च सम्पादकस्य हेतुः सदैव शुद्धः' इति। एवंप्रकारकमौद्धत्यं टिळकमहाशयस्य न शोभते। यद्येवं स करिष्यति, महासङ्कटे पतिष्यति"।

एवंविधेनोपहासाधिक्षेपगर्भेण प्रतिपादनेन महापण्डितः शासनसंस्थाविधिज्ञः स्वपक्षं समर्थितवान्। विधिज्ञानामीदृश्येव प्रतिपादनरीतिः। तेनोक्तं "टिळकमहाशयस्याशयस्तु अयमेव 'राज्यव्यवहारप्रतिबन्धेन प्रजाः पूर्णमनोरथा भविष्यन्ति। नान्यथा। क्रान्तिवीराः शासनसंस्थाधिकारिषु अत्याचारान् कुर्वन्ति। शासनसंस्था तान् प्रतिकरोति। तस्मादासुरीयं शासनसंस्था। यन्नदेशे प्रक्षिप्तोऽग्निगोलको देशभक्तिप्रेरितः। अतः स स्वर्गीयः। यूरोपखण्डे पतितोऽग्निगोलकः निरयगतिं यच्छति। अतः स निन्द्यः'। अनेन क्रूरपरिहासेन टिळकमहाशयस्य चेतो युष्माभिः परीक्षितव्यं भवति। टिळकमहाशयो लोकान् सूचयति 'शृणुत रे भारतीयाः, पूर्वं यथा युष्माभिर्यवनाः पराभूतास्तथा अधुना गौरकायान् सैनिकान् यूयं पराभवत' इति। राज्यकर्तारो यवनाः भारतीयानां शस्त्राणि नापाहरन् इति लेखने टिळकमहाशयस्य को विशेषहेतुरिति सर्वैर्ह्यायत एव। अन्ते शासनसंस्थाविधिज्ञेन स्वप्रतिपादनसमारोपकाले कथितम् 'प्रथमं मम एवं विचार आसीत् यन्मया न किमपि कठोरं वक्तव्यम्। परं टिळकमहाशयस्य भाषणेन मम मनसः शान्तिं रक्षितुमहमसमर्थो जातः। तस्मात् किञ्चिद्दूषणीयोऽहमत्रभवद्भिः। परम् आश्चर्यभूता अमलेखा एव एवंरूपाः यथा ते उपेक्षां नार्हन्ति। अतः कठोरटीकास्त्रं विना मम का गतिः। एवं स्थिते निर्विकारमनसा अत्रभवन्तोऽभियोगं निर्णयन्तु" इति।

## ८ न्यायाधीशसमारोपः

शासनसंस्थाविधिज्ञेन समापिते स्वप्रतिपादने क्षणादेव न्यायाधीशैः 'दावर'महाशयैरात्मनः समारोपः समारब्धः। तेऽवदन् 'उभाभ्यां पक्षाभ्यां स्वपक्षसमर्थनार्थं प्रमाणानि दत्तानि। टिळकमहाशयेन युष्मासु विश्वासः प्रदर्शितः इति समीचीनम्। टिळकमहाशयः युष्माकमपरिचित इत्यपि असम्भाव्यम्। युष्माकं निर्णयो निःपक्षपाती भविष्यतीत्यहं दृढं विश्वसिमि। अस्मिन्नभियोगे न कश्चित् कूटप्रश्नो विद्यते। न्यायाधीशैः स्ट्रॅचीमहाशयैः राजद्रोहविधेयकस्य कृतं विवरणं वरिष्ठन्यायालयस्य सर्वेषां न्यायमूर्तीनां सम्मतम्। आङ्ग्लदेशेऽतिवरिष्ठन्यायालयस्यापि तत्सम्मतम्। अतस्तस्मिन् विषये न किमपि वक्तव्यं भवति'। अनन्तरं 'मुद्रण-स्वातन्त्र्यं, भाषान्तरं, प्रयत्नशब्दस्यार्थः, अत्याचारः इत्यादिविषयान् समासेन निर्वर्ण्य विवेकपूर्णमनसा अत्रभवद्भिर्निर्णयो दातव्यः' इति प्रमाण-पुरुषगणाय न्यायाधीशैः कथितम्।

## ९ अभियोगनिर्णयः

एवं तस्मिन् दिवसे समतिक्रान्तः कार्यावेक्षणस्य नियतः कालः। परम् अतीतेऽपि सन्ध्यासमये, समाप्तायां च अष्टवादनवेलायां रात्रौ समा-पितम् अभियोगपरीक्षणम्। अतो विचारविनिमयार्थं प्रमाणपुरुषगणो निर्मानुपस्थानं गतः, अर्धप्रहरकालेन पुनरायातः।

प्रत्यागतेषु प्रमाणपुरुषगणसदस्येषु न्यायाधीशैः पृष्टम् 'अप्यत्रभवतां सर्वेषामस्मिन्निर्णये ऐकमत्यम्?'

एवं पृष्टे गणप्रमुखेनोक्तम् 'नास्माकमैकमत्यम्। अस्मासु भिन्नमतता वर्तते'।

न्यायाधीशः—– कीदृशी सा भिन्नमतता?

गणप्रमुखः—– त्रिष्वपि आरोपेषु टिळकमहाशयः अपराधीति सप्तानामभिप्रायः। द्वयोः सदस्ययोर्मतेन नायमपराधीति।

न्यायाधीशः—– अपि विद्यते ऐकमत्यस्य सम्भवः?

गणप्रमुखः—– सम्भवस्तु दूरे एव।

न्यायाधीशः— एवं स्थिते मयाऽपि अधुना शास्त्रतः स्वनिर्णयो वक्तव्यः । विशेषप्रमाणपुरुषगणस्यायं निर्णयो ममापि सम्मतः इत्यहं निर्णयामि ।

शासनसंस्थाविधिज्ञेन अत्रोच्यते, दण्डकथनात् प्राक् पूर्वभुक्तदण्डविषयकं किञ्चिन्मया वक्तव्यं भवति । परं लोकमान्या अवदन् ' विधिशास्त्रनियमानुसारतो मया केचित् प्रश्नाः न्यायाधीशानां पुरतः कथयितव्याः । तेषां निर्णये प्रथमं जाते अन्यत् कार्यं कर्तव्यं भवति ' । एवमुक्त्वा लोकमान्यैश्चतुर्दश प्रश्ना उद्धृताः । परं न्यायाधीशैर्निर्णीतम् ' सर्वमेवत् पूर्वं कथितमेव । तस्मादेते प्रश्ना अधुना न विचारार्हाः । तेषु न किमपि तथ्यं वर्तते । सुनिश्चितं मम मतम् । न केनापि तत्परिवर्त्यते । अतोऽहं विना कालातिपातेन अग्रतः क्रियमाणं कार्यमेवावेक्षे ' इति ।

अनन्तरं पूर्वदण्डस्योपरितः षाण्मासिको भागो लोकमान्यैः स्वीकृतः । स्वीकृते पूर्वदण्डे न्यायाधीशैर्लोकमान्याः पृष्टाः । यदि यूयं किमपि वक्तुकामास्तर्हि एष एव समयस्तद्वक्तुम् । न्यायाधीशैरेवं पृष्टे निर्भयमनसा धीरगभीरस्वरेण लोकमान्यैरुक्तम् ।

## १० धीरगभीरा वाक्

" किमतः परम् अन्यद्वक्तव्यमस्ति ? सत्यपि एवंविधे प्रमाणपुरुषगणनिर्णये अहं प्रतिपादयामि 'नाहमपराधी' इति । एतस्मादपि न्यायासनादस्ति काचिद्वरिष्ठा शक्तिः, या निखिलं चराचरं नियमयति । दृश्यते च ह्यमीश्वरेच्छा, यत् ( यथाकथित ) स्वातन्त्र्योपभोगान्मम कारावासेनैव मयाऽङ्गीकृतं कार्यं प्रगततरं भवेत् " इति ।

## ११ कारावासदण्डः

अन्ततो लोकमान्यानुद्दिश्य न्यायाधीशा अवदन् " अधुना दण्डकथनं मम दुःखप्रदं कर्तव्यं भवति । यूयं बुद्धिमन्तो बहुश्रुताः सामर्थ्यसम्पन्नाश्च । सुमहान् लोको युष्मान् सम्मन्यते । बहवो युष्माकमनुयायिनश्च । एतानि साधनानि यदि देशकल्याणाय युष्माभिरुपयुज्येरन् तर्हि येषां जनानां कल्याणाय

यूयं प्रयतध्वे ते जना सुखं लभेरन् । दशवत्सरात् प्राक् दयार्द्रबुद्ध्या शासनसस्थया यूयं कारावासात् समयात्पूर्वं विमुक्ता । अद्य यूयं वदथ ' एतादृशा लेखा राजकीयान्दोलनस्य शस्त्रं वर्तते' इति । अतो दृश्यते कीदृशं युष्माकमन्तरङ्गं व्याधिग्रस्तमिति । राजद्रोहपूर्णा युष्माकं लेखा. अत्याचारमुपदिशन्ति । भीरूणां घोरकृत्यानि न केवलं युष्माकं सम्मतानि, अपि तु अग्निगोलका लोककल्याणाय पृथिवीमवातरन्निति बुद्ध्या यूयं तेषां स्वागतं कुरुथ । शासनसंस्थाविषयको युष्माकं द्वेषो न नष्टः । भवादृशा वृत्तपत्रसम्पादकाः पृथिव्यां जीवन्ति इति शाप एव भुवः । कति दण्डो युष्माकं योग्यो भविष्यति इति मया सम्यक् चिन्तितम् । दण्डं श्रुत्वा जना वदिष्यन्ति 'अल्पोऽयं दण्ड. । न्यायमूर्तिभि. अस्थाने दया दर्शिता' । परं यथाऽपराधस्तथा दण्ड इति न्यायेन योग्योऽयं दण्डः । अत. प्रथमद्वितीयापराधयो. कृते षड्वर्षभोग्यं द्वीपान्तरकारावासं, तृतीयापराधस्य कृते रूपकाणां सहस्रं अहं युष्मान् दण्डयामि " इति ।

अनन्तरं शासनसंस्थाविधिज्ञस्य विज्ञप्त्या लोकमान्याश्चतुर्थादोषारोपान्मुक्ता. । समापितेऽस्मिन् राजद्रोहाभियोगप्रकरणे न्यायासनादुत्थिता न्यायाधीशमहाशया. । सपद्येव रक्षापुरुषाधिकारिणो लोकमान्यान् बन्दिनः कृत्वा तै. सह निर्गता. । बहुलो जनसमूहो न्यायालयात् प्रचलित. । शेषः रक्षापुरुषैः अर्धचन्द्रं दत्त्वा बहिर्निष्कासित. ।

## १२ लोकक्षोभः

इयं लोकमान्यानां दण्डवार्ता विद्युद्वेगेन लोकेषु प्रसृता । प्रात.काले पण्यवीथिकायां विक्रयस्थानानि नोद्घाटितानि । श्रमिका. यन्त्रगृहं न गताः । व्यवसायिनो व्यवसायं नान्वसरन् । सर्वो जनो दु.खितो भूत्वा तूष्णीं स्थित. । न कोऽपि जन. स्वव्यवसायमनुगन्तुं कामयते । एवं स्थिते रक्षापुरुषास्तेषामधिकारिणश्च क्रुद्धाः । सर्वेषां लोकव्यवहाराणामवष्टम्भः तैर्न सोढ. । हठादापणानुद्घाटयितुं रक्षापुरुषैरापणिकेभ्यो भयं दर्शितम् । तेन महान् संक्षोभ. समुत्पन्नः । संक्षोभे जाते रक्षापुरुषैरग्न्यस्त्रेण गुलिकाप्रक्षेपणं कृतम् । तेनासन्नपञ्चसप्तविजना विद्धाः, केचन मृताश्च ।

## १३ कारागृहगमनम्

प्राड्विवाकेन दण्डकथनानन्तरं लोकमान्यान् तैलशकटे स्थापयित्वा रक्षापुरुषाधिकारिणः 'बी. बी. सी. आय्.' नाम्नः लोहमार्गस्य अग्निरथस्थानं गताः। तत्रैकदेशे एकोऽग्निरथः स्थित आसीत्। तस्मिन् लोकमान्यान् स्थापयित्वा सर्वाणि द्वाराणि वातायनानि च पिधाय स धूम्रशकटः 'अहमदाबाद'नगरं प्राप्तः। अग्निरथप्रस्थानकालपर्यन्तं सारथिना वा रक्षकेण वा केनापि न ज्ञायते कुत्र गन्तव्यं वर्तत इति। लोकमान्यानां जामात्रा तथा भागिनेयेन 'धोंडोपंत विद्वांस' महाशयेन इयं वार्ता श्रुता। सपद्येव ताबुभौ तत्र गत्वाऽधिकारिणं दृष्ट्वा लोकमान्यानपश्यताम्। कारागृहवेषस्तेभ्यो नाद्यापि दत्तः। कारागृहस्थान्नमहं न भक्षयामीति लोकमान्यानामाग्रहः। तदा रुग्णालये यदन्नं दीयते तदन्नं तेभ्यो दत्तम्।

अनन्तरं 'सप्टेंबर'मासस्य दशमे दिवसे अहमदाबादकारागृहान्मुम्बापुरीं लोकमान्यानानीय प्रवहणमारोप्य रक्षापुरुषाधिकारिणः नौकाधिपतये आज्ञापत्रमयच्छन्। पूर्वमिवाधुनाऽपि न केऽप्यजानात् कुत्र गन्तव्यमिति। प्रस्थितायां नौकायां नौकाधिकारिणा पत्रमुद्घाटय वाचितं कुत्र गन्तव्यमिति।

अत्रान्तरे लोकमान्यानां विधिज्ञेन पृष्टे शासनाधिकारिणा कथितम् 'नियोजितस्थानमगाते टिळकमहाशये वार्ताकथनमयुक्तम्' इति। अचिरादेव शासनसंस्थयाऽऽज्ञापत्रकेणोद्घोषितम् 'तृतीयापराधविषयको रूपकसहस्रपरिमितो दण्डः क्षान्तः। अन्यच्च। द्वीपान्तरे कारावासः सामान्यतः सश्रमकारावासः। परं लोकमान्यविषये सश्रमकारावासः श्रमविरहितः कृतः' इति। काममेषा शासनसंस्थायाः कृपादृष्टिः। अन्यथा पश्चिमे वयसि वर्तमानैर्लोकमान्यैः कथमिदं सहिष्यते इति न कल्प्यते।

अस्य निर्णयस्य परीक्षणार्थमाङ्ग्लद्वेशे अतिवरिष्ठन्यायालये प्रार्थनापत्रं समर्पितम्। परं सर्वं तन्मोघं जातम्।

## १४ केळकरमहाशयेषु अभियोगः

जुलैमासस्य द्वाविंशे दिने अभियोगनिर्णयो जातः। षड्विंशस्य दिवसस्य मराठापत्रस्यावृत्तौ 'तात्यासाहेब केळकर'महाशयैरभियोगस्य समा-

लोचनं कृत्वा एको विस्तृतोऽग्रलेखो मुद्रितः। वरिष्ठन्यायालयन्यायमूर्तिभिस्तं लेखं वाचयित्वा 'अवमानिता न्यायदेवताऽनेनाग्रलेखेने'ति मनसि निधाय अभियोगायानुज्ञा दत्ता। 'ज्ञानप्रकाश'पत्रेणापि समानार्थकोऽग्रलेखः आदौ प्रकाशित आसीत्। तस्मादुभयपत्रसम्पादकेषु न्यायदेवतावमानविषयकोऽभियोगः कृतः। मराठावृत्तपत्रे लेखप्रसिद्धीकरणात्पूर्वं 'श्रीनिवासशास्त्रि'महाशयैस्तथा 'नटेश आप्पाजी द्रविड'महाशयैरयं लेखोऽभियोगशङ्कया वाचितः। परं तैर्न किञ्चित् तस्मिन्नाक्षिप्तम्। समग्रमग्रलेखं वाचयित्वा तैरुक्तम् 'अस्मिन् लेखे नैकोऽपि शब्दः परिवर्तनीयः' इति। एवं समाहितेषु तेषु न केनापि किञ्चित् शङ्कितम्। परं नूतनाभियोगस्य पूर्वसूचना रक्षापुरुषाधिकारिणा केळकरमहाशयेभ्यो दत्ता। इमां वार्तां श्रुत्वा प्रतिपक्षस्यापि मनांसि दुःखितानि। किमुत स्वपक्षस्य।

उभावपि सम्पादकौ मन्त्रार्थं 'फेरोजशहा मेथा'महाशयान् द्रष्टुं गतौ। मेथामहाशयैः स्पष्टमेवोक्तम् 'अत्रभवतां पुरतो मार्गद्वयं वर्तते। एकः क्षमायाचनम्। अपरः प्रमाणैर्लेखस्य समर्थनम्। एवं कृतेऽपि न्यायाधीशदत्तदण्डः उपभोक्तव्यः' इति। बहुविमर्शानन्तरं तैर्निश्चितं क्षमापत्रं समर्थनानन्तरं दातव्यमिति।

अभियोगपरीक्षणे द्रविडमहाशयानां विधिज्ञेन क्षमायाचनविषये तेषां मनीषा प्रदर्शिता। क्रोधावेगवशात्तीव्रोऽग्रलेखो जातः। परं न्यायमूर्तिदावरमहाशयानामवमानने द्रविडमहाशयानां न बुद्धिः इति। अतो द्रविडमहाशया दोषमुक्ताः।

अनन्तरं केळकरमहाशयानामभियोगः परीक्षणार्थं गृहीतः। तेषां विधिज्ञा 'ब्रॅंप्टिस्टा'महाशयाः। तैः प्रतिपादितम् 'वृत्तपत्रसम्पादकोऽहमिति ज्ञात्वा यत्कर्तव्यं मम प्रतिभाति तन्मया कृतम्। स्पष्टशब्दैर्लोकमतप्रदर्शनं मम कर्तव्यं भवति। चर्चाविषयः लोकमान्यानां राजद्रोहाभियोगः। अतस्तस्य गुणदोषविवेचनमेव मम कर्तव्यमिति मम हेतुः। न न्यायमूर्तिदावरमहाशयानामवमाननम्। अतः परं न्यायमूर्तय एव प्रमाण'मिति।

न्यायालयनिर्णयः सूर्यप्रकाश इव स्पष्टः । स तु अयमेव । केळकर-महाशया रूपकाणां सहस्रं दण्डिताः । द्विशतं रूपका न्यायालयस्य व्ययार्थं दातव्याः। चतुर्दश दिवसान् कारावासः । एतावता कालेन यदि केळकरमहाशयाः क्षमायाचनपत्रं न दद्युस्तर्हि क्षमायाचनपत्रसमर्पणकालं यावत् तैः कारागृहे स्थातव्यमिति । दण्डकारणानि न्यायाधीशमहाशयैरेतानि लिखितानि । न्यायमूर्तिदावरमहाशयेषु कुटिलत्वारोपः केळकरमहाशयैर्लेखे कृतः । एवमारोपे सति तैः प्रतिपादितम् 'मम टीका सरला आसीत्' इति । अभियोगपरीक्षणकाले न्यायालयस्याधिकारविषये तैस्तिरस्कारबुद्धिः प्रदर्शिता । क्षमायाचनार्थं दत्तोऽवसरः तैः प्रत्याख्यातः । न्यायालयः यद्यपराधित्वेन निर्णयेत्तर्हि पश्चात् क्षमायाचनं कर्तव्यमिति तैर्विचारः प्रदर्शितः । एतादृशमौदासिन्यं न्यायालयेन नोपेक्षणीयम् । तस्मादयं प्रसङ्ग. केळकरमहाशयस्य विस्मृतिपथं यथा न गच्छेत्तथा मया एते दण्डनीया. । सामान्यजनेभ्योऽधिकं स्वातन्त्र्यं वृत्तपत्रसम्पादकेभ्यः किमर्थं दातव्यम् ? अभियोगस्य निर्णये जाते न्यायाधीशः सामान्यजनस्य चर्चाविषयो भवतीति वॅपूटिरटामहाशयैरुक्तम् । परम् अहमेवं मन्ये तस्यापि लेखनस्य काचिन्मर्यादा विद्यते । विफलेषु प्रयत्नेषु क्षमायाचनम् इत्यत्र न किमपि पौरुषम् । अतः क्षमायाचनं यावत् कारावासः केळकरमहाशयानां युक्तः इति ।

अनन्तरं केळकरमहाशयान् कारागृहं नीत्वा तत्र तेषां प्रवेशसंस्काराः कृताः । परं वेषान्तरं न कृतम् । वाचनार्थं पुस्तकानि दत्तानि ।

क्षमायाचनं विना यदा नान्या गतिरासीत्तदा केळकरमहाशयैः क्षमायाचनपत्रं चतुर्दशदिवसमात्रकारावासात्प्रागेव ऑक्टोबरमासस्य द्वादशे दिवसे समर्पितम् । अतस्ते बन्धनान्मुक्ताः ।



# १० मुक्तापर्व

## १ 'मंडाले'कारावासः

'मंडाले'नाम्नि नगरे कारागृहं समानीतेषु लोकमान्येषु कालक्रमेण सार्धपञ्चवर्षाण्यतीतानि । प्रत्यहं स एव नित्यक्रमः । लोकमान्यानां निवासार्थं एकः प्रकोष्ठो दत्तः । एकः सूदः तेषां सहचरः । कारागृहाधिकारिणो भिषग्वर्यश्च लोकमान्यानामतिथयः ।

लोकमान्यानां भागिनेयो 'धोंडोपंत विद्वांस'महाशयः वत्सरस्य सकृद्वा द्विर्वा लोकमान्यान् द्रष्टुं गच्छति स्म । तद्दर्शनमपि अधिकारिकार्यालयेऽभूत् । विद्वांसमहाशयेन लोकमान्यानां निवासस्थानमपि न दृष्टम् । प्रतिमासमात्मनो वार्तां निवेदयितुं पत्रलेखनायानुज्ञाऽऽसीत् । तेषां व्यवसायः अतिवरिष्ठन्यायालयं प्रेषणीयानामभियोगानां निर्णयपरीक्षणार्थं प्रार्थनापत्राणां टिप्पणीकरणं 'गीतारहस्य'ग्रन्थलेखनं च ।

## २ लोकमान्यकथितकारावासवृत्तान्तः

'मंडाले'नगरकारावासात् पुण्यपत्तनं समागतेषु लोकमान्येषु केसरिवृत्तपत्रवाचकानुग्रहार्थमेकं कारावासवृत्तनिवेदनं मुद्रितम् । तस्मिन्निवेदने संक्षेपतः सकलवृत्तान्तो विद्यते । अतो लोकमान्यैः स्वयं कथितं कारावासवृत्तं वयमत्र समासेनावलोकयामः ।

'अभियोगेन कारावासदण्डे जाते कस्यापि पुरुषस्य दर्शनं विना न्यायालयस्याधोभागे नीत्वा पूर्वनियोजिततैलशकटाभ्यन्तरे मां संस्थाप्य 'बी. बी. सी. आय्.'नामकस्य लोहमार्गस्याग्निरथविश्रान्तिस्थानं रक्षापुरुषा मामनयन् । तत्र पूर्वमेव विशेषबाष्परथः सन्नद्ध आसीत् । सारथिना सह रक्षापुरुषाणां संवादो जातः । कुत्र मां नयन्ति इति न केनापि मह्यं कथितम् । अन्येद्युः प्रभातेऽग्निरथविश्रान्तिस्थाने 'साबरमति'कारागृहस्याग्रतो बाष्परथोऽतिष्ठत् । 'अहमदाबाद'विभागप्रशासकस्तत्रोपस्थित आसीत् । स मां कारागृहमनयत् । तत्र मम भोजनव्यवस्था सश्रमकारावासबन्दिजनस्येव आसीत् । तेन मम भारपरिमाणं न्यूनं जातम् । अत-

श्वेरदुग्धघृतादिपदार्था मह्यं दत्ताः । द्वीपान्तरकारावासेन दण्डितोऽहं बहुदिवसानत्र न स्थास्ये इति मया ज्ञातमेव । अतः १९०८ वत्सरस्य सप्टेंबरमासस्य त्रयोदशे दिवसे कारागृहाधिकारी मां स्वकार्यालयमनयत् । मम प्रवासस्य सकला सामग्री तत्र आसीत् । कारागृहाद्बहिरग्निरथः सज्जोऽवर्तत । गुर्जरदेशीयो ब्राह्मणः सूदत्वेन नियुक्तः । अद्यावधि कारागृहवेषो मह्यं न दत्तः । परिधानवस्त्राणि, कञ्चुकः, उष्णीषं चेति मम वेषस्तत्रासीत् । सश्रमद्वीपान्तरकारावासदण्डः केवलकारावासत्वेन परिवर्तित इत्याज्ञापत्रकं मह्यं मण्डालेकारागृहे दत्तम् । बाष्परथद्वाराणि वातायनानि च पिहितानि । मम रक्षणार्थं (!) नव रक्षापुरुषा (!) आसन् । तेष्वेकः आङ्ग्लदेशीयः । अन्येऽष्टौ यवनाः । शनिमङ्गलादिनवग्रहा इव ते सर्वे मां परितः आसन् । एवं स्थितेऽपि एकस्मिन् स्थले 'जयतु टिळकमहाराजः' इति शब्दो मया श्रुत एव । प्रभातायां रजन्यामस्माकमग्निरथो मुम्बापुर्यां नौकाश्रयस्थानं प्राप्तः । 'हार्डिंग'नामकं प्रवहणमासीत् । तस्याधोभागे एकस्मिन् प्रकोष्ठे मम सूदः स्थापितः । अहोरात्रमहं तत्रावसम् । तीव्रो निदाघः । प्रत्यहं होरामात्रं नौकायाः ऊर्ध्वभागे रक्षापुरुषा मामनयन् । मुम्बापुरीं विहाय विना विश्रान्तिसुखं मम प्रवहणं नवरात्रानन्तरं 'रंगून'नामकं नौकाश्रयस्थानमगच्छत् । मम तत्र गमनात्प्रागेव रंगूननागरिकैर्ममागमनवार्ता श्रुता । आसन्नद्विसहस्रं जनाः नौकाश्रयस्थाने उपस्थिताः । प्रवहणान्मामवतार्य सन्निहितधूमशकटे मां, मम सेवकांश्च प्रवेश्य प्रस्थितोऽस्माकं सारथिः । अन्येद्युः प्रातःकाले अग्निरथो 'मंडाले'नामकं विश्रान्तिस्थानं प्राप्तः । तत्र कारागृहे पूर्वनियोजितस्थलं मां नीत्वा एकस्मिन् प्रकोष्ठे मम स्थापना कृता । विंशतिहस्तदीर्घं द्वादशहस्तविततं मम निवासस्थानम् ।

कारागृहं परितस्तुङ्गः प्राकार आसीत् । सर्वाणि द्वाराणि पिनद्धानि । मम प्रकोष्ठे एको विष्टरः, एको लेखनमञ्चः, एकं सुखासनम्, निद्रासुखार्थमेको मञ्चकश्च आसन् । पाकसिद्ध्यर्थं प्रथमं गुर्जरदेशीयः सूद आसीत् । मासेन कारावासात्तस्य मोक्षे जाते अपरः 'कुलकर्णी'नामकः पञ्चवर्षभोग्येण कारावासेन दण्डितस्तत्रानीतः । सोऽपि कालान्तरेण

गतः । अन्ते उत्तरभारतीय एको ब्राह्मणो मया सहासीत् । तण्डुल-गोधूमादिधान्यकणाः दुग्धघृतादिपदार्थाः तथा सप्ताहस्य सकृत् कानिचित् फलानि मह्यमाहाराय दत्तान्यासन् । गृहादानीतानि वस्त्राणि धारयितुमनुज्ञाऽऽसीत् । पाकार्थं स्थाल्यादिपात्राणि स्वधनेन क्रीतानि । विशेषस्तु पूगीफलभक्षणाय मह्यमनुज्ञा दत्ता । वाचनार्थं पुस्तकान्यासन् इति पूर्वमुक्तमेव । परं युगपत् चत्वार्येव पुस्तकानि सन्निहितानि स्युः इत्याज्ञया महत्सङ्कटं प्राप्तम् । अतो ब्रह्मदेशशासनसंस्थायै मया प्रार्थनापत्रं प्रहितम्, यत् ग्रन्थलेखनार्थं मया ग्रन्थसाहित्यमपेक्ष्यते । तस्मात्कृपयाऽनुज्ञा दातव्या इति । अनुगृहीतं मम प्रार्थनापत्रम् । अतो ग्रन्थलेखनार्थं पुस्तकसम्भारः सन्निहितो जातः । सर्वे ग्रन्थाः सम्यक् परीक्ष्य, तेषां पृष्ठसंख्यां प्रतिपुस्तकं विलिख्य मह्यं दत्ताः । लेखनार्थं लेखनपुस्तकान्यपि पृष्ठसंख्यां गणयित्वा दत्तानि । आसन्नचतुःशतं ग्रन्थसंख्या । एतान् सर्वान् ग्रन्थानधीत्य केवलं पञ्चस्वेषु मासेषु गीतारहस्यग्रन्थो लिखितः । परं पूर्वचिन्तने तथा लेखनानन्तरं न्यूनातिरिक्तदोषदर्शने बहुकालो व्यतीतः । स ग्रन्थः शासनसंस्थया नीतः । मम मुक्तासमये मह्यं न दत्तः ।

प्रतिमासं पुण्यपत्तनादेकं पत्रं समागतमासीत् । मासत्रयस्यैकवारं कस्यापि जनस्य दर्शनार्थमनुज्ञाऽऽसीत् । परं सा प्रायेण कुटुम्बीयजनस्य दर्शनार्थमुपयुक्ता । प्रकृतिस्वास्थ्यं सामान्यमासीत् । परं शरीरव्याधिरधिको जातः । परिणतवयसा पञ्चषा दन्ताः स्थानभ्रष्टाः । दूरस्थाः पदार्था न सम्यगवलोक्यन्ते, न वा शब्दाः श्रूयन्ते । 'कृतान्तकटकामलध्वजजरा' दूरतो दृश्यते ।

मम कारावासः समाप्तिपथमायातः । अतो मया सर्वे ग्रन्थाः प्रथमं प्रेषिताः । कारावासनियमानुसारतो द्वीपान्तरकारावासेन दण्डितो बन्दिजनो दण्डसमाप्तेः प्रागेव मासद्वयं स्वदेशं नेतव्यः इति नियमः । तेनैव नियमेन मम सकला व्यवस्थितिर्भविष्यतीति मयाऽपेक्षितम् । तथा जूनमासस्याष्टमे दिवसे कारागृहनिरीक्षको मामागत्य 'गमनार्थं सन्नद्धा भवते'ति मामाज्ञापितवान् । एकवादनवेलायां रक्षापुरुषाधिकारिणो मामग्निरथविश्रान्तिस्थानमनयन् । तत्र स्थितो बाष्परथो मां गृहीत्वा 'रंगून'नामकं

नौकाश्रयस्थानं प्राप्तवान् । तत्रस्था रक्षापुरुषा मां 'मेयो'नामके सेनाप्रवहणेऽस्थापयन् । कुत्र गन्तव्यमिति न केनापि मह्यं कथितम् । साम्प्रतं मातृभूमिं गच्छामीति तर्कयित्वा मयाऽपि न पृष्टम् । अस्मिन् प्रवहणे मया प्रथमं पुण्यपत्तनस्थरक्षापुरुषाणां मुखकमलानि दृष्टानि । तदा मयाऽनुमितम् एते मां पुण्यपत्तनं नेतुमागता भवेयुरिति ।

अस्माकं प्रवहणं 'मद्रास'नगरं प्राप्तम् । प्रवहणान्मामवतार्य अग्निरथविश्रान्तिस्थानं नीत्वा वाष्पशकटे रक्षापुरुषा मामस्थापयन् । सर्वाणि द्वाराणि तथा वातायनानि पिहितान्यासन् । कुत्र मां नयन्ति इति न कोऽपि मामवदत् ।

धूमशकटः पुण्यपत्तनस्याग्निरथविश्रान्तिस्थानं नियतकालमागतो भवेत् । परमहं तत्र न गतवान् । गुप्तचरागामुपप्रमुखाधिकारी पूर्वमेव 'दौंड'-नामकं वाष्परथविश्रान्तिस्थानमागत्य तत्रत्याधिकारिणा सह मन्त्रं कृत्वा निर्धारितवान् कस्मिन् विश्रान्तिस्थाने धूमशकटादस्मानवतार्यमिति । अतः पुण्यपत्तनस्य वाष्परथविश्रान्तिस्थानात्प्रागेव 'हडपसर'नाम्नि विश्रान्तिस्थाने वयमग्निरथादवतारिताः । तत्रस्थो विश्रान्तिस्थानाधिकारी अपि न ज्ञातवान् कथं तत्राग्निरथोऽतिष्ठदिति । विश्रान्तिस्थानाद्बहिर्गमनवेलायां द्वारस्थोऽधिकारी मां प्रवासानुज्ञापत्रं दर्शयितुमाज्ञापितवान् । रक्षापुरुषाधिकारिणं प्रति केवलमङ्गुलिनिर्देशो मया कृतः । अग्निरथविश्रान्तिस्थानाद्बहिर्द्वौ तैलशकटौ सन्नद्धावास्ताम्, तत्र वयं न्यपीदाम ।

मम बन्धमोक्षकालः समीपमागत इति मया ज्ञातमेव । अतो मासमात्रं मां 'येरवडा'नामके पुण्यपत्तनसमीपस्थकारागृहे रक्षापुरुषाः स्थापयिष्यन्तीति मया तर्कितम् । परं तत्र मम वासः सुगुप्तो न भविष्यति । अतो मामविलम्बेन मोक्ष्यन्ति इति मयाऽपेक्षितम् । परमहं न कमपि पृष्टवान् । ( अहो कियान् वाङ्निग्रहोऽयम् ! ) अग्रे रक्षापुरुषाधिकारिणां तैलशकटः, पश्चान्मम शकटः । एवंक्रमेण प्रस्थिता वयम् । येरवडाकारागृहमार्गो यदास्माभिर्मुक्तस्तदा मम संशयो निरस्तः । अग्रस्थतैलशकटो मध्येमार्गं निवृत्तः । एवं खिस्ताब्दस्य १९१४ संवत्सरे जूनमासस्य षोडशे दिवसे भौमवासरे मध्यरात्राद्गूर्ध्वमस्माकं तैलरथः 'गायकवाडवाडा' इति नाम्ना

प्रख्यातस्य सदनस्य पुरतः स्थिरीभूतः। मम तैलशकटे 'गायढर'महाशय-स्तथा 'सदावर्ते'महाशय आस्ताम्। तावुभौ मां कथितवन्तौ "मासमात्रो दण्डः शासनसंस्थया कृपया क्षान्त." इति। अनुगृहीतोऽस्मीत्युक्त्वा तेभ्यो धन्यवादान् वितीर्य मया कृतज्ञता प्रदर्शिता।

शासनसंस्थारक्षापुरुषैः सह समागताय गृहस्वामिने द्वारं कथमुद्घाटयितव्यमिति संशयेन मम द्वाररक्षकः 'धोंडोपंत विद्वांस'महाशयमाहूतवान्। समागते तस्मिन् अहं षड्वर्षानन्तरं मम सदनं पुनः प्रविष्टवान् इति।

## ३ कारावासानन्तरम्

द्वीपान्तरस्थ'मंडाले'कारागृहमुक्तान् पुण्यपत्तनस्थस्वगृहं मध्यरात्रे अकस्मादेव सुखरूपं समागतान् लोकमान्यान् सदनस्थो जनः सानन्दं साश्चर्यं सकुतूहलं स्निग्धमयेन चक्षुषा पुनः पुनः पश्यन्नपि न नयनतृप्तिमवाप। क्षणादेव दिवाभूता रात्रिः। उदितश्चैतन्यरविः। प्रकाशितं सम्पूर्णं सदनम्। व्यवहारकुशलो लोकमान्यानां भागिनेयो वार्तामिमां वयस्यगणाय कथयितुं क्षणादेव दूतान् विसृष्टवान्। मुहूर्तमात्रादेव आप्तजनैर्बन्धुवर्गैर्वयस्यगणैरपरिचितजनैर्नक्तमपि लोकमान्यसदनं समाकुलमभूत्। अहमहमिकया सर्वो जनः सादरं सप्रश्रयं लोकमान्यचरणौ स्पृष्ट्वा नमस्करोति समीपमुपविशति च। एवं याममात्रकालो गतः। अनन्तरमुषःकाले चतुर्वादनवेलाया विश्रान्तिसुखाय लोकमान्यैः प्रार्थनापूर्वकं विसृष्टोऽयं जनसमूहः।

इयमानन्दमयी वार्ता विद्युत्सन्देशैरखिलं भरतखण्डं वायुवेगेन प्रसृता। 'अपां तरङ्गेषु तैलबिन्दुरिव' लोकमान्या भारतीयेषु बहुलीभूताः। भारतवासिभिरभिनन्दनार्थं विद्युत्सन्देशाः प्रहिताः। वृद्धजनैराशीर्वादाः प्रेषिताः। प्रतिवचनार्थं कार्यालयः अहोरात्रमुद्घाटित आसीत्। द्वित्रान् दिवसान् समागतेभ्यो जनेभ्यो दर्शनदानं विना नान्यत् किमपि कार्यं कर्तुं लोकमान्या अशक्नुवन्।

लोकमान्यानां कारावासमुक्ततानिमित्तेनात्मनः आनन्दप्रदर्शनार्थमेका सभा निमन्त्रयितव्या इति पुण्यपत्तनस्थनागरिकाणां सार्वजनिकसभया निर्धारितम्। अतो भानुवासरे सन्ध्यासमये 'गायकवाडवाडा'नाम्नि

सदने सभाधिवेशनार्थं सम्भारः कृतः । पङ्वादनवेलायां सदनस्य विस्तीर्णं प्राङ्गणं जनसमाकुलमभूत् । सत्कारार्थं नागपुर-वन्हाड-खानदेश-नाशिक -सोलापुर-नगर-बेळगावादिप्रदेशेभ्यो वयस्यगणः समागत आसीत् । आसन्नपट्सहस्रं प्रेक्षकगणः । सपादपङ्वादनवेलायां 'दादासाहेब खापर्डे-चिंतामणराव वैद्य-दादासाहेब करंदीकर-बाळासाहेब देशपांडे-प्रा. विजापुरकरप्रभृतिवयस्यगणसमेता लोकमान्या यावत्सभास्थानं प्रविशन्ति तावत्कर-तालकनिनादेन 'जयतु जयतु टिळकमहाराजः' इति जयशब्देन निखिलो जनसमूहस्तेभ्यः स्वागतं व्याजहार । प्रस्तुतचरित्रलेखकेन प्रत्यक्षीकृतोऽयं स्वागतमहोत्सवः । इदमेव तस्य लोकमान्यानां प्रथमं दर्शनम् । तेषां कनिष्ठः पुत्रः श्रीधराख्यः फर्ग्युसनमहाविद्यालये लेखकस्य सुपरिचितोऽभूत् । तेन प्रकाशितं 'मम लेखनव्यवसायः' इति नामकं पुस्तकं श्रीधर-महाशयेन लेखकायावलोकनार्थमुपायनीकृतम् ।

सभाध्यक्षस्थानं 'महर्षि अण्णासाहेब पटवर्धन'महाशयैर्मण्डितम् । राष्ट्रियपक्षसंस्थाभिः नागपुर-वन्हाडादिविविधप्रदेशस्थलोकधुरीणैस्तथा प्रति-निधिभिर्लोकमान्येभ्यः पुष्पहाराः समर्पिताः । अनन्तरं लोकमान्या अभाषन्त । कारावासमोक्षणानन्तरं सभायामिदमेव तेषां प्रथमं भाषणम् । तेऽवदन् " सुखदुःखयोरेको भेदो वर्तते । 'स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति' इति कव्युक्तिः । परं संविभक्तं सुखं शतगुणेन वृद्धिं प्राप्नोति । इमं समुपस्थितं जनसमूहं विलोक्य मम बन्धमोक्षसुखं लक्षगुणं जातम् । द्वित्रैः शब्दैर्मां कुशलं प्रष्टुकामो जनो याममात्रं मत्समीप-मुपातिष्ठन् । परं प्रकृत्या क्षीणोऽहं सर्वैः सह वक्तुमसमर्थः । अतस्तान् सर्वानहं क्षमां याचे । नैतदहं दम्भेन वदामि । परं सत्यमिदम् ।

पट्समानन्तरमहं स्वजनेषु प्रत्यागतः । समन्तादवलोकनं स्मारयति मां 'रिप् व्हॅन् विंकल्'नामकस्य पुरुषस्य कथाम् । 'वॉशिंग्टन् आयर्व्हिन्'-नामकेनाङ्ग्लग्रन्थकारेण विरचिते 'स्केच् बुक्'नामके ग्रन्थे इयं कथा विद्यते । 'विंकल्'नामा पुरुषः बहून् संवत्सरानस्वपीत् । प्रबुद्धस्य तस्य निखिलं जगत् नूतनमाविर्भूतम् । सम्प्रति तद्वयस्थामहं सम्प्राप्तः । पट्सु वत्सरेषु अत्र किं जातम्, कति पुरुषा दिवं गताः, कति जीवन्तो वर्तन्ते

इति वार्तालेशोऽपि यथा मम श्रुतिपथं न यायात् तथा मम व्यवस्थितिः कारागृहे कृताऽऽसीत् । अनेन शासनसंस्थाकर्मणा अहमेवं मन्ये अखिलं जगन्मया विस्मर्तव्यमिति शासनसंस्थोद्देशः । अद्येदं लोककृतं स्वागतं वीक्ष्य जनो मां न व्यस्मरत् इति मे प्रतिभाति । मयाऽपि लोको न विस्मृतः । सर्वेषां जनानां प्रेमाविष्कारो यथा युष्माभिरत्र प्रदर्शितस्तथा मया कथं दर्शयितव्यः ? अशक्यप्रायमेतत् । परं ममापि युष्मासु पूर्ववत्स्नेहो वर्वर्ते इति युष्माभिः सत्यं मन्तव्यम् । षट्शरद्भ्यः प्राक् युष्माभिः सह मम यथाऽऽचारस्तथैधातः परं भवेदिति युष्माभिर्मन्तव्यम् । अथ यूयमपि मां यथापूर्वं स्वीकर्तुं समुत्सुका इत्यत्र बहुसंख्यया युष्माकमुपस्थितिः प्रमाणम् ।

आयत्यां यूयं किं करिष्यथ इति बहुभिर्जनैरहं पृष्टः । 'चक्षुःपूतं न्यसेत् पादम्' इति सुभाषितम् । वैदिकधर्मिणामियं पद्धतिः । येन मार्गेण गन्तव्यं वर्तते तस्मिन् किञ्चिज्जलसिञ्चनं कृत्वा पदं निधातव्यमिति । इयमेव सरणिरस्माभिरनुसरणीया । अस्माकं पन्थाः शुद्धो वाऽशुद्धो वा इति न ज्ञायते । तस्मान्मया यन्मौनं विधृतं तद्युक्तियुक्तमिति युष्माभिर्ज्ञातव्यं भवति । मया किञ्चिद्विस्तरेण वक्तव्यमित्युपस्थितानां जनाना मनोरथः स्यात् । परं प्रेमावेगात्तथाऽऽचरणं न युक्तम् । ग्रन्थस्य प्रस्तावना मया दर्शिता । ग्रन्थस्वरूपं युष्माकं मनस्यनेन प्रस्तावेन समुद्भवेत्" इति । उपस्थितजनेभ्यो धन्यवादान् दत्त्वा लोकमान्यैरात्मनो वक्तव्यं समापितम् ।

यथा जनैस्तथा केसरिणाऽपि आनन्दः प्रदर्शित. । लोकमान्यानामनुपस्थितौ केसरिपत्रस्य सम्पादकत्वं 'तात्यासाहेब केळ्कर'महाशयैः स्वीकृतम् । स्वीकृते सम्पादकत्वे संवत्सरादेव शासनसंस्थया मुद्रणविषये विधेयकं सम्मतं कृतम् । तस्याघातः केसरिपत्रे पतितः । अतः कारागृहं गतेषु लोकमान्येषु केसरिपत्रेण मुमूर्षुणा न भाव्यमित्याकाङ्क्षया केळ्करमहाशयैस्तत्पत्रं तथा सम्पादितं यथा षट्समानन्तरं लोकमान्यैस्तत्पत्रं जीवदेवावलोकितम् । केळ्करमहाशयानां मनसि स्थितेयमाकाङ्क्षा परमेश्वरेण कृपया पूरिता इति कृत्वा तैरात्मनः कृतज्ञता केसरिपत्रे 'मुक्ताः टिळकमहाशयाः' इति शीर्षकं दत्त्वाऽग्रलेखेन प्रदर्शिता ।

## ४ गृहे कारावासः

बन्धमोक्षणानन्तरं लोकमान्या जनानामन्तःकरणेषु महत्स्थानं लभेरन्निति बुद्ध्या शासनसंस्थयाऽऽज्ञापत्रेण तेषां दर्शनमपि प्रतिषिद्धम् । 'यथा राजा तथा प्रजाः' इति न्यायेन कोल्हापुरछत्रपतिनाऽपि आज्ञापत्रेण तथा उद्घोषितम् । कैश्चित्तत्सम्भावितम् । कैश्चिदसम्भावितम् । अनेनाज्ञापत्रेण शासनसंस्थया क्षुद्रबुद्धिः केवलं प्रदर्शिता । अधिकारिणामपि विवेको नष्टः । एकमस्य निदर्शनं दृष्टम् । 'बेळगाव'पत्तनस्थाः 'दत्तोपंत वेळ्वी' महाशयाः पुण्यपत्तने लोकमान्यानां दर्शनं गृहीत्वा प्रत्यागताः । तदा बेळगांवविभागप्रशासकः वेळ्वीमहाशयानाहूय साटोपं पृच्छति स्म ।

प्रशासकः— यूयं टिळकमहाशयं द्रष्टुं गता इति श्रूयते । अपि सत्यमेतत् ?

वेळ्वीमहाशयः— अथ किम् ।

प्रशा०— अपि ज्ञायते युष्माभिः शासनसंस्थायाः आज्ञापत्रम् ?

वेळ्वी०— अपि ज्ञायते युष्माभिः कोऽहमिति ? स्वतन्त्रव्यवसायी विधिशास्त्रज्ञोऽहम् । नाहं मन्ये यत् लोकमान्यान् द्रष्टुमहं गतवान् इति कृत्वा वरिष्ठन्यायालयो मम विधिशास्त्रज्ञाधिकारपत्रं निरस्यतीति । अन्यच्च । अहं विधिमण्डलसदस्यः । विधिमण्डले यदा एतादृशं विधेयकं सदस्यानां सम्मतं भवेत्तदाऽयदयं विचारणीयं स्यात् ।

अनेन प्रकारेण अस्याज्ञापत्रस्यानादरो बहुभिः कृतः । अन्यच्च । आज्ञापत्रेण लोकमान्यदर्शनप्रतिषेधः कृतः । परं सभासु तेषां नामघोषः कथं निरोद्धव्य इति प्रश्नः । तस्यापि समयो गणेशोत्सवेनोपस्थितः । पुण्यपत्तनस्थप्रशासकेनाज्ञापत्रकेणोद्घोषितम् ( १ ) गणपतिनाम विना न कस्याप्यन्यस्य नामघोष. कर्तव्यः । ( २ ) पूर्वानुज्ञां विना सार्वजनिकस्थलेषु पद्यानि न गेयानि । न वा व्याख्यानान्यनुष्ठेयानि । ( ३ ) राजद्रोहापराधेन दण्डितानां पुरुषाणां चित्राणि न प्रदर्शनीयानि , न वा पुष्पहारैः मण्डनीयानि । शासनसंस्थाऽनुज्ञया प्रशासकेनैकेन पत्रेण लोकमान्या अपि निवेदिताः यत्तैः श्रीगणेशमूर्तीनां सम्मेलने न प्रवेष्टव्यमिति । लोकमान्यानपि तत्सम्मतम् । भवत्वेतत् । परं शासनसंस्थायाः क्षुद्रत्वं परां कोटिं गत-

मासीत् । तथाऽऽज्ञापितम् 'लोकमान्यानां द्वौ पुत्रावपि मूर्तीनां सञ्चलने न ग्रहीतव्यौ, यतस्तेषां सत्कारे कृते परम्परया लोकमान्या एव सत्कृता भवन्ति । अतस्तदपि न करणीय'मिति । परम् एतादृशेन शासनसंस्थाया आचारेण लोकमान्यानां प्रतिष्ठा लोकेषु न ऊनाऽभवत् । प्रत्युत वृद्धिं प्राप्नोत् । एवं शासनसंस्था लोकमान्यानां महत्त्वं नासहत ।

एतादृशः शासनसंस्थाया आचारोऽपमानास्पद इति लोकमान्या अमन्यन्त । अतो रक्षापुरुषाणामेतद्बन्धनं दूरीकर्तुं लोकमान्या आङ्ग्लदेशे प्रायतन्त । तत्रत्या अधिकारिणोऽपि इमं प्रकरणं व्यमृशन् । परम् अनेन समयेन ( ४-८-१९१४ ) अकस्मात्प्रथममहायुद्धं समुद्भूतम् । सङ्कट-ग्रस्तः आङ्ग्लदेशः । अपेक्ष्यते शासनसंस्थया सर्वेषां जनानां सहानुभूति-र्भारतदेशे । तस्मादेतदपमानास्पदं लोकमान्यदर्शनबन्धनं तया कथं दूरीकृत-मित्यत्रावलोक्यते ।

## ५ लोकमान्यनिवेदनम्

अनेन महायुद्धप्रसङ्गेन लोकमान्यैरात्मनो विचारा एकस्मिन्निवेदने केसरिपत्रे प्रकाशिताः । शासनसंस्थया तदेवापेक्षितम् । एतन्निवेदनं केसरिपत्रे मराठीभाषायां, मराठापत्रे आङ्ग्लभाषायां मुद्रितम् । लोक-मान्यैर्लिखितम् "षण्णां वर्षाणां ममानुपस्थितौ भारतदेशे यज्जातं तत्सर्वं समालोच्याहमेवं मन्ये भारतदेशः शनैः शनैरात्मनो ध्येयमाक्रमते । शासन-संस्थयाऽप्येतदधुना ज्ञायते यद्राजकार्यविषये लोकेभ्यः केचनाधिकारा दातव्या इति । अतोऽधिकारिणः प्रजादुःखानि निवारयितुं प्रायतन्तेति दृश्यते । अनया रीत्या प्रजानां मनस्यधिकारिणां विषये विश्वासः समुत्पद्येत । अथायं विश्वासः सहकाराय, सहकारः स्फूर्तये, स्फूर्तिः समुन्नमाय कल्पेत ।

अन्यदप्येतदुच्यते । ममानुपस्थितौ भारतदेशे तथाऽऽङ्ग्लदेशे आङ्ग्लसम्पादितवृत्तपत्रेषु मम लेखानां या मत्कृतानामान्दोलनानामेतादृशो वाक्यार्थो विशदीक्रियते यन्मया प्रत्यक्षाप्रत्यक्षमत्याचाराय प्रोत्साहनं दत्तम् । तथा मया भाषणैराङ्ग्लानां राज्यं समूलमुन्मूलयितुं यत्नः कृतः । चिरोल-महाशयसम्पादितग्रन्थे एतन्मयं दृश्यते । तिरस्करणीयमेतत् । तदानीमहं

कारावासे वर्तमानः समर्थयितुं वा प्रतिपादयितुं वाऽसमर्थ आसम्। अतो मयाऽधुना तत् कठोरशब्दैर्निषिध्यते।

राज्यव्यवस्थाविषये शासनसंस्थया सहास्ति मम मतभेदः। न विरोधः। परं तेन मम भाषणानि वा कृत्यानि वा शासनसंस्थाविषये जनानां मनसि द्वेषबुद्धिं जनयन्तीति लेखनं लेखकस्य मनोविकृतिमेव द्योतयति। अत्याचारा मया नैकवारं निषिद्धाः।

आङ्ग्लराज्यपद्धत्या भारतदेशस्य विविधलोकानां तथा जातीनामेकीभवनेन कालान्तरे संयुक्तभारतराष्ट्रनिर्माणस्य महान् सम्भव इति कृत्वा आङ्ग्लानां शासनाद्भारतवासिनां बहवो लाभा अजायन्तेति यदुच्यते तद्युक्तमित्यस्माभिः सम्यग् ज्ञायते। अत. आङ्ग्लदेशस्यायं महायुद्धरूपो विपत्कालोऽस्माकमाङ्ग्लदेशविषयिकां निष्ठां दर्शयितुमुपकारकः समयः। आङ्ग्लदेशस्य सङ्कटकालो भारतस्य लाभावसरः इति ज्ञात्वाऽस्मिन्समयेऽस्माभिर्भारतवासिभिराङ्ग्लेभ्यः सहकारोऽवश्यं दातव्यः। पूर्वस्मिन् कालेऽस्माभिरेवमेव कृतम्। अतोऽस्माकमेतन्मतप्रदर्शनाय सर्वेषां पक्षाणां, विविधानां जातीनां, धनिनां निर्धनानां, वृद्धानां तरुणानां, नराणां नारीणामेका सभाऽविलम्बेन पुण्यपत्तने निमन्त्रयितव्या" इति।

अनेन लोकमान्यानां निवेदनप्रकाशनेन महान् लाभो जातः। सपदेव शासनसंस्थया लोकमान्यदर्शनप्रतिबन्धात्मकमाज्ञापत्रकं प्रतिसंहृतम्। महान् सङ्कटकालोऽयमिति ज्ञात्वा पुण्यपत्तनप्रशासकेन महायुद्धनिमित्तेन युद्धवार्तामुद्रणविषये चर्चा कृता। जना अपि सहकाराय सज्जा अभूवन्। लोकमान्याः सार्वजनिकसभासु अध्यक्षपदं स्वीकृत्य पुनर्देशकार्योन्मुखा अभूवन्। गणपत्युत्सवप्रसङ्गेन केसरिपत्रकार्यालये करंदीकर-परांजपेमहाशयानां व्याख्यानसमये अध्यक्षपदं स्वीकृत्य लोकमान्यैः सभायां भाषितम्। तथा सप्टेंबरमासस्य ऊनविंशतितमं दिवसमारभ्य चत्वारि दिनानि भगवद्गीतारहस्यमधिकृत्य तेषां प्रवचनान्यभूवन्।

# ११ ग्रन्थपर्व

## १ वेदकालनिर्णयः

अध्यापने संशोधने च रमते मम मानसम् । कालचक्रवशाद्राजकारणं मम जीवनकार्यं सञ्जातमिति लोकमान्यानामुद्‌गारा बहुभिर्जनैः श्रुताः । दैनंदिनकार्यं कुर्वाणा लोकमान्या यथावसरं संशोधनकार्यं चिन्तयन्ति स्म । साम्प्रतं राजकारणं तेषां स्वभावः । परं संशोधनकार्यं तेभ्यो बहु रोचते । मॅक्समुल्लरमहाशयेभ्यः प्रेषिते पत्रे लोकमान्यैरेवमेव लिखितम् 'यदा मयाऽवसरो लभ्यते तदा तं कालमहं प्राचीनसंस्कृतिसंशोधनेन वा वेदवाङ्मयसंशोधनेन वाऽतिवाहयामि ' इति ।

संशोधनकार्यस्यास्य प्रथमं फलं 'ओरायन् ' नामको वेदकालनिर्णयविषयकः आङ्ग्लभाषायां लिखितो ग्रन्थः । १८९३ संवत्सरे अस्य अपत्यस्य जननम् । आङ्ग्लदेशस्थ'लंडन'नगरे 'ओरिएंटल् काँग्रेस्'-नामिकायाः प्राच्यविद्यासभाया अधिवेशने वाचनार्थं लोकमान्यैरस्य ग्रन्थस्य सारांशः प्रहितः, सभायाः प्रतिवृत्ते मुद्रितश्च ।

'आर्क्टिक् होम इन् दि वेदाज्'नामकः आर्याणां मूलस्थानविषयको लोकमान्यानां द्वितीयो ग्रन्थः । अयं ग्रन्थः १९०३ संवत्सरे प्रसिद्धिं गतः । परस्परपूरकमिदं ग्रन्थद्वयमिति लोकमान्यैः स्वयमेव प्रस्तावनायां लिखितम् । ते प्रतिपादयन्ति 'वेदकालनिर्णये पाश्चात्त्यपण्डितैर्वेदवाङ्मयस्य कालखण्डाः प्रकल्पिताः । एकैकस्य खण्डस्य कालावधिः सामान्येन कल्पितः । अनया कालगणनया ख्रिस्तशकात्पूर्वं सार्धसहस्रद्वयपरिमितो वेदवाङ्मयकालः सम्प्राप्तः । अतीव स्थूलेयं कल्पना, प्रमाणदृष्ट्या अनिश्चिता च । पाश्चात्त्यैर्वेदवाङ्मयस्य प्रतिखण्डाय अल्पकालः प्रदीयते । वेदवाङ्मये विद्यमानानि ज्योतिषविषयकविधानानि विचिन्त्येयं कालगणना ख्रिस्तपूर्वपद्यसहस्रवर्षपर्यन्ता दृश्यते । 'केतकर'प्रभृतिज्योतिर्विद्भिः पूर्वमेवेदं प्रमाणीकृतमासीत् । परं पाश्चात्त्यपण्डिता. कथमेतत्सम्मन्येरन् ! भिन्नपद्धत्या संशोधिते वेदवाङ्मये कदाचिदन्यान्यनुमानानि सन्दृश्यन्ते इति सामान्य-

त्वेन तैरनुज्ञातम् । पञ्चसहस्रवर्षकालः 'ब्लूमफील्ड'महाशयैः सम्मतः । अतो लोकमान्यैरधिकं संशोधनं कृतम् । भूगर्भभूस्तरशास्त्रादिभिस्तथा प्राचीनवस्तुसंशोधनेनैतत्कार्यं सुकरं जातम् । अनेन संशोधनेनायं कालो लोकमान्यैः ख्रिस्तपूर्वाष्टसहस्रवर्षपर्यन्तं नीतः ।

मानवजातौ ऋग्वेदोऽतिप्राचीनः इति पण्डितानां मतम् । वेदकालनिर्णयस्य द्वे साधने, भाषाशास्त्रं ज्योतिषशास्त्रं च । मॅक्समुल्लरादिपाश्चात्यपण्डितैर्भाषाशास्त्रपद्धतिः स्वीकृता । तां स्वीकृत्यापि ज्योतिषशास्त्रसाहाय्येनान्यानि प्रमाणान्युपलभ्यन्ते इति कृत्वा लोकमान्यैर्ज्योतिषशास्त्रपद्धतिरवलम्बिता ।

छन्दःकालो मन्त्रकालो ब्राह्मणकालः सूत्रकालश्चेति चतुरो विभागान् परिकल्प्य, तेभ्यः शरदां द्विशतं कालं दत्त्वा वेदकालः ख्रिस्तपूर्वद्वादशशतसंवत्सरपरिमित इति मॅक्समुल्लरमहाशयैर्निर्णीतम् । 'डॉक्टर हौ' महाशयैर्वत्सराणां पञ्चशतं दत्त्वा वर्षाणां चतुर्विंशतिशतं गृहीतम् । लोकमान्यैरयं मार्गः प्रत्याख्यातः ।

संवत्सरे सूर्यस्य गतिरेकदा उत्तरां दिशमुद्दिश्य भवति, षण्मासानन्तरं दक्षिणां दिशमुद्दिश्य भवतीति ज्ञायते अज्ञैरपि । प्रत्यक्षमिदम् । आक्रमवृत्तस्य शेखरं प्रति सवितुर्गमनं संवत्सरस्य द्विर्दृश्यते । षाण्मासिकमिदम् । उत्तरां दिशमुद्दिश्य सूर्ये गच्छति, यदा दिनरात्रिसाम्यं भवति तदा वसन्तसम्पातः । दक्षिणां दिशमुद्दिश्य गच्छति सूर्ये यदा दिनरात्रिसाम्यं भवति तदा शरत्सम्पातः इति लोकैरुच्यते । वसन्तसम्पातकाले सविता रेवतीनक्षत्रात् प्राक् अष्टादशसु अंशेषु विद्यते । वसन्तसम्पाते सूर्यस्य भ्रमणं येषु नक्षत्रेषु वर्तते तानि सर्वाणि चलन्ति । अतिसूक्ष्मगत्या तेषां चलनम् । सम्पातचलनगतिर्ज्योतिषैर्निश्चिता । तस्याः आधारेण गणितशास्त्रदृष्ट्या ज्योतिषा वर्णयन्ति कस्मिन् काले कस्मिन्नक्षत्रे वसन्तसम्पातो भवतीति । वेदाङ्गज्योतिषकाले अयं वसन्तसम्पातो भरणीनक्षत्रस्थाने दशसु अंशेष्वभवत् । अवश्यस्य कालः ख्रिस्तपूर्वं त्रयोदशशतवर्षाणि ( १३०० ) । तैत्तिरीयब्राह्मणे वसन्तसम्पातः कृत्तिकानक्षत्रे आसीदित्यनुमीयते । ऋग्वेदेऽयं वसन्तसम्पातो मृगशीर्षनक्षत्रे आसीत् ( Orion -

आग्रयण )। अतः ऋग्वेदकालः ख्रिस्तपूर्वचतुःसहस्रवर्षपरिमितो लक्ष्यते। अतः इदं पत्रकमुपलभ्यते।

| | | |
|---|---|---|
| अदितिकालः | ख्रिस्तपूर्व-६०००तः ४०००यावत् | पुनर्वसुनक्षत्रात् मृगशीर्षनक्षत्रे वसन्तसम्पातपर्यन्तम् |
| मृगशीर्षकालः | ख्रिस्तपूर्व-४०००तः २५००यावत् | मृगशीर्षनक्षत्रतः कृत्तिकायां वसन्त-सम्पातपर्यन्तम्। |
| कृत्तिकाकालः | ख्रिस्तपूर्व-२५००तः १४००यावत् | कृत्तिकातो भरणी-नक्षत्रे वसन्त-सम्पातं यावत्। |

एवं ख्रिस्तपूर्वचतुःसहस्रवर्षाणि ऋग्वेदकालः, तस्मादार्यसंस्कृतिः सर्वासु संस्कृतिषु ज्येष्ठा श्रेष्ठा च दृश्यते।

संक्षेपतः 'ओरायन'ग्रन्थतात्पर्यमेतादृशम्। प्रथमतो वेदकालनिर्णय-महत्त्वं तथा च पण्डितैरवलम्बिता विविधाः पद्धतीः कथयित्वा वैदिककाले विद्यमानं पञ्चाङ्गं, यज्ञकालं, वर्षारम्भं च निर्णयैकस्मिन् काले वसन्त-सम्पातः कृत्तिकानक्षत्रे अवर्ततेति प्रतिपाद्य, कृत्तिकानक्षत्रे वसन्तसम्पाते सति कः कालो निश्चितो भवतीति प्रमाणैर्विवेचितम्। अनन्तरमयं वसन्त-सम्पातो मृगशीर्षेऽभूदित्यस्मिन् विषये मृगशीर्षनक्षत्रस्यान्यन्नाम आग्रयण-मित्यस्य व्युत्पत्तिविचारः कृतः। तदपि नक्षत्रमेकदा प्रथममासीति दर्शितम्। आग्रयणशब्दव्युत्पत्तौ कुतर्काः कथं कल्पिता इति निवेद्य सम्पातान्दोलन-कल्पनायाः सम्भाव्यं कारणं दत्तम्। मृगशीर्षविषयकाः मन्त्रब्राह्मण-पुराणेषु विद्यमानाः कथास्तथैव 'ग्रीक'पौराणिककथाः कथयित्वा ग्रन्थ-कारेण तासां साम्यं दर्शितम्। ग्रीकाणाम् 'ओरायनः' तस्य मेखला, अस्माकं यज्ञप्रजापतिः तस्य यज्ञोपवीतम्, 'झरथुष्ट्र'नुयायिनां होमः ( सोमः? ) तस्य मेखला च, सर्वेषामेतेषां साम्यं दर्शयित्वा ग्रीकाणाम् 'ओरायन'शब्दो वैदिकानाम् 'आग्रयण'शब्दात् सिद्धो भवतीति प्रति-

टिळक-कुटुंबातील मंडळी



कै. दुर्गाताई वैद्य, लो. टिळक व कै. श्रीधरपंत टिळक, कै. रामभाऊ टिळक वै. सत्यभामाबाई टिळक, वै. पार्वतीबाई केतकर व श्री. अ. वि. केतकर (डा.) सौ. मथूताई (रमाबाई) साने

लो. टिळक घरगुती पोशाखात



राष्ट्रीय सभेतर्फे विलायतेस गेलेलें शिष्टमंडळ, सप्टेंबर १९१८



बाबू बिपिनचंद्र पाल, डॉ पी जे मेथा, लो टिळक, ना खापर्डे,
ना विठ्ठलभाई पटेल, न चिं केळकर

पादितम् । सर्वेषामेतेषां मूलस्थानीया मृगशीर्षनक्षत्रे वसन्तसम्पातकल्पना । वैदिकजनस्य ज्योतिषज्ञानं निरूप्य वसन्तसम्पातो मृगशीर्षनक्षत्रेऽभूदित्यस्य प्रमाणार्थमेकः ऋग्वेदमन्त्रः तथैवैकं सम्पूर्णं सूक्तमुद्धृतं विवेचितं च । अन्ते वसन्तसम्पातः पुनर्वसुनक्षत्रे आसीदित्यपि दर्शयितुं प्रमाणानि गृहीत्वा एकैकस्य कालखण्डस्य मर्यादां कथयित्वा एतानि सर्वाण्यनुमानानि इतरेषामविरुद्धानीति दर्शितम् ।

अनेन संशोधनेन पाश्चात्यसंशोधकेषु विचारक्रान्तिः समुत्पादिता । कालनिर्णये ज्योतिषशास्त्रसाधनं सर्वैः परित्यक्तमासीत् । तदेव साधनं स्वीकृत्य लोकमान्यैरयं वेदवाङ्मयकालनिर्णयः कृत इति चित्रम् । बहवो विद्वांसोऽस्य पक्षस्य खण्डनेऽसमर्थाः । पूर्वग्रहदूषिताश्च दुर्बलास्ते मण्डने वा स्वीकारे वा । संशोधको 'जाकोबी' महाशयोऽनेनाधारेण प्रमुदितो जातः । तथैव अमेरिकाखण्डस्थेन संस्कृताध्यापकेन 'मॉरिस ब्लूमफील्ड' महाशयेन एकस्मिन् प्राच्यविद्याविषयव्याख्यानेऽस्य सिद्धान्तस्योल्लेखः कृतः ।

## २ आर्याणां वसतिस्थानम्

लोकमान्यानामन्यो ग्रन्थः 'आर्याणां वसतिस्थानम्' इतिनामकः । भूस्तरशास्त्रसिद्धान्तानामाधारोऽस्य ग्रन्थस्य । शास्त्रज्ञा वदन्ति 'ख्रिस्तपूर्वाष्टसहस्रवर्षेभ्यः प्राक् उत्तरध्रुवप्रदेशो मानववसतिक्षमः आसीत् । परं तत्र मानवानां वसतिरासीदित्यस्मिन् विषये निर्णायकानि साधनानि भूस्तरशास्त्रे नोपलभ्यन्ते । एतानि साधनानि ऋग्वेदे दृश्यन्ते इति लोकमान्यैः संशोधितम् । उत्तरध्रुवं परितो वर्तमानानां निसर्गरमणीयभूभागानां वर्णनम् ऋग्वेदे उपलभ्यते । एवं सति तद्वर्णनं वर्णयितारः कवयोऽपि ध्रुवमभितः न्यवसन्नित्यनुमीयते । अनेनानुमानेन केषांचिन्मन्त्राणामपि दुर्ज्ञेयोऽर्थः सुज्ञेयो भवति' ।

अस्मिन् ग्रन्थे लोकमान्यैरेवं प्रतिपादितं शास्त्रीयसंशोधनात्प्रागितिहासकालमर्यादा स्वल्पाऽऽसीत् । संशोधनेन सा ख्रिस्तशकात्प्राक् सुदूरं गता । यानि तत्त्वान्यगम्यानि वा याः कथाः काल्पनिका इत्यस्मासिरमन्यन्त तानि तत्त्वान्यधुना सुज्ञेयान्यासन् वा ताः कथाः साम्प्रतं सुबोधा जाता इति प्रथमप्रकरणे उक्तम् । द्वितीये प्रकरणे ऋतुपर्यायकारणं प्रतिपाद्य
२६

पृथिव्याः विविधविभागे जायमाना अन्तरिक्षविकाराः कथं भूताः, ध्रुवप्रदेशोऽपि एकदा कथमुष्ण आसीत्, कालक्रमेण स कथं शीतलोऽभवत्, हिमवृष्ट्या स भूभागो मानुपवसत्यै कथमयोग्योऽभवत्, पुनः शनैः शनैः कथमुष्णोऽभवदिति वर्णितम् । ऋग्वेदे विद्यमानं निसर्गवर्णनं दृष्ट्वा उत्तरध्रुवप्रदेशो मानुपवसतिक्षमः कल्प्यते । अनया कल्पनया न कस्यापि सिद्धान्तस्य हानिः, न कोऽपि दोपः । प्रत्युत नूतनसंशोधनेनास्याः कल्पनायाः समर्थनं भवति । तृतीयप्रकरणे ध्रुवप्रदेशो वर्णितः । निदाघसमयस्तत्र शीतः, उष्णश्च हेमन्तः । एवं तत्र सदैवासीत् वसन्तर्तुर्हिमप्रलयात्प्राक् । सविता दक्षिणस्यामुदेति । तारका नोद्यन्ति, नाप्यस्तं यान्ति । वर्तुलाकारं परिभ्रम्य ता अष्टसु प्रहरेपु प्रदक्षिणामेकां सम्पादयन्ति । तत्र षाण्मासिको दिवसः, पाण्मासिकी रजनी च संवत्सरं कुरुतः। हायने दिनमणिः सकृदुदेति, सकृच्चास्तमेति । रमणीयतमोऽत्रोषःकालः । चतुर्थप्रकरणे ध्रुवप्रदेशे विद्यमानः पाण्मासिको दिवसः पाण्मासिकी च रात्रिः ऋग्वेदे वर्ण्येते । इदमेव देवानामहोरात्रम् । देवयानपितृयाणसम्बन्धः संवत्सरस्य प्राचीन एव । एताः कल्पनाः पाश्चात्त्येष्वपि दृश्यन्ते । अतस्ताः सार्थाः साधाराश्चेत्यनुमीयते । पञ्चमे प्रकरणे उषसो विवेचनं कृत्वा तद्वर्णनपराणि वाक्यानि तथा मन्त्राश्चोद्धृताः । षष्ठे प्रकरणे प्रदीर्घदिवसानां तथा रात्रीणां विमर्शं कृत्वा सप्तमे मासानामृतूनां विवेकं प्रतिपादेदं दर्शितम्, यत् पुरा कदाचन सप्तमासात्मकं वा दशमासात्मकं वा वर्षमानमासीत् । पञ्चानामृतूनां संवत्सरोऽभवत् । सर्वाण्येतानि वर्णनानि पुराणान्तरे वर्तमानानि काल्पनिकानीति जना अमन्यन्त । परं सर्वमेतदैतिहासिकं सत्यमासीत्, तथैवेदं सर्वं ध्रुवप्रदेशे निवसद्भिर्जनैरन्वभूयतेति लोकमान्यानामनुमानपरम्परा । अष्टमे प्रकरणे दशमासानां कल्पनासिद्ध्यर्थं गवामयनसत्रपरीक्षणं कथमयुक्तमिति निर्दिष्टम् । नवमे प्रकरणे गूढवैदिककथानां निवेदनम् । विशेषेण इन्द्रवृत्रयोर्युद्धम् । अनयाऽहोरात्रोपपत्त्या अस्याः कथाया अर्थः सुसङ्गतो भवति । इन्द्रवृत्रयोर्युद्धबीजं प्रदीर्घा तमिस्रा । तस्या अनन्तरं प्रदीर्घः प्रकाशागमः । एतादृशं दृश्यं ध्रुवप्रदेशे दृश्यते । तत्रानुभूतेषु विषयेषु एतादृशीनां कथानामुद्गमः । दशमे प्रकरणेऽनया विचारसरण्या वैदिककथान्तर्गताः प्रातः-

कालिकदेवताः, विष्णुदेवतायाः त्रिपादविक्रमः, दाशराज्ञयुद्धं, दशमुखरावणः इत्यादीनां कल्पनानां प्रतिपादनं विद्यते । एकादशे झरतुष्ट्रानुयायिनां 'झेंदावेस्ता'नामके वेदे वर्तमानानि प्रमाणानि दत्त्वा, द्वादशे प्रकरणे गाथाशास्त्राधारेण पाश्चात्त्यकथा अपि वैदिकप्रमाणानां पोषकाः कथं भवन्तीत्यालोचितम्' । त्रयोदशे प्रकरणे सर्वाणि प्रमाणानि साकल्येन विमृश्य उत्तरध्रुवं परितो वर्तमानस्य वसतिस्थानस्य कालः ख्रिस्ताब्दात् प्राक् अष्टसहस्रसंवत्सरपरिमितः कथं निश्चितो भवतीति प्रतिपादितम् । एवं ध्रुवसमीपं वसतामार्याणां संस्कृतिः श्रेष्ठा प्राचीना चेति निश्चीयते । एषमार्याणामार्यधर्मस्य च मूलम् एवंरूपं प्राचीनम्–सनातनम् । अतस्तद्विषयकाण्यनुमानान्यपि स्थूलस्वरूपाणि । तथापि वेदोत्पत्तिवेदस्वरूपविषयकाण्यस्माकमृषीणां मतानि कथं सत्यानि, भूस्तरशास्त्रप्रतिपादितः प्रलयस्तथैव प्रलयोत्तरं जीवसृष्टेरुदयः, अनेनोदयेन प्रलयकाले विनष्टो वेदः अर्थशः पुनः कथं सम्भवति, अन्ते अनेन वेदसम्भवेन वेदानामनादित्वं कथं सिध्यतीति समालोचितम् ।

'ओरायन' तथा 'आर्क्टिक् होम् इन् दि वेदाज्' इति ग्रन्थद्वयस्य परीक्षणे कृते प्रथमः प्रमाणबद्धः, द्वितीयश्चित्तरञ्जकः उद्बोधकश्च दृश्यते । इयं विचारसरणिः पाश्चात्त्यानां नूतना । द्वितीया ग्रन्थपद्धतिः पाश्चात्त्यानां पौरस्त्यानामपि नवीना । प्रथमो ग्रन्थः वाचकाय रूक्षो भाति । परं द्वितीयः प्रतिभाजन्यकल्पनाविलासेन तथैव सर्वासां कल्पनानामेकस्मिन्नद्भुतप्रमेये पर्यवसानेन महदाश्चर्यमावहति ।

ननु इदं ग्रन्थद्वयमाङ्ग्लभाषायां किमर्थं लिखितमासीदित्याक्षेपे इदमुच्यते । पाश्चात्त्यसंशोधकानां दृष्टिपथमयं ग्रन्थः कथं गच्छेत्तर्हि आङ्ग्लभाषावगुण्ठनेनैतत्सुकरं भवेदिति विमृश्य आङ्ग्लभाषास्वीकारो लोकमान्यैः कृतः । पाश्चात्त्यपण्डितैर्निश्चितः कालो लोकमान्यैः प्रमाणैः खण्डितः । लोकमान्यानां राष्ट्रियभावनाया एको घटको विजयिष्णुता । पौर्वात्यपाश्चात्त्यसंस्कृत्योः सङ्घर्षे पौर्वात्यसंस्कृतेर्विजयोऽनेन ग्रन्थद्वयनिर्माणेन लोकमान्यैः सम्पादितः । सोऽपि विजयो भारतस्याभ्युदयार्थम् ।

## ३ गीतारहस्यम्

राष्ट्रकार्यधुरीणेपु ध्वज इवाग्रेसराः, लोकचित्तविजेतृपु धौरेयाः, लोकाग्रणीपु प्रथमश्रेणीमलंकुर्वाणाः, मधुमेहादिव्याधिग्रस्तशरीराः पश्चिमे वयसि वर्तमाना लोकमान्याः १९०८ संवत्सरे राजद्रोहाभियोगे पड्वर्षभोग्येण देशान्तरकारावासेन दण्डिताः। अचला इवाचलधैर्यवृत्तयः, क्षत्रिया इव जनदुःखविमोचनशीलाः, कवय इव कल्पनाऽऽकराः, पिपीलिका इव सततोद्योगशालिनः, ऋषय इव विशुद्धाचाराः, स्थितप्रज्ञा इवानवरतपरतत्त्वविवेकेन स्थिरबुद्धयो लोकमान्याः कारागृहे कथं तूष्णीं वसेयुः? चिन्तनपराणां तेपां मनसि एतावत्कालपर्यन्तं निश्चलीभूताः भगवद्गीताग्रथिततत्त्वज्ञानविचाराः वाक्शरीरधारणक्षमाः कर्मयोगशास्त्ररूपेण गीतारहस्यमित्यपरनामधेयेनाविरभवन्। गीतारहस्यग्रन्थस्य प्रस्तावनायां लोकमान्याः स्वयमेव लिखन्ति 'रुग्णशय्याऽऽसीनान् तातचरणान् श्रावयितुं भगवद्गीतावाचनं पोडशवर्षदेशीयैरस्माभिः प्रथमं कृतम्' इति। गीताश्लोकपारायणं वा तस्याः प्राकृतभापानुवादवाचनं वा प्रथमे वयसि वर्तमानानां लोकमान्यानां सम्पूर्णभावार्थज्ञानाय नालमासीत्। परम् अनेनाल्पपरिचयेन तेपां मनसि गीताध्ययनरुचिः समुत्पन्ना।

'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।' इति वचनानुसारतः कार्यान्तराभावाद्वेदग्रन्थसंशोधनेन वा भगवद्गीताभ्यासेन वा लोकमान्याः स्वकालं नयन्ति स्म।

इदानीं देशान्तरकारावासदुःखं सम्प्राप्तम्। अस्मिन् समये 'कृतान्तकटकामलध्वजजरा' जर्जरितदेहे, कुटुम्बीयजनवियोगदुःखदुःखितचित्ते, दूरीकृते वयस्यबान्धवगणे, निर्बन्धनिवृत्ते परमप्रियराजकारणसमुद्यमे, *शासनसंस्थाकृपाकटाक्षेण अनिच्छया प्राप्ते विश्रान्तिसुखे*, *भगवता* श्रीकृष्णेन योगयुक्तचेतसा गीतासूपदिष्टपरमात्मतत्त्वचिन्तनेन विना किमन्यत् लोकमान्यानां रुचये भविष्यति? पड्वर्षभोग्यकारावासावधेर्वर्षद्वयानन्तरं गीतारहस्यनिर्माणाय लोकमान्या मतिं चक्रुः। त्रिचत्वारिंशद्वर्षपर्यन्तं कृतस्य चिन्तनस्य सुधासदृशं सुमधुरमेतत्फलं गीतारहस्यं

नाम । तस्योपक्रमोपसंहारप्रकरणानुसारतः संक्षेपेणात्रावलोक्यते किं तद्रहस्यतात्पर्यमिति ।

गीताभाष्यादिसंस्कृतग्रन्थानां तथान्यभाषासु विद्यमानानां प्राचीनार्वाचीनग्रन्थानां परिशीलनेन पूर्वे वयसि जातसंस्कारे मनसि समुत्पन्नाऽऽशङ्का । दुर्योधनादिकौरवैः सह युद्धाय सन्नद्धोऽर्जुनः सेनयोर्मध्ये स्वं रथं स्थापयित्वा भीष्मद्रोणादिमहानुभावानां गुरुजनानां वधपातकमाकलय्य शोकसंविग्नमानसो जातः ।

'अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।' इति

तस्योक्तिः । एतदवस्थमर्जुनं युद्धाय प्रवर्तयितुकामेन भगवतोपदिष्टासु गीतासु केवलं ब्रह्मज्ञानविवेचनं वा मोक्षमार्गकथनं वा कथं सम्भवेत् ? निर्विण्णचेताः, निवृत्तकर्मा, संन्यस्तशस्त्रोऽर्जुनः समरभूमिं परित्यज्य, विविक्ते परमात्मतत्त्वचिन्तनपरो भूत्वा सुखं निवसेत् । युद्धकर्मणि प्रवृत्तः कथं स भवेदित्याशङ्कायाः समाधानं कर्मसंन्यासपूर्वकतत्त्वज्ञानप्रतिपादनमात्रेण न भवति । अतो लोकमान्यैर्भाष्यादिग्रन्थान् दूरीकृत्य भगवद्गीताचिन्तनं स्वतन्त्रबुद्ध्या कृतम् । तदा भगवद्गीता प्रवृत्तिरूपं कर्मयोगमार्गमुपदिशतीति दर्शनं समुत्पन्नम् । ग्रन्थतात्पर्ये मीमांसका एवं निर्णयन्ति—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥'

*अनेन निकषेण ग्रन्थोपक्रमदृष्ट्या गीतासु दृष्टिक्षेपे कृते किं लक्ष्यते ?*

'अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ १ ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥' २ ॥

इति अर्जुनोऽब्रवीत् । अनन्तरं समरभूमौ पितामहान्, आचार्यान्, भ्रातॄन्, पुत्रान्, पौत्रान्, सखीन् युयुत्सून् दृष्ट्वा विषण्णमना अर्जुनो ब्रूते—

'सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥

गाण्डीवं स्रंसते हस्तात्त्वक् चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥

अतः

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।

यत

स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ '

कुलक्षये जाते कुलधर्माः प्रणश्यन्ति । धर्मे नष्टे अधर्म कुलमभिभवति । तस्मात् कुलस्त्रियः प्रदुष्यन्ति । अनन्तरं सङ्करो भवति । सङ्करो नरकाय कल्पते । अनया परम्परया कुलधर्मा जातिधर्माश्चोत्साद्यन्ते । तेन नराणां नरके वासो नियतं भवतीति श्रूयते ।

' अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ '

यदि मामशस्त्रं शस्त्रपाणयो धार्तराष्ट्रा हन्युस्तर्हि क्षेमतरं भवेत् । एवं विपीदन्तमर्जुनमश्रुपूर्णाकुलेक्षणं दृष्ट्वा,

' कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ '

इति भगवानुवाच । इदं सूत्रभूतमुपदेशमजानन् अतीव खिन्नमना अर्जुनो वक्ति स्म ' कथं पूजार्हाभ्यां भीष्मद्रोणाभ्यां सहाहमिषुभिर्योत्स्ये ? तेषां हननात् भैक्ष्यमपि लोके श्रेय. । तान् हत्वा रुधिरप्रदिग्धान् भोगान् कथं भुञ्जीय ? ' हे भगवन् धर्मसम्मूढचेता अहं त्वां पृच्छामि—

' यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे ।
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ' इति ।

एवं युद्धनिवृत्तमर्जुनं प्रहसन्निव परमकारुणिको भगवान् श्रीकृष्णः

'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।'

इत्युपक्रमसगर्भवचनेन प्रारभ्य

'इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥'

इत्यन्तं सप्तदशाध्यायमितमुपदिशति गीताशास्त्रम् । एवमुक्त्वा 'यथेच्छसि तथा कुरु' इति कर्मस्वातन्त्र्यं दत्त्वा गुह्याद्गुह्यतरं सुविस्तरेणोपदिश्य गुह्यतमं किञ्चिदवशिष्यते इति मत्वाऽसन्तुष्टो भगवानाह—

'सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥' इति ।

सप्तदशाध्यायान्तं शास्त्रप्रमाणैः कर्मज्ञानभक्तियोगं विस्तरेण व्याख्याय परमात्मतत्त्वं निश्चित्य तत्तत्त्वं 'मन्मना भवे'ति श्लोकद्वयेनात्मना एकीकृत्य 'मामेकं शरणं व्रज' इति निश्चितमुपदिश्य भगवानुवाच—

'कच्चिदेतच्छ्रुतं पार्थ ।' इति ।

प्रत्युत्तरार्थमर्जुनो ब्रूते—

'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥' इति ।

'करिष्ये वचनं तव' इति गीताशास्त्रस्योपसंहारः । किं करिष्ये ? युद्धं करिष्ये इत्युत्तरं स्पष्टमेव । कुत- इति पृष्टे पुनः पुनः गीतासु उच्यते 'तस्माद्युध्यस्व भारत' 'मामनुस्मर युध्य च' 'कुरु कर्मैव तस्मात्त्वम्' इति । 'करिष्ये वचनं तव' इति न केवलं शब्दमात्रम् । अचिरादेव कौरवपाण्डवयोर्जन्यमजनि । तस्मिन्नायोधने स्वधर्मपालनार्थं युद्धं चिकीर्षन्नर्जुनो भीष्मकर्णजयद्रथादीन् समरे जघान । उपनिषत्प्रणीततत्त्वज्ञानं

पातञ्जलयोगमार्गो भक्तियोगो वा गीतायां नोपदिष्टः इति न प्रतिपादयन्ति लोकमान्याः। किन्तु कर्माकर्मविमूढचेतसमर्जुनं स्वधर्मप्रणीतकर्तव्ये योजयितुं प्रवृत्तेन भगवता ज्ञानभक्तियुक्तकर्मयोगशास्त्रमुपदिष्टम्। ज्ञानमार्गो यथा पुरुषं परमात्मतत्त्वं प्रापयति तथा कर्मयोगोऽपि। कर्मयोगरूपेण कथितेऽस्मिन् प्रवृत्तिमार्गे ज्ञानयोगादीनां विचार आनुषङ्गिकः। किमिदं कर्मयोगशास्त्रमिति 'गीताध्यायसङ्गतिः' अथ 'उपसंहारः' इति गीतारहस्यान्तर्गतप्रकरणद्वयगतविचारेणाधुना संक्षेपतोऽवलोक्यते।

स्वधर्मप्राप्तवर्णाश्रमविहितकर्माणि कुर्वता पुरुषेणाध्यात्मविचारेण वा भक्तियोगेन वा प्रथमं सर्वात्मैक्यरूपसाम्यबुद्धिः सम्पादनीया। सम्पादितायां तस्यां संन्यासमार्गमनाश्रित्य संसारे एव पुनः शास्त्रतः प्राप्तानां सर्वकर्मणां कर्तव्यबुद्ध्या नित्यानुष्ठानमेवास्मिञ्जगति तस्य परमपुरुषार्थो वा जीवनक्रमस्योत्तममार्गो वा भगवता गीतासु प्रतिपादितो दृश्यते।

कस्यापि विषयस्य निरूपणं पद्धतिद्वयेन भवति। एका शास्त्रीया, अपरा पौराणिकी। प्रतिपाद्यविषयतत्त्वानां साधकबाधकप्रमाणैर्न्यायशास्त्रानुसारेण क्रमशः प्रतिपादनं शास्त्रीया पद्धतिः। भगवद्गीतासु कृतं निरूपणं यद्यपि सशास्त्रं तथापि न शास्त्रीयम्। सर्वं तत्त्वज्ञानं श्रीकृष्णार्जुनसंवादरूपेण व्यासमहर्षिणा भारते मथितम्। अत एवाध्यायसमाप्तिसूचके सङ्कल्पे 'श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे' इति शब्दा विद्यन्ते। शास्त्रीयविवेचनपद्धतेर्भिन्नेयं पौराणिकी पद्धतिः। अस्मिन् प्रतिपादने धर्मशब्देन समावेशितानां सर्वविषयाणामविरोधेन सङ्ग्रहः संवादरूपेण योगयुक्तचित्तेन भगवता कृत इति प्रतीयते। अर्जुनेन पूर्वज्ञातानां विषयाणां प्रतिपादनमयुक्तम्। तस्य प्रधानप्रश्नो युद्धरूपं घोरकर्म मया कर्तव्यं न वा कर्तव्यमिति। तस्योत्तरं संवादरूपं भगवद्गीताशास्त्रम्। श्रौतस्मार्तभागवतधर्माणां सांख्यमीमांसावेदान्तादिशास्त्रस्थकर्मविपाकादिसिद्धान्तानां निरूपणे तेषां परम्परा येन नायगता स गीतावाचनेन भ्रान्तचित्तो भवति। अतः श्रीकृष्णार्जुनसंवादे एते विषयाः कथं प्रतिपादिता इति द्रष्टव्यं भवति।

विक्रमशालिना राजकारणपटुना परमपूज्येन सर्वज्ञेन क्षत्रियेण श्रीकृष्णेन क्षत्रकुलोत्पन्नमर्जुनं स्वधर्मप्राप्तकर्मणि प्रवर्तयितुमुपदिष्टं गीताशास्त्रम्। जैनबौद्धधर्मप्रवर्तकौ महावीरगौतमबुद्धावपि क्षत्रियकुलावतंसौ। तथाऽपि ताभ्यां वैदिकधर्मान्तर्गतसंन्यासमार्गमाश्रित्य निवृत्तिमार्गः स्वीकृतः। परं ब्राह्मणक्षत्रियादिसर्ववर्णैर्निवृत्तिमार्गकथितात्मौपम्यतत्त्वेन सह निष्कामबुद्धया लोकसङ्ग्रहार्थं प्राप्तकर्माणि ज्ञानोत्तरमपि कर्तव्यानीति भगवता श्रीकृष्णेनार्जुनायोपदिष्टम्। उपदेशकारणमर्जुनविषादः। स विषादः कथमुद्भूत इति प्रथमाध्याये कथितम्। एतादृशं युद्धकर्मविरक्तमर्जुनं दृष्ट्वा तस्मै निवृत्तिमार्गकथनं सुलभमासीत्।

'आत्मार्थे पृथिवीं त्यजेत्'

इति सुभाषितम्। आत्मकल्याणाय यतमानेन पुरुषेण

'यदहरेव विरजेत् तदहरेव प्रव्रजेत्।'

इत्याज्ञया सर्वं संन्यस्य ज्ञानप्राप्तये मनः समाधातुं वनं गन्तव्यम्। परं निवृत्तिमार्गमकथयित्वा श्रीभगवानुवाच—

'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।'

इति। अकीर्तिकरमिदमित्युक्त्वाऽपि धर्मसम्मूढचेता अर्जुनो ब्रूते—

'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्॥'

इति। अधुना

'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।'

इत्यादिना योगयुक्तमनसा गीताशास्त्रमुपदेष्टुं भगवता प्रारभ्यते। ज्ञानवान् पुरुष इवार्जुनः कर्मसंन्यासं वक्ति स्म। अतो ज्ञानवद्भिः पुरुषैराचरितां प्रवृत्तिनिवृत्तिनिष्ठां व्याख्यातुमारभत भगवान् वासुदेवः।

वर्णाश्रमविहितकर्मणामाचारः अथ कर्मत्यागः इति प्रवृत्तिनिवृत्तिनिष्ठयोः येनापि मार्गेण गच्छतस्त्वयं कर्मत्यागो न शास्त्रसम्मतः।

'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।'

इत्यादिनाऽऽत्मनो नित्यत्वं प्रतिपाद्य, देहस्य कौमारयौवनवृद्धावस्थाप्राप्तिवदात्मनो देहान्तरप्राप्तिरिति कथयित्वा, 'अन्तवन्त इमे देहाः' इत्युक्त्वा;

अयमात्मा कदाऽपि न जायते, न म्रियते, अजोऽयं, नित्योऽयं, शाश्वतोऽयं, पुराणोऽयमिति भगवता प्रतिपादितम् ।

अनन्तरम् अयमात्मा नित्यजातः नित्यमृतः इति पक्षमाश्रित्य,

' स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ '

इति धर्मदृष्ट्या विविधमार्गेण विमृश्य सर्वेषां पूर्वपक्षाणां खण्डनं कृत्वा युद्धत्यागोऽसम्मत इत्युक्त्वा भगवतोपदिष्टम्

' तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ।'

इति । चित्तशुद्धये स्वधर्मप्राप्तवर्णाश्रमविहितकर्मानुष्ठानं, ज्ञानप्राप्त्यनन्तरं मोक्षसिद्धये सर्वकर्मसंन्यासो ज्ञानमार्गः । अयमेव सांख्ययोगः । इमं कथयित्वा भगवानुवाच

' एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ '

सर्वकर्माणि कृत्वाऽपि यया बुद्ध्या कर्मबन्धं प्रहास्यसि –न कर्म प्रहास्यसि –तादृशं बुद्धियोगं– नाम कर्मयोगं शृणु । अनेन कर्मयोगमार्गेण युद्धरूपं स्वधर्मप्राप्तकर्म कृत्वाऽपि संन्यासिनां ज्ञानमार्गलभ्यां गतिं त्वमवाप्स्यसि ।

' द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ '

( उद्योगपर्व ३२-६५ )

कौटिल्यप्रणीतार्थशास्त्रेऽपि एतदर्थकः श्लोको वर्तते ।

' यान् यज्ञसङ्घैस्तपसा च विप्राः
स्वर्गैषिणः पात्रचयैश्च यान्ति ।
क्षणेन तानप्यतियान्ति शूराः
प्राणान् सुयुद्धेषु परित्यजन्तः ॥ '

यज्ञादिमार्गेण गच्छन्तो नरा यां गतिं प्राप्नुवन्ति तामेव गतिं समरे निधनं प्राप्ते योद्धारः प्रयान्ति ।

'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।'

इत्यस्याप्ययमेवाशयः।

कर्मसंन्यासे युद्धे वा यदि समं फलं तर्हि युद्धमेव कर्तव्यमिति सिद्धं न भवति। अतः कर्मयोगशास्त्रप्रतिपादनं समारब्धम्। स्वधर्मप्राप्तवर्णाश्रमविहितकर्मणां निष्कामबुद्ध्याऽनुष्ठानं कर्मयोगशास्त्रम्। कर्माणि तु अनुष्ठातव्यानि। परं तानि मोक्षाविरोधेन कथं कर्तव्यानीति सन्देहे समुत्पन्ने प्रमाणैः सन्देहनिवृत्तिपूर्वकमस्मिञ्छास्त्रे मार्गः प्रतिपादितः। कस्यापि कर्मणो बाह्यपरिणामापेक्षया कर्तुर्वासनात्मिका बुद्धिः शुद्धा वा अशुद्धा वेति प्रथमं द्रष्टव्यं भवति। परम् इयं वासनात्मिका बुद्धिः शुद्धा वा अशुद्धा वेति वेक्तुं व्यवसायात्मिका बुद्धिरेव प्रमाणम्। विशुद्धां व्यवसायात्मिकां बुद्धिं विना वासना विशुद्धाः समाश्च न भवन्ति। अतो वासनात्मिकां बुद्धिं विशुद्धां कर्तुं व्यवसायात्मिकायाः बुद्धेः समाधानमावश्यकम्।

सामान्यजनाः सुखप्राप्तये यागादिवैदिककाम्यकर्मणि रता दृश्यन्ते। परम् एते जनाः शाश्वतसुखं, मोक्षं न लभन्ते। अतो वैदिककाम्यकर्मणां समुद्योगं त्यक्त्वा निष्कामबुद्ध्या त्वं स्वकर्माणि कुरु।

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।'

कर्मफलं न त्वदधीनम्।

'मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि।'

फलं भवतु वा न भवतु। कर्तव्यबुद्ध्या कर्माणि कुर्वतो नरस्य न पुण्यपापलाभः। अत. समबुद्धिमाश्रित्य कर्माणि समाचर।

'समत्वं योग उच्यते।'

अनेन समत्वयोगेन कर्तव्यकर्म कुर्वतस्तव मोक्षलाभो भविष्यत्येव। कर्मसंन्यासोऽनावश्यकः। समत्वयोगेनैव पुरुषः स्थितप्रज्ञो भवति। समत्वयोगेन कर्म कुर्वतो नरस्य स्वल्पोऽपि धर्मो महतो भयात् त्रायते।

'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्।'

इति। एवं च स्थितप्रज्ञ इव

'योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।'

नैवं त्वं पापमवाप्स्यसि इति द्वितीयाध्याये प्रतिपादितम् ।

तृतीयाध्यायप्रारम्भे अर्जुनस्य प्रश्नः—

'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥'

इति । साम्यबुद्धिमाश्रित्याहं किमर्थमुदासीनो न तिष्ठेयम् ? किमिति मया योद्धव्यम् ? अतो भगवानाह—

'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥'

सर्वेषां कर्मणां संन्यासस्तु अशक्य एव ।

'न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥'

अतो

'नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥
यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥'

इति । इयमेव कर्म कुरु इति प्रजापतेराज्ञा, यतः कर्मणा विना यज्ञा न सिध्यन्ति । इदं ब्रह्मापि यज्ञे प्रतिष्ठितम् । यस्तु आत्मरतिः आत्मतृप्तः आत्मन्येव च संतुष्टः तस्य किमपि कार्यं न विद्यते ।

'नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥'

इत्ययमुपदेशः । अनेन निष्कामकर्मयोगमार्गेणैव जनकादयः संसिद्धिं गताः । लोकसङ्ग्रहार्थमिदं कर्म अवश्यं करणीयम् । यतः—

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥'

अनन्तरं भगवान् श्रीकृष्णः स्वोदाहरणेन दर्शयति—

'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं ( तथाऽपि ) वर्त एव च कर्मणि ॥'

यद्यहं कर्ममार्गेण न वर्ते तर्हि कथं स्यात् स परिणामोऽपि भगवता स्पष्टमेवोक्तः—

'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥'

कर्मणि सक्ता अविद्वांसो यथा कर्म कुर्वन्ति तथैव लोकसङ्ग्रहं चिकीर्षवो विद्वांसोऽप्यसक्ताः सन्तः कर्म कुर्युः ।

'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥'

सर्वाणि कर्माणि प्रकृतिगुणकार्याणि दृश्यन्ते । 'अहं तेषां कर्ता' इत्यहंकारविमूढात्मा मन्यते । गुणकर्मविभागयोर्भिन्नत्वं जानन् तत्त्ववित् गुणा गुणेषु वर्तन्त इति मत्वा तेषु न सज्जते ।

'तस्मात्सर्वाणि कर्माणि (मयि) संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥'

इति श्लोकेन 'युध्यस्व' 'कुरु कर्मैव' न कर्मसंन्यासं समाचरेति भगवता स्पष्टमेवोक्तम् । कर्मयोगाचरणस्य फलमपि भगवान् कथयति—

'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥'

तथैवानाचरणस्यापि

' ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ' इति ।

तृतीयाध्याये सुविस्तरेण कथितमिदं कर्मयोगशास्त्रं पूर्वपरम्पराकथनं विना अपूर्णमिति मत्वा

' श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।'

इत्युक्त्वा अनुसन्धीयते चतुर्थाध्याये—

' इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः । '

महता कालेनास्मिञ्जगति नष्टोऽयं ( कर्म )योगः ।

' स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥'

गीताशास्त्रे भगवता श्रीकृष्णेन प्रयुक्तमिमं रहस्यशब्दं वीक्ष्य कर्मयोगशास्त्रस्य स्वग्रन्थस्येदमेव नाम प्रतिष्ठातव्यमिति लोकमान्यैर्मनसि निश्चितमिति वयं मन्यामहे ।

अस्योपरि शङ्क्यतेऽर्जुनेन । ननु कथमिदं सम्भवेद्यत्त्वमादौ प्रोक्तवानिति । अपरं जन्म भवतः, परं च जन्म विवस्वतः इत्युक्तवत्यर्जुने अस्मच्छब्दं प्रयुज्य श्रीभगवानाह—

' बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ '

किमर्थं तव जन्म इत्युच्यते चेत् कथयामि—

' यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि ( अहं ) युगे युगे ॥ '

इति । एवं लोकसङ्ग्रहार्थे निष्कामबुद्ध्या कर्म कुर्वतो मम ( तस्मिन् कर्मण्यनासक्त्या ) पुण्यपापफलदोषो न विद्यते । अनेनैव मार्गेण जनकादिभिर्लोकसङ्ग्रहार्थे पूर्वकाले कर्म कृतमिति प्रथममुक्तमेव । अतः

' कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् । '

अनन्तरं कर्माकर्मविवेको विस्तरेण कृत्वा द्रव्ययज्ञतपोयज्ञा इति बहुविधा यज्ञा भगवता कथिताः । परम् एते सर्वे कर्मजा इति ज्ञात्वा तेभ्यो ज्ञानयज्ञः श्रेयानिति निश्चितम् ।

' सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते । '

तत् ज्ञानं तत्त्वदर्शिनो ज्ञानिन उपदेक्ष्यन्ति । ज्ञानेन सदृशं पवित्रं किमपि नास्ति । उक्तं च—

' न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । '

ननु सांख्ययोगौ यदि तुल्यबलौ तर्हि कर्मयोगे कथं तवाग्रहः । यां निष्ठां यः समीचीनां भावयेत् तामेव सोऽनुसरेत् इत्यर्जुनस्य संशयं मनसि निधाय—

' संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ '

श्रीभगवानुवाच पञ्चमाध्यायप्रारम्भे

' संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ '

कुत इत्युच्यते चेत् लोकसङ्ग्रहार्थमनासक्त्या वर्णाश्रमविहितकर्माणि फलत्यागपूर्वकं कुर्वतः पुरुषस्याचारोऽन्येषां जनानामादर्शो भवतीति विशेषोऽयं कर्मयोगनिष्ठायाम् ।

' यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । '

अन्यच्च

'सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥'

इत्यपि भगवतोक्तम् । सर्वाणि कर्माणि प्रकृतेर्विलासः । समत्वयोगेन सर्वभूतात्मभूतात्मा भूत्वा तानि तानि कर्माणि कुर्वन्नपि पुरुषः फलेन न लिप्यते । स सर्वदा मुक्त एव ।

षष्ठाध्याये कर्मयोगसिद्धयर्थं साम्यबुद्धिं सम्पादयितुमुपायः कथितः ।

'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥'

इति । कर्मयोगे बुद्धिरिन्द्रियं स्थिरीकर्तुमिन्द्रियनिग्रहरूपं योगं साधयितुं पातञ्जलयोगोऽस्मिन्नध्याये विशेषेण वर्णितः । अन्ते च

'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥'

इति निश्चितोपदेशः ।

सप्तमाध्याये तत्त्वज्ञानदृष्ट्या क्षराक्षरविवेकः, अष्टमाध्याये अधियज्ञाधिदैवाधिभूतशब्दविचारः, नवमाध्याये राजविद्या राजगुह्यं वा प्रतिपादितम् । अव्यक्तरूपस्य परमात्मनो व्यक्तरूपं भक्त्या ज्ञात्वाऽनन्यभावेन तं शरणं गच्छेदिति सुलभो राजमार्गो राजविद्या वा राजगुह्यमिति नाम्नोपदिष्टः । सर्वेष्वध्यायेषु ज्ञानवान् वा भक्तिमान् वा पुरुषः सदैव निष्कामकर्मयोगेन कर्माचरणं कुर्यादित्यपि कथयितुं न विस्मरति भगवान् वासुदेवः । दशमाध्याये सर्वं श्रेष्ठवस्तुजातं मम तेजोंऽशसम्भवमिति विभूतियोगं निर्वर्ण्य एकादशाध्याये आत्मनो विश्वरूपमर्जुनस्य पुरतः प्रकटीकृत्य भगवान् मूर्ते 'लोकक्षयकृत् कालोऽस्मि । मयैवैते निहताः पूर्वमेव । त्वं तु निमित्तमात्रो भव' इति । परमेश्वरस्य व्यक्तरूपं प्रधानमिति सर्वत्र वर्णितम् । अतोऽव्यक्तस्य वा व्यक्तरूपस्योपासना पुरुषेण कर्तव्या इत्यर्जुनस्य प्रश्ने व्यक्तोपासना सुलभा इत्यात्मनोऽभिप्रायः कथितः

'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।'

इत्यादिना । अयमेव भक्तियोगः ।

त्रयोदशाध्याये क्षेत्रक्षेत्रज्ञविचारः कृतः । चतुर्दशाध्याये त्रिगुणात्मिकायाः प्रकृतेः संसारोऽयम् । त्वं त्रिगुणातीतो भव इत्युपदिश्य पञ्चदशाध्याये ' ऊर्ध्वमूलमधःशाख'मित्यादिना वेदेषु दृष्टं वृक्षरूपं जगत् वर्णयित्वा प्रकृतिप्रपञ्चोऽयम् अश्वत्थवृक्ष इत्युक्त्वा क्षराक्षरप्रकृतेः परोऽहम् उत्तम इति निर्दिश्यैतस्मात्कारणादहं लोके पुरुषोत्तम इति प्रथितोऽस्मि । एवं भगवता पुरुषोत्तमयोगः कथितः ।

षोडशाध्याये प्रकृतिभेदाज्जगद्वैचित्र्यं तथैव मनुष्येषु दैवासुरसम्पद्विभागं कथयित्वा सप्तदशे त्रिगुणात्मिकायाः प्रकृतेर्गुणवैषम्यात् श्रद्धाज्ञानयज्ञतपस्सु वैचित्र्यं दृश्यते इति विविच्य अन्ते ' ओम् तत्सदिति निर्देशो'ऽपि कर्मयोगशास्त्रानुकूल इति दर्शितम् ।

एवं कर्मयोगशास्त्रे बुद्धेः श्रेष्ठत्वं ज्ञात्वा तस्याः स्थैर्यं समत्वं च कथं प्राप्येते, तथैव कर्मत्यागं विनाऽपि मोक्षप्राप्तिः कथं सम्भवति इति क्षराक्षरविचारे तथा क्षेत्रक्षेत्रज्ञविचारे निरूप्य बुद्धिसाम्ये प्राप्ते पुरुषेण कर्मत्यागात्–संन्यासात्–कर्मफलाशां त्यक्त्वा लोकसङ्ग्रहार्थं कर्मानुष्ठानं श्रेयस्करमिति निश्चयेन भगवतोक्तम् । अर्जुनशङ्कानिरसनाय अयमेव सिद्धान्तो भगवता पुनः कथितः ।

ननु स्मृतिग्रन्थप्रतिपादितः संन्यासाश्रमः कर्मयोगे न विहितः । तस्मात् स्मृतिग्रन्थानां कर्मयोगशास्त्रेण सह विरोधः स्यादित्याशङ्क्य अष्टादशाध्यायेऽर्जुनः संन्यासस्य त्यागस्य च तत्त्वं वेदितुमिच्छति ।

' संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश '

इति श्लोकेन । तत्तत्त्वप्रतिपादनमधुना भगवता प्रारभ्यते ।

' काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । '

( न नित्यनैमित्तिकानां कर्मणाम् )

' सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ '

इति संन्यासत्यागयोर्भेदं दर्शयित्वा भगवानाह दोषवत्कर्म त्याज्यमिति केचिद्वदन्ति । यज्ञदानतपःकर्म न त्याज्यमित्यपरे ब्रुवते । तत्र मे निश्चयं शृणु ।

'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥'

संन्यासो नाम किम् ? सम्यग्रीत्या कर्मणां न्यासः— त्यागः । कर्मयोगशास्त्रे यद्यपि कर्मत्यागो न विहितः तथापि कर्मफलाशात्यागो विहित एव, यतः काषायवस्त्राणि परिधाय भैक्ष्यमनाचर्यापि संन्यासस्य स्मृत्युक्तं मूलतत्त्वं निष्कामत्वं कर्मयोगे नित्यं वर्तत एव । फलाशात्यागे स्वर्गप्राप्तेरपि आशा न स्यात् । अतो यज्ञादिश्रौतकर्मणामनुष्ठानं नापेक्ष्यते इत्यपि शङ्क्यते । अत्रोच्यते । यज्ञादिकर्मणामनुष्ठानमपेक्ष्यते एव, यतस्तानि कर्माणि चित्तशुद्धिकराणि । तानि नित्यकर्मभिः सह निष्कामबुद्ध्याऽनुष्ठातव्यानि । एवमिदं यज्ञचक्रं लोकसङ्ग्रहार्थमावश्यकमिति सिद्धान्तः पुनरुक्तः ।

प्रकृतिधर्मानुसारतो ज्ञानकर्मकर्तृबुद्धिधृतिसुखादीनां वैचित्र्यं व्याख्याय निष्कामकर्म, निष्कामकर्ता, अनासक्तबुद्धिस्तज्जन्यं सुखम्, आत्मज्ञानमित्येतानि सर्वाणि श्रेष्ठानीति निर्णीय चातुर्वर्ण्योपपत्तिमुक्त्वा वर्णाश्रमकर्मणां निष्कामबुद्ध्यानुष्ठानेन पुरुषोऽस्मिञ्जगति कृतकृत्यो भूत्वा 'शान्तिमाप्नोति नैष्ठिकीम्' इति भगवानाह । कर्माणि प्रकृतेर्धर्माः । तेषां सर्वथा त्यागोऽशक्य एव । तस्मादीश्वर एव कर्ता, तथा कारयिता इति बुद्ध्या

'तमेव शरणं गच्छ सर्वभावेन भारत ।'

इति प्रतिपाद्य भगवानर्जुनं सर्वगुह्यतमं वचः श्रावयति—

'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥'

इति श्लोकाभ्यां भक्तियोगसहितकर्मयोगशास्त्रप्रतिपादनेन प्रवृत्तिमार्गतत्त्वज्ञानकथनं भगवता समाप्यते । एवमुपसंहारेण प्रवृत्तिपरमेव गीताशास्त्रम्,

न निवृत्तिपरमिति भगवद्गीतारहस्यम्। 'रहस्यं ह्येतदुत्तमम्' इति। कर्मयोगशास्त्रं नाम निष्कामकर्मसहितसांख्ययोगो वा ज्ञानभक्तियुक्तकर्मयोगो वा।

धर्माधर्मज्ञानं बुद्धिमतां प्राणिनां विशिष्टो गुणः। कर्माकर्मविवेके बुद्धेर्विशुद्धत्वं तथा च श्रद्धायुक्तत्वमावश्यकम्। बहुसुखवादेन यद्यपि बहु सुखं भवति तथाऽपि धर्मनीतिदृष्ट्या इदं कर्म श्रेष्ठमिति नोच्यते। कर्तुः शुद्धबुद्धिरेवात्र प्रमाणम्। शुद्धबुद्धेर्निकषो विपत्कालः। सङ्कटसमये शुद्धबुद्धेर्विशुद्धत्वं यदि न विचलेत्तर्हि तदेव श्रेष्ठतमं कर्म। अत एव भगवान्

'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।'

इत्युक्त्वा श्रद्धायुक्तविशुद्धबुद्धेर्महत्त्वं गायति। महाभारतेऽश्वमेधपर्वणि कथितं नकुलोपाख्यानमत्रोदाहरणम्। बाह्यतो दृष्टसमफलानि कर्माणि धर्माधर्मदृष्ट्या वा नीतिशास्त्रदृष्ट्याऽनया शुद्धाशुद्धबुद्ध्या विभिद्यन्ते। अतो बहुसुखवादं निरस्य कर्मकर्तुर्बुद्धेर्विशुद्धत्वं द्रष्टव्यं भवति। स्थितप्रज्ञस्य साम्यबुद्धौ वासनात्मिकायाः बुद्धेर्विशुद्धत्वं तथा व्यवसायात्मिकायाः बुद्धेः स्थैर्यमन्तर्भवतः। तस्मायो बुद्धेः परस्तस्य परमात्मनः सर्वभूतात्मस्वरूपं विज्ञाय कार्याकार्यविवेचिका या बुद्धिः सा शुद्धा या सात्त्विकीति वा भगवता प्रतिपाद्यते। अतः कर्मणः श्रेष्ठत्वे शुद्धबुद्धिरेव निकष इति सिद्धान्तः।

एवं पाश्चात्यानामाधिदैवतपक्षो वा आधिभौतिकसुखवादपक्षो वा निरस्तो भवति। तृतीयः पक्षोऽध्यात्मवादिनाम्। अस्मिन्नपि पक्षे शुद्धबुद्धये प्राधान्यं दीयते। अस्मिन् पक्षे विचारेण श्रेष्ठौ पाश्चात्यदेशस्थौ द्वौ महापण्डितौ 'कान्ट-ग्रीन'नामानौ। कान्टपण्डितस्यैते सिद्धान्ताः (१) कस्यापि कर्मणो नैतिकमूल्यं कर्तुः शुद्धबुद्ध्या निर्णेतव्यम्। (२) इयं वासनात्मिका बुद्धिर्यदा व्यवसायात्मिकबुद्धेराज्ञया वर्तते तदा सा शुद्धा, पवित्रा, स्वतन्त्रा च ज्ञातव्या। (३) इन्द्रियनिग्रहेण वासनात्मिकाया बुद्धेर्विशुद्धत्वे पुरुषेण नीतिनियमा नापेक्ष्यन्ते। वासनाबुद्धिशुद्धत्वे सा यस्मिन् कर्मणि प्रेरयति तत्कर्म कर्तुं, एवं कृते किं स्यादिति विचार्यैव आज्ञापयति। (४) ब्रह्मविचारेण विना नोपपद्यते वासनाशुद्धत्वम्। एते पाश्चात्यपण्डितानां

वर्णितश्चातुर्वर्ण्यविचारस्तथैव पुरुषस्य स्वधर्मप्राप्तकर्मविचारो ब्राह्मणव्याध-संवादेन ( वन० २०८ ) तथा तुलाधारजाजलिसंवादेन ( शांति० २६१ ) महाभारते निर्णीत । परमेश्वरार्पणबुद्ध्या कर्तव्यरूपेण सर्वाणि कर्माणि कृत्वा तद्द्वारा परमेश्वरोपासना कर्तव्या । अयमेव ज्ञानयुक्तप्रवृत्तिमार्गः कर्मयोगः भागवत इत्यपरनामधेय ।

' स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' (गी १८ ४५)

एव सर्वत्र समो निर्भयो व्यापको वर्णाश्रमदेशकालजातिभेद-विवर्जित सर्वेषा मोक्षदाता परधर्मसहिष्णु ( स्वधर्मे निधन श्रेय ) ज्ञान भक्तिकर्मयुक्तगीताधर्म सनातनवैदिकधर्मकल्पवृक्षस्य सुमधुरममृतफलम् । आदौ वैदिकधर्मे कर्मकाण्डस्य प्राधान्यमासीत् । उपनिषद्भ्रथिततत्त्वज्ञानेन वद्गौण जातम् । तस्मिन् सांख्यविचार प्रादुर्भूत । परम् एतत्सांख्य-ज्ञान सामान्यजनस्यागम्यम् । कर्मसंन्यासे तेषा प्रवृत्ति । अत पुनरसमा धानम् । तस्मात्तद् बुद्धिगम्य ब्रह्मज्ञान व्यक्तस्योपासनया राजविद्यया संयुज्य कर्मकाण्डस्य प्राचीनपरम्पराऽऽत्मनो योग्यतया सर्वाणि सासारिककर्माणि निष्कामबुद्ध्या लोकसङ्ग्रहार्थं यावज्जीव विधाय तेन आब्रह्मस्तम्बपर्यन्तेषु सर्वभूतेष्वेकत्वेन स्थित नित्य परमात्मान सर्वो जनो यजताम् । तस्मिन्नेव सर्वेषामैहिक पारलौकिक च कल्याण विद्यत इति अखिलब्रह्माण्डनायक श्रीकृष्णोऽर्जुन निमित्तीकृत्य सर्वाञ्जनान् मुक्तकण्ठेन गीताधर्म प्रतिपादित वान् । अनेन ज्ञानपूर्वकभक्तियुक्तनिष्कामकर्मयोगेन सर्वान् विरोधान् परि-हृत्य निखिल मानवजीवन श्रेयोमय कर्तुं प्रतिपादितेऽस्मिन् गीताधर्मे सनातनवैदिकधर्मस्य सार समुद्धृतम् । एत नित्यधर्म ज्ञात्वा कर्तव्यबुद्ध्या सर्वभूतहितार्थं यतमाने सदाचारसम्पन्नैर्महामभिर्यदा एषा भरतभूमि समलङ्कृता तदाऽयं देशो भगवत्कृपाप्रसादपात्रो भूत्वा न केवल ज्ञानस्य, अपि तु सकलैश्वर्यस्य गौरीशङ्करशिखर प्राप्तवान् । परमतेजस्विना कर्तृत्व-शालिनानेन गीताधर्मेण सत्पुरुषा स्वनामना भरतखण्डमिम पुनरप्य लङ्कुर्वन्त्विति प्रार्थ्यते ।

' नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ।
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ॥ '

( शांति० ३४७-८०,८१ )

सिद्धान्ताः भगवत्प्रतिपादितसिद्धान्तैः सह यद्यपि पूर्णांशेन न संवदन्ति तथाऽपि बह्वंशैः समाना दृश्यन्ते ।

भगवद्गीतासिद्धान्तास्त्वेते । ( १ ) बाह्यकर्मतः कर्तुर्वासनात्मिका बुद्धिः श्रेयसी । ( २ ) आत्मनिष्ठव्यवसायात्मिकायाः बुद्धेः साम्यावस्थायां वासनात्मिका बुद्धिः स्वभावतो विशुद्धा पवित्रा च भवति । ( ३ ) एवं समबुद्धिः स्थितप्रज्ञः कर्मातीतो भवति । ( ४ ) तस्याचारा वा तेनात्मौपम्यबुद्ध्या प्रमाणीकृता नीतिनियमा वा इतरेषां जनानामादर्शा भवन्ति । ( ५ ) पुरुषोत्तमस्य देहिनो जीवस्य चात्मतत्त्वमेकमेवेति निश्चित्य जीवात्मा स्वं विशुद्धं पूर्णस्वरूपं मोक्षं प्रापयितुं समुत्सुको भवति । शुद्धमिदमात्मस्वरूपं विज्ञाय आत्मौपम्येन सर्वत्र समदृष्टिर्जायते ।

बह्वंशेन यद्यप्येते सिद्धान्ताः समास्तथाऽपि ब्रह्म–आत्मा–माया–आत्मस्वातन्त्र्यं–ब्रह्मात्मैक्यं–कर्मविपाकः इत्यादिविषयेषु पौर्वात्यवेदान्तसिद्धान्ताः कान्ट–ग्रीनप्रभृतीनां पाश्चात्त्यानां सिद्धान्तेभ्योऽतीव प्रगता निश्चितरूपाश्च । औपनिषदिकं तत्त्वज्ञानमाश्रित्य भगवद्गीतान्तर्गतकर्मयोगशास्त्रविवेचनमाध्यात्मिकदृष्ट्या निःसंदिग्धं पूर्णं पर्याप्तं च वर्तते । 'शौपेनहौएर'मतानुसारी 'डायसन्'पण्डितोऽप्येवं प्रतिपादयति । वासनामूलः संसारः । दुःखनिरसनाय तस्याः क्षयः कर्तव्यः । वासनाक्षये कर्मत्यागोऽनावश्यकः । वासनाक्षयनिकषस्तु परोपकारार्थं निष्कामकर्म । तस्मात् सदाचारस्य नीतिशास्त्रस्यादिकारणं वासनायाः निष्कामता । अतो भगवानुवाच—

'तस्मादसक्तः सततं कार्यं कर्म समाचर ।' इति ।

नीतिशास्त्रं तत्त्वज्ञानस्यैकमङ्गं वर्तते । तस्य सदाचारस्य च विचारेणैव परमात्मतत्त्वविचाराः प्रादुर्भवन्ति । अत एव भगवद्गीतासु तत्त्वज्ञानप्रतिपादने सदाचारादिनीतितत्त्वानामन्तर्भावः । तथैव श्रद्धामूलकभक्तिमार्गस्य विवेचनेन सर्वाङ्गपरिपूर्णोऽयं ग्रन्थः प्रमाणीभूतः ।

पाश्चात्त्यानामाधिभौतिकसुखवाद-बहुसुखवाद-सर्वभूतसुखवाद-सदाचारादिसकलान् वादान् तथैव क्रिस्त-बौद्ध-जैनधर्माणां संन्यासमार्गं विस्तरेण विविच्य सर्वेऽपि ते कथमपर्याप्ता इति निर्दिश्य भगवता श्रीकृष्णेन

वर्णितश्चातुर्वर्ण्यविचारस्तथैव पुरुषस्य स्वधर्मप्राप्तकर्मविचारो ब्राह्मणव्याध-संवादेन ( वन० २०८ ) तथा तुलाधारजाजलिसंवादेन ( शांति० २६१ ) महाभारते निर्णीतः। परमेश्वरार्पणबुद्ध्या कर्तव्यरूपेण सर्वाणि कर्माणि कृत्वा तद्द्वारा परमेश्वरोपासना कर्तव्या। अयमेव ज्ञानयुक्तप्रवृत्तिमार्गः कर्मयोगः भागवतः इत्यपरनामधेयः ।

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।' (गी.१८.४५)

एवं सर्वतः समो निर्भयो व्यापको वर्णाश्रमदेशकालजातिभेद-विवर्जितः सर्वेषां मोक्षदाता परधर्मसहिष्णुः ( स्वधर्मे निधनं श्रेयः ) ज्ञान-भक्तिकर्मयुक्तगीताधर्मः सनातनवैदिकधर्मकल्पवृक्षस्य सुमधुरममृतफलम् । आदौ वैदिकधर्मे कर्मकाण्डस्य प्राधान्यमासीत् । उपनिषद्ग्रथिततत्त्वज्ञानेन तद्गौणं जातम् । तस्मिन् सांख्यविचारः प्रादुर्भूतः । परम् एतत्सांख्य-ज्ञानं सामान्यजनस्यागम्यम् । कर्मसंन्यासे तेषां प्रवृत्तिः । अतः पुनरसमा-धानम् । तस्मात्तद् बुद्धिगम्यं ब्रह्मज्ञानं व्यक्तस्योपासनया राजविद्यया संयुज्य कर्मकाण्डस्य प्राचीनपरम्परयाऽऽत्मनो योग्यतया सर्वाणि सांसारिककर्माणि निष्कामबुद्ध्या लोकसङ्ग्रहार्थं यावज्जीवं विधाय तेन आब्रह्मस्तम्बपर्यन्तेषु सर्वभूतेष्वेकत्वेन स्थितं नित्यं परमात्मानं सर्वो जनो यजताम् । तस्मिन्नेव सर्वेषामैहिकं पारलौकिकं च कल्याणं विद्यत इति अखिलब्रह्माण्डनायकः श्रीकृष्णोऽर्जुनं निमित्तीकृत्य सर्वाञ्जनान् मुक्तकण्ठेन गीताधर्मं प्रतिपादित-वान् । अनेन ज्ञानपूर्वकभक्तियुक्तनिष्कामकर्मयोगेन सर्वान् विरोधान् परि-हृत्य निखिलं मानवजीवनं श्रेयोमयं कर्तुं प्रतिपादितेऽस्मिन् गीताधर्मे सकलवैदिकधर्मस्य सारं समुद्धृतम् । एतं नित्यधर्मं ज्ञात्वा कर्तव्यबुद्ध्या सर्वभूतहितार्थं वर्तमानैः सदाचारसंपन्नैर्महात्मभिर्यदा एषा भरतभूमिः समलङ्कृता तदाऽयं देशो भगवत्कृपाप्रसादपात्रो भूत्वा न केवलं ज्ञानस्य, अपि तु सकलैश्वर्यस्य गौरीशंकरशिखरं प्राप्तवान् । परमतेजस्विना कर्तृत्व-शालिनानेन गीताधर्मेण सत्पुरुषाः स्वजन्मना भरतखण्डमिमं पुनरप्य-लङ्कुर्वन्त्विति प्रार्थ्यते ।

'नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ।
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ॥'

( शांति० ३४७-८०,८१ )

# १२ राष्ट्रियसभासान्धिपर्व

## १ राष्ट्रियसभाप्रवेशवादः

महायुद्धे समारब्धे प्राचीनेतिहासप्रसङ्गानुद्धृत्य भारतदेशमुद्दिश्य सैनिकशिक्षणविषये लोकमान्यैर्बहु लिखितम् । अस्मिन् समये 'सर् व्हॅलंटाईन चिरोल'नामकः आङ्ग्ललेखकः आङ्ग्लानकथयत् 'भारतदेशे लोकमान्यादयो लोकधुरीणा अपि आङ्ग्लशासनसंस्थायाः शासनपद्धतिगुणान् प्रशंसन्ति, आत्मनो राजनिष्ठां च प्रकटयन्ति । इयं भारतजनस्तुता शासनपद्धतिरायत्यामपि भारतदेशस्योपकाराय भविष्यति । तस्मादियमेव शासनसंस्थयाऽनुसरणीया । भारतीयेभ्योऽधिकाधिकारदानेन तस्याः पद्धत्याः परिवर्तनमयुक्तम् ' इति । यस्मिन् पत्रे आङ्ग्लशासनपद्धत्याः गुणग्रहणं लोकमान्यैरुदारमनसा कृतं तस्मिन्नेव पत्रे तैरेवं लिखितमासीत् 'आयर्लंडदेशे आयरिशजना यथा स्वराज्यसम्पादनाय प्रयतन्ते तथा भारतीया अपि स्वराज्याकाङ्क्षया प्रयतन्ते' इति । एतत्सर्वं चिरोलमहाशयेन सुखेनैव विस्मृतम् ।

स्वराज्यसम्पादनाय राष्ट्रियसभा प्रयतते । अतः सा कथं प्रवेष्टव्या इत्यस्मिन् विषये विमर्शः समारब्धः । मद्रासनगरे जातं राष्ट्रियसभाधिवेशनमुद्दिश्य केसरिपत्रे १९१५ संवत्सरस्य जानेवारीमासस्य पञ्चमे दिवसे लोकमान्यैर्लिखितम् 'नेमस्त-राष्ट्रियपक्षयोर्ध्येये अभेदः । प्रतिज्ञापत्रके हस्ताङ्कनमपि कर्तुं प्रतिनिधयः सज्जा अभूवन् । परं सामोपचारस्थाधा मुम्बापुर्यामेवावरुद्धा भवन्ति इति स्पष्टं जातम् । मुम्बापुरीस्थराष्ट्रसभाधुरीणानां राजनीतिमार्गः कियतांशेन जनानां मान्यः इत्यत्र मद्रासनगरे अचिरादेव सम्पन्नाय राष्ट्रियसभाधिवेशनाय नानादेशागतप्रतिनिधीनां संख्या एव प्रमाणम् । सपादषट्शते प्रतिनिधिगणे पादाधिकशतं प्रतिनिधयोऽन्यप्रदेशादागता आसन् । तेष्वपि शतं वङ्गप्रदेशात्तथा मुम्बईप्रदेशादुपस्थिताः । एतां दुरवस्थामवलोक्य प्रतिप्रदेशं त्रीन् सदस्यान् स्वीकृत्य पुनःसंधानार्थमेका समितिर्नियुक्ता । राष्ट्रियसभाधिवेशनात् प्रत्यागतेषु प्रति-

निधिषु मद्रासनगरे नेमस्तराष्ट्रियपक्षयोः सन्धिः कथं विफलीभूतः इत्यस्मिन् विषये प्रदेशे प्रदेशे विवादः समुद्भूतः'।

'अमृतबझारपत्रिकायाः' सम्पादकमहाशयैरेवं लिखितम् 'अद्य वा श्वो वा लोकमान्यटिळकमहाशया राष्ट्रियसभामाक्रमिष्यन्ति इति कृत्वा सामोपाया विफलीभूताः। मुम्बापुरीस्थेनैकेन नेमस्तपक्षीयेण स्वागतसमित्यै सुगुप्तमेकं पत्रं प्रेषितम्। परं विषयनियामकसमित्यां तस्य स्फोटः आवश्यको जातः। पत्रे एवं लिखितमासीत् 'टिळकमहाशयस्योद्दिष्टं शासनसंस्थायाः बहिष्कारः। स यदि राष्ट्रियसभां प्रविशेत् तर्हि आयर्लंडदेशवासिन इव स प्रतिरोधमार्गमवलम्बेत्' इति। तन्निशम्य 'ॲनी बेझंट'-महिलया विद्युत्सन्देशेन लोकमान्याः पृष्टाः। 'असत्यं तत्' इति क्षणादेव लोकमान्यैरुत्तरं प्रेषितम्। परं लोकमान्यानामुत्तरआपणात्प्रागेव पुनः-सन्धानाशा निरस्ता। पश्चात् अस्माभिर्लोकमान्येषु मिथ्यारोपाः कृता इति कृत्वा वाबुभूपेन्द्रमहाशयैः सभाध्यक्षैः क्षमायाचनं कृतम्। इदं सुगुप्तं पत्रं, बेझंटमहिलायाः सन्देशः, तस्य लोकमान्यानामुत्तरम्, एभ्यः सर्वेभ्यः प्राक् सुब्बरायमहाशयेन सह जातं लोकमान्यानां सम्भाषणं, तस्य सुब्बरायकृतवलेखनम्, एतान् सर्वान् विषयानधिकृत्य मद्रासनगरे राष्ट्रियसभाधिवेशनसमये विषयनियामकसमित्यां महान् विवादो जातः। अधिवेशने राष्ट्रियसभाप्रवेशविषये राष्ट्रियपक्षस्य निराशा इति तस्य विवादस्य फलम्। सामोपायाः कथं विफलीभूता एतद्विषयको विवादो वृत्तपत्रेषूभयपक्षसदस्यैः कृतः। विवादविषयो गोखलेमहाशयैः अहितं गुप्तपत्रम्। बहुकालविवादानन्तरं 'स्नेनस्य विपरीतो व्याक्रोशः' इत्युद्वेगप्रदर्शकं शीर्षकं दत्त्वाऽमलेखे लोकमान्यैः कृतं सविस्तरं प्रतिपादनमत्र समासेनावलोक्यते यतोऽर्धमासादेव विधिवशात् कालीयन्यायेन गोखलेमहाशया अकस्मादेव दिवं गताः। अस्या विधिघटनायाः सम्बन्धः पश्चिमैरनेन लेखेन सह संश्लिष्यते।

लोकमान्या लिखन्ति 'सामोपायाः कथं विफलीभूता इत्यस्मिन् विषये 'अमृतबझारपत्रिका'नामकवृत्तपत्रे सम्पादकमहाशयलिखितवृत्तान्तेन गोखलेमहाशयानुयायिनः श्रोत्रसंतप्ता मत्सरवन्तश्च भूत्वा पूर्वाभ्यस्तान्

मार्गानन्वसरन् । वस्तुतस्तु गोखले-टिळकमहाशययोरयं विवादः । परं गोखलेमहाशयानुयायिनोऽस्मिन् विवादे प्रमाणानि दातुं यदा पुरतः समायान्ति तदा स विवादो ग्राम्यरूपं धारयति । ग्राम्यवचनानि, असत्यान्यवतरणानि, हेत्वाभासपूर्णप्रमाणानि, तथा ज्ञानतो वाक्यार्थविपर्यास इत्यादिभिः परिपूर्णमिदं गोखलेपक्षीयाणां प्रतिपादनं मनसि घृणामेव जनयति । एतादृशं लेखनं गोखलेमहाशयानां सम्मतं वाऽसम्मतं वेति न ज्ञायतेऽस्माभिः । परं नैतदाश्चर्यं यदस्य विवादस्य परिणामास्तैरनुभूयन्ते । यथा यथाऽयं विवादो जनैश्चिकित्स्यते तथा तथाऽयमसुखमेवोत्पादयति । परमस्मिन् विवादे किं सत्यं किमसत्यमिति जना जानीयुरिति कृत्वा अनिच्छयाऽप्यस्माभिरस्मिन् विषये पुनर्लिख्यते । यद्येतल्लेखनं कंचन दुनुयात् तर्हि नास्माकमयं दोषः ।

सन्धिविचारः कथं विफलीभूत इति तावत्प्रथममवलोक्यते । अस्मिन् संवत्सरे सामोपाया विचारार्थं प्रथमम् 'अनी वेझंट'महिलया समुद्धृताः। न राष्ट्रियपक्षेण । सन्धिविमर्शार्थमहं पुण्यपत्तनमागमिष्यामीति पत्रं लोकमान्येभ्यस्तया प्रेषितम् । अतस्तैः स्थाने स्थाने पत्राणि सम्प्रेष्य राष्ट्रियपक्षधुरीणानां विचारसरणिः परिज्ञाता । तथैव केचन मन्त्रार्थं पुण्यपत्तनं निमन्त्रिताः । हेतुस्तु अयमेव, यत् वेझंटमहिलाया आगमनात्प्रागेव कंचन राष्ट्रियसभाप्रवेशमार्गं निश्चित्य स मार्गस्तस्याः पुरतो विमर्शार्थं निधातव्य इति । नेमस्तपक्षधुरीणस्याज्ञापत्रं यथा सर्वैः परिपाल्यते तथा न राष्ट्रियपक्षकार्यपद्धतिः । अस्मिन् पक्षे सर्वे निर्णयाः सर्वेषामनुमत्या स्वीकृता भवन्ति । अतो लोकमान्यैरयं मार्गोऽङ्गीकृतः । एवं राष्ट्रियपक्षेण निर्णीतः सन्ध्युपायो मुद्रितलेखरूपेण पुण्यपत्तनं समागतायै वेझंटमहिलायै दत्तः । स एव मराठावृत्तपत्रे मुद्रित आसीत् । राष्ट्रियसभाघटनाया यत् किञ्चित् परिवर्तनं सम्पादयितुमिष्यते तस्य प्रस्तावस्य शब्दरचना गोखलेमहाशयैः कृता इतीदानीं स्पष्टे जाते गोखलेमहाशयास्तावत्कालं परिवर्तनानुकूला आसन्नित्यनेनानुमीयते । मद्रासनगरराष्ट्रियसभाधिवेशने प्रतिनिधीनां पुरत इमं प्रस्तावं विचारार्थं निधातुं वेझंटमहिला इच्छति टिळकमहाशयैरात्मनोऽनुकूल्ना पूर्वमेव प्रकाशं नीता । यद्देशराष्ट्रिय-

पक्षस्याप्येतत्सम्मतमासीत्। संक्षेपतो राष्ट्रियसभाध्यक्षाणां भूपेन्द्रनाथमहाशयानां 'अमृतबझारपत्रिका' सम्पादकैः 'बाबु मोतीलाल घोष' महाशयैः सह कलकत्तानगरात् मद्रासनगरं प्रति प्रस्थानकालपर्यन्तं सर्वत्रास्मिन्वर्षे नेमस्तराष्ट्रियपक्षयोः सन्धिर्भविष्यतीति लोकैर्निश्चितमासीत्। अथ स्थाने एव लोकानामियमपेक्षा।

प्रस्तावशब्दरचनाकारैर्गोखलेमहाशयैरेकं सुगुप्तं पत्रं भूपेन्द्रनाथमहाशयेभ्यः प्रहितम्। तस्मिन् पत्रे गोखलेमहाशया लिखन्ति 'टिळकमहाशयाः शासनसंस्थाबहिष्कारमवलम्बितुमिच्छन्ति। आयरिशजनमार्गस्तेषां सम्मतः। एवमेव तैः सुब्रावमहाशयेभ्यः कथितम्। अतः टिळकमहाशयैः सह सन्धिर्न युक्तः' इति। मन्ये, अन्यदपि किञ्चिदनुचितं तस्मिन् पत्रे लिखितं स्यात्ततो विषयनियामकसमित्याः पुरतो विचारार्थं निधातुं तत्पत्रमयोग्यमिति मत्वा भूपेन्द्रनाथमहाशयैर्गोखलेमहाशयेभ्यो लिखितम् 'अन्यत् पत्रं प्रेषणीय'मिति। गोखलेमहाशयैरपि सुयोग्यमन्यत्पत्रं प्रेषितम्। न केवलमेवम्। परं सन्धिविच्छेदार्थं केचन स्वपक्षीया अपि प्रतिनिधिरूपेण मद्रासनगरं प्रहिताः। विषयनियामकसमित्यां यदाऽयं सन्धिविषयो विचारार्थं गृहीतस्तदा प्रायेण सर्वे सदस्या अनुकूला आसन्। परं भूपेन्द्रनाथमहाशयैर्गोखलेमहाशयानां पत्रस्य विचारो यदा निवेदितस्तदा सदस्या अमन्यन्त 'टिळकमहाशयाः शासनसंस्थाबहिष्कारमभिलषन्ति' इति। बेसंटमहिलाप्येवममन्यत। अतस्तया विपुलसन्देहेन लोकमान्याः स्पष्टीकरणार्थं प्रार्थिताः। लोकमान्यैस्तत्क्षणं सन्देशः प्रहितः 'शासनसंस्था बहिष्कार्या इति कदाऽपि मया नोक्तम्। राष्ट्रियपक्षानुयायिनः स्थानिकस्वराज्यसंस्थासु पदानि सम्पादयन्त्येव' इति। अन्येद्युः बेसंटमहिलयाऽयं सन्देशो विषयनियामकसमित्यां वाचितः। वाचिते सन्देशे गोखलेमहाशयलिखितगुप्तपत्राधारेण लोकमान्येषु कृता आरोपा भूपेन्द्रनाथमहाशयैः प्रतिसंहृत्य क्षमायाचनं कृतम्। परं गुप्तपत्रस्य कार्यं सफलं जातम्। सन्धिकार्यार्थं समितिमेकां नियुज्य सभया कार्यनिपातः स्वीकृतः। सत्यार्थप्रकाशकः एवं वृत्तान्तः। अस्मिन् वृत्तान्ते यदि कश्चन प्रमादं दर्शयेत् तर्हि तदस्माकमानन्दाय कल्पेत। परम् अस्माभिर्यो वृत्तान्त उपन्यस्तस्तदाशयेन

सन्धिविषये नास्माकं महत्याशा । गोखलेमहाशयानां गुप्तपत्रात्प्राक् सर्वं ऋजुमार्गेणावर्तत । परं पत्रकेणानेन सर्वः सन्धिमार्गोऽवरुद्धः । गोखलेमहाशया वा भूपेन्द्रनाथमहाशया वा यावत्कालमेतत् पत्रं प्रकाशतां न नेष्यन्ति तावत्कालमस्य विषयस्य निर्णयो न स्यात् । सामोपायाः सर्वैः प्रकाशमनुसृता आसन् । तत्र गुप्तपत्रस्य किं प्रयोजनम् ? अशिष्टोऽयं मार्गः । गोखलेमहाशया वदन्ति 'शासनसंस्थाबहिष्कारः' इति शब्दाः पत्रे नासन् । अन्यसदस्यैस्तदा पृष्टम् 'अप्यन्ये केचन एतदर्थकाः शब्दास्तस्मिन् पत्रे वर्तन्ते ?' अस्य प्रश्नस्योत्तरं परिहृत्य गोखलेमहाशयाः पृच्छन्ति 'शासनसंस्थायाः बहिष्कारः इत्यस्य कोऽर्थो युष्माभिः क्रियते' । परम् अस्य प्रतिप्रश्नस्यार्थं सम्यग्ज्ञातुं सदस्याः समर्था आसन् । अनेनैव पत्रेण सर्वेषामेवं बुद्धिरासीत् यल्लोकमान्याः शासनसंस्थाबहिष्कारकामा आसन्निति । अथ यदा भूपेन्द्रनाथमहाशया अजानन् तदसत्यमिति तदा तैरुदारमनसा मिथ्यारोपार्थं क्षमायाचनं कृतम् । परं गोखलेमहाशया न कथयन्ति पत्रस्थान् शब्दान्, न वा प्रकाशं नयन्ति प्रेषितं पत्रम् । प्रत्युत तेषामनुयायिनः टिळकमहाशयेषु अपशब्दप्रहारान् कुर्वन्तीत्येतत् शिष्टसम्मतं, विपरीतं वेति निर्णयन्तु वाचका एव । ऋजुमार्गस्तु गोखलेमहाशयास्तत्पत्रं वृत्तपत्रे मुद्रयन्तु । तस्मिन् कृता आरोपा यदि सत्याः स्युस्तर्हि टिळकमहाशयास्तान् सानन्दं स्वीकुर्युः इति ।

एवं बहु विलिख्य प्रमाणानि दत्त्वा सुबरावमहाशयैः सह जातं सम्भाषणमुल्लिख्य लोकमान्या निवेदयन्ति 'सुबरावमहाशयैस्सह जातस्य सम्भाषणस्य सारांशस्तैः स्वयं लिखितः । यदाऽहं केळकरमहाशयैस्सह तान् द्रष्टुं तेषां सदनं गतवान् तदा मम श्रवणार्थं तैः स सारांशो वाचितः । पञ्चषेषु स्थलेषु किञ्चित् शुद्धीकरणं मया सूचितम् । स लेखः सुबरावमहाशयैर्मद्रासनगरं नीतः' इति ।

अनन्तरमस्मिन्प्रलेखे वेझंटमहिलाया विद्युत्सन्देशस्तथा लोकमान्यप्रहितमुत्तरमपि मुद्रितम् । एवं निवेद्य समारोपे लोकमान्यैर्लिखितम् 'अन्ते वयमेवं ब्रूमः । अत ऊर्ध्वमस्य विवादस्य न किमपि प्रयोजनम् । नेमस्तपक्षीया राष्ट्रियपक्षाय राष्ट्रियसभाप्रवेशमनुजानन्तु न वानुजानन्तु । तत्कृते गुप्तपत्राणामाश्रयो न शिष्टसम्मतः । तथैव राष्ट्रियपक्षस्य भाषणानां

वा लेखानां वा विपर्यासो न कर्तव्यः । तेन शासनसंस्था विपरीतं जानाति । गोखलेमहाशयानां तथा टिळकमहाशयानां चितेन्धनानि प्रायेण 'ओंकारेश्वर'-श्मशानं-गतान्यासन् । अतो यदि टिळकमहाशया राष्ट्रियसभां प्रविशन्ति तर्हि तत्र तेषां मताधिक्यं भवेदिति सुतरामशक्यप्रायम् । राष्ट्रियसभा अखिलभरतखण्डस्य वर्तते । न केवलं टिळकमहाशयानाम् । न वा गोखलेमहाशयानाम् । तस्याः कार्यपद्धतिस्तु सभाधिवेशने निर्धारयितव्या । अतः सदस्याः सभायामात्मनो विचारप्रणालिं प्रमाणीकुर्वन्तु । तेषां बहुमतेनैव काचित्प्रणालिः सम्मता भवेत्' इति ।

## २ गोखलेमहाशयनिधनम्

एवंविधा महत्त्वो विचारा लोकमान्यैरस्मिन् लेखे प्रकाशिताः । एवं स्थिते नेमस्तपक्षीयालत्पत्रं प्रसिद्धिं नयन्ति न वा नयन्ति इत्यौत्सुक्येन प्रतिपालयिष्यता जनेन अकस्माद्वज्राघात इव गोखलेमहाशयानां निधनवार्ता श्रुता । अतो लोकेषु केचिज्जना लोकमान्यान् दूषयन्ति स्म । तेऽब्रुवन् 'लेखनस्थचितेन्धनशब्दो गोखलेमहाशयान् प्रति अविघातयत' । वस्तुतस्तु नैतादृशोऽर्थस्तस्मिन् लेखे आसीत् । गोखलेमहाशयानां निधनं लोकमान्या ऐच्छन् इत्यासुरी कल्पना असह्या भवति । अन्यच्च । वयोभिः संवत्सरैर्ज्यायांसो लोकमान्याः गोखलेमहाशयेभ्यः । अतः कालक्रमेण प्रथमं लोकमान्यानामेव निधनं सम्भवेत् । न गोखलेमहाशयानाम् । परं पूर्वमदूषितमनस्सु जनेषु ईदृग्विवेकः कथं स्यात् । लेखस्थशब्दैर्गोखलेमहाशयानां निधनं समीपवरमागतमिति कल्पना कल्पकस्य क्षुद्रमनोवृत्तित्वं सूचयति ।

अस्मिन् समये लोकमान्या गीतारहस्यग्रन्थपाठार्थं सिंहगडनाम्नि ऐतिहासप्रसिद्धदुर्गे यथापूर्वं निवासार्थं गता आसन् । श्रुतमात्रायां गोखलेमहाशयनिधनवार्तायां लोकमान्यवर्यैरिमां दुःखवार्तां तेभ्यः कथयितुं दूताः प्रहिताः । सत्वरमेव लोकमान्याः पुण्यपत्तनमागत्य गोखलेमहाशयानामन्त्ययात्रां प्रविष्टाः । ओंकारेश्वरनाम्नः शिवालयस्य निकटवर्तिपुलिने अन्त्यसंस्कारप्रसङ्गे तैर्भिन्नशब्दैर्गोखलेमहाशयानां गुणगौरवं कृत्वा, तेषां निधनेन जातां राष्ट्रहानिं निवेद्य, उपस्थितेभ्यो विद्यार्थिजनेभ्यो गोखलेमहाशयपदिष्टम् 'केवलमश्रुपातेन वा विलापेन वा किं प्रयोजनम् ? युष्मासु केचन यदा गोखले-

महाशया इव राष्ट्रकार्यधौरेया भवेयुस्तदैव गोखलेमहाशयानां जीवात्मा शान्तिसुखं लभेत ' इति ।

' मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ' इति शीर्षकं दत्त्वा केसरिपत्रे लोकमान्यैरग्रलेखे गोखलेमहाशयकृतविविधकार्यसमालोचनं कृतम् । लोकमान्यानां स्वार्थत्यागोदाहरणेन मोहिता गोखलेमहाशयास्तेषां निमन्त्रणेनैव ' न्यू इंग्लिश स्कूल'नामकं विद्यालयमध्यापनार्थं प्रविष्टाः । महाविद्यालये तेषां गणितशास्त्रनैपुण्यम्, आङ्ग्लभाषाप्रभुत्वम्, इतिहासार्थशास्त्रपारंगतत्वम् इत्यादयो गुणा विद्यार्थिजनस्य कल्याणायाभूवन् । राजकारणविषये रानडेमहाशयानां सच्छिष्या गोखलेमहाशयाः । सार्वजनिकसभाकार्यमारभ्य वरिष्ठविधिमण्डलकार्यान्तं यावत्सर्वाणि कर्याणि गच्छता कालेन सम्पाद्य विविधैरङ्गप्रत्यङ्गैः राष्ट्रकार्यं विधाय अकाले एव गोखलेमहाशया दिवं गता इति ।

## ३ राष्ट्रियपक्षपरिषद्

विफलेषु सन्धिप्रयत्नेषु लोकमान्यैरात्मनो राष्ट्रियकार्यं समारब्धम् । ' बॅप्टिस्टा'महाशयानामध्यक्षत्वे मुम्बईप्रदेशराष्ट्रियपक्षाधिवेशनं पुण्यपत्तने गृहीत्वा महायुद्धं, गोखलेमहाशयनिधनं, राष्ट्रियसभाप्रवेशः, सन्धिकार्यमित्यादिविषयकाः प्रस्तावाः राष्ट्रियकार्यं प्रगतिपथं नेतुं सभायां सम्मताः कृताः । अनेन राष्ट्रियपक्षाधिवेशनेन लोकमान्यैर्महद्यशः सम्पादितं राष्ट्रियकार्यं च प्रगतिपथमारूढम् ।



# १३ स्वराज्यसङ्घपर्व

## १ स्वराज्यसङ्घस्थापना

स्वराज्यसङ्घस्थापनाविषयको विमर्शो लोकमान्यैरात्मनः सहकारिभिः समारब्ध आसीत् । तस्योपक्रमोऽपि तैः कश्चित् कृतः । परं बेझंटमहिलया मद्रासप्रदेशे 'होमरूल लीग'नामिका एका संस्था स्वराज्यसम्पादनार्थं स्थापिता । राष्ट्रियसभायास्तदेकाङ्गमासीत् । राष्ट्रियसभाप्रतिज्ञापत्रकमनुसृत्य लोकेभ्यः स्वराज्यशिक्षणदानमस्याः संस्थाया उद्देशः ।

महम्मदधर्मिणामपि एका 'मुस्लिम लीग'नामिका संस्था आसीत् । 'महम्मदअली जीना'महाशया इव केचन तस्या धुरीणास्तां राष्ट्रियसभासमीपमानेतुं सयत्ना आसन् । राजकीयविषये समानोद्देशो राष्ट्रियसभायाः मुस्लिमलीगसंस्थायाश्च । अतः प्राज्ञो जनः एवममन्यत पक्षाभ्यामप्येकीभूय कार्यं कर्तव्यमिति ।

## २ फेरोजशाहा मेथामहाशयनिधनम्

अस्मिन् संवत्सरे फेरोजशाहा मेथामहाशयाः पञ्चत्वं गताः । निधनसमये तेषां वयः शरदां सप्ततिः । मृगेन्द्रसमानसारो वाचोयुक्तिपटुरयं पुरुषो मुम्बापुरीस्थानामग्रणीः । पञ्चचत्वारिंशत् समा एतैर्देशकार्यार्थं प्रत्यहं कश्चित्कालं दत्त्वा यापिताः । प्रथमश्रेणीस्थोऽयं विधिशास्त्रमहापण्डितो राजकारणमात्मनः एकं कर्तव्यममन्यत । नेमस्तपक्षाग्रणीरयं मुम्बईनगरपालिकाया लोकनियुक्तसदस्यः । कतिचित् वत्सराणि राष्ट्रियसभायाः सूत्रधारोऽयम् । परम् एषां राजकारणं निवेदनपत्रप्रार्थनापत्राणामग्रवो न प्रगतम् । लोकमान्येभ्य एते द्वादशवर्षैर्ज्यायांसः । अतो यथा गोखलेमहाशयान् तथा लोकमान्यानपि यूनामयमग्रणीरिति मेथामहाशया अमन्यन्त । राष्ट्रकार्येषु तयोरुभयोर्न कदाऽप्यैकमत्यम् । उभावपि कठिनत्वचौ, मानधनौ, प्रकृत्या आग्रहिणौ च । मेथामहाशयानां बुद्धौ स्वार्थत्यागो नास्फुरत् । सामान्यजनानामप्रिया मेथामहाशयाः, यतस्ते तेभ्यः सुदूरं निवसन्ति । उन्नसः प्रांशुदेहो विपुलश्मश्रुराजिर्महार्हवस्त्रपरिवृतो घनगर्जितमिव गम्भीरध्वनिरयं पुरुषसिंहः आत्मनोऽमोघवक्तृत्वगुणेन सर्वत्र स्वमाहात्म्यमस्थापयत् ।

मेथामहाशयानां निधनेन राष्ट्रियसभायाः महती हानिर्जाता । अस्मिन् संवत्सरे राष्ट्रियसभाधिवेशनं मुम्बापुर्यामासीत् । नेमस्त-पक्षीयाणामाग्रहस्तु लोकमान्यैरधिवेशनार्थं मुम्बापुरीमागन्तव्यमिति । परम् असम्भाव्यं तत् । अन्ते सत्यप्रसन्नसिंहमहाशयानामध्यक्षत्वे प्रगतिपराः प्रस्तावाः सम्मताः । प्रतिनिधिप्रेषणविषयकाः सकला राष्ट्रिय-पक्षसूचनाः सम्मताः ।

## ३ मुम्बईप्रदेशपरिषद्

खिस्ताब्दस्य १९१६ संवत्सरारम्भादेव लोकमान्यैर्द्विविधोद्योगः समारब्धः–राष्ट्रियसभाप्रवेशः स्वराज्यसङ्घस्थापना च । मुम्बईप्रदेश-परिषदोऽधिवेशनं 'वेळगांव'नगरे निश्चितम् । युक्त एवायं कालोऽस्य विषयस्य चर्चायाः इति मत्वा लोकमान्यैरात्मनो यत्नः समारब्धः ।

अत्रान्तरे पुण्यपत्तननागरिकैरेका सभां निमन्त्र्य 'लॉर्ड हर्डिज'-नामकाय भारतस्य प्रमुखराजप्रतिनिधये एकं मानपत्रमुपायनीकृतम् । अस्य राजप्रतिनिधेः पञ्चवार्षिकनियतकालखण्डः प्रजानां कल्याणायाभवत् । भारतीयराजकीयविषये अनेनात्मनः सहानुभूतिं प्रकटय्य भारतीयानां स्वराज्याकाङ्क्षा न्याय्या, युक्ता चेति मतं प्रदर्शितम् । तस्मात् 'अण्णा-साहेब पटवर्धन'महर्षीणामध्यक्षत्वे जातायां पुण्यपत्तननागरिकसभायां खाडिलकरमहाशयैर्मानपत्रविषयकः प्रस्तावः सूचितः । प्रस्तावे एवं लिखितम् 'सङ्कटान्यविगणय्य हार्डिंजमहाशयैर्भारतविषयिकाऽऽत्मनः सहानुभूतिः प्रदर्शिता, भारतस्योत्कर्षाय च यथाशक्ति समुद्यमः कृतः इति कृत्वा इयं सभा नागरिकाणां कृतज्ञताबुद्धिं दर्शयति' । प्रस्तावस्यानुमोदनकाले लोकमान्यैर्हार्डिंजमहाशयानां पञ्चवार्षिककालखण्डकार्याणि समालोच्य तेषां गुणसमुच्चयो वर्णितः । अनेन कर्मणा लोकमान्याः शासनसंस्थाबहिष्कार-वादिनः सन्तीति दोषो निरस्तः

'वेळगाव'नगरे मुम्बईप्रदेशपरिषत् खापर्डेमहाशयानामध्यक्षत्वे जाता । स्वागताध्यक्षैर्बेल्वीमहाशयैर्भाषणे शरदां विंशत्याः प्राक् जातस्याधि-वेशनस्योल्लेखः कृतः । गोखलेमहाशयानां निधनविषयको दुःखनिदर्शकः प्रस्तावो गौरवपूर्वकं सम्मतः । सैनिकशिक्षणं, स्वयंसेवकसङ्घः, राजकीयवन्दिजन-

मुक्तता, स्वराज्यसङ्घयोजना, भारतीयवस्तुप्रचारः इत्यादिविषयानधिकृत्य प्रस्तावाः सम्मताः। परं प्रमुखप्रस्तावस्तु सन्धिविषयकः— राष्ट्रियसभाप्रवेशविषयकः। 'टिळक-वेळ्वी-बॅप्टिस्टा' महाशयानां समित्या कृतं राष्ट्रीयसभाप्रवेशविषयकं निवेदनमधिवेशनस्य सम्मतम्। राष्ट्रकल्याणं तथा महायुद्धकालं सम्यग्विमृश्य नेमस्तराष्ट्रियपक्षसन्धिः सर्वथा इष्टः। मुम्बापुर्यां जाते राष्ट्रियसभाधिवेशने सम्मतं घटनापरिवर्तनं यद्यपि न सन्तोषकरं तथाऽपि राष्ट्रियसभां प्रविश्यैव समुद्योगः कर्तव्यः। तत्कृते टिळक-खापर्डे-बॅप्टिस्टा-वेळ्वी-केळकरमहाशयानामेका समितिर्नियोक्तव्या इति प्रस्तावः प्रतिनिधीनां सम्मतो जातः। महता यत्नेन सम्मतस्यास्य प्रस्तावस्य फलं सपद्येव दृष्टम्। प्रस्ताववार्तामाकर्ण्य 'टाइम्स'पत्रेण लिखितं 'जिता राष्ट्रियसभा टिळकमहाशयेनानेन प्रस्तावेन' इति। अस्मिन् विषये वेळ्वी-भट-मुंजे-सेटलूरमहाशयानां स्मृतिशलाकाः याचनीयाः सन्ति।

मद्रासप्रदेशे 'होमरूल लीग'नामिकां संस्थां संस्थाप्य बेझंटमहिलया स्वराज्यविषयकान्दोलनं समारब्धम्। स्थाने स्थाने स्वराज्यसङ्घस्य शाखाविस्तारो जातः। जागृताऽभूत् शासनसंस्थाऽनेनान्दोलनेन। 'प्रेस अॅक्ट्'-नामकेन विधिशास्त्रेण दण्डितेषु वृत्तपत्रेषु बेझंटमहिलायाः 'न्यू इंडिया'-नामकं वृत्तपत्रमासीत्। परिष्टन्यायालयेऽभियोगः कृतः। परं व्यर्थम्। अनन्तरं मुम्बईप्रदेशेऽपि तस्याः प्रवेशो निरुद्धः।

## ४ एकपष्टिमहोत्सवः

वेळगावनगरे मुम्बईप्रदेशपरिषदं समाप्य सातारानगरे नागरिकाणां सत्कारं स्वीकृत्य खापर्डेमहाशयैः सह लोकमान्याः पुण्यपत्तनं गत्वा निकटवर्तिनि 'सिंहगड'नाम्नि दुर्गे वसतिं चक्रुः। केसरिपत्रे लेखनं गीतारहस्यसिद्धान्तविवादाः इत्यादीनि तेषां कार्याणि प्रचलितान्यासन्।

अस्मिन् समये लोकमान्यविषयकजनमतनिदर्शकमेकं महदान्दोलनं जातम्। ख्रिस्ताब्दस्य १९१६ वत्सरस्य जुलैमासे लोकमान्यानामायुषः शरदां षष्टिः सम्पूर्णा। एकं संवत्सरचक्रं सम्पूर्णम्। द्वितीयं समारब्धम्। महत्त्वपूर्णोऽयं दिवसो भारतीयानाम्। एतं दिवसमुद्दिश्य धर्मशास्त्रे विधिरपि विहितः। उत्सर्जनोपाकरणसांवत्सरिकश्राद्धमहालयादिधार्मिक-

विधयो यद्यपि लोकमान्यैर्नियमेनानुष्ठितास्तथाऽपि अन्यगृहकृत्येषु ते सामान्येनोदासीनाः । अतः षष्ट्यब्दिपूर्तिविधिं ते समाचरिष्यन्ति न वेति न ज्ञायते । मंडालेनगरे कारावासं गतानां लोकमान्यानां जन्मतिथिं भिषग्वराः कवडेमहाशयाः प्रतिवत्सरं पालयिष्यन्ति स्म । अतस्तेषां मनसि कल्पना समुद्भूता, यदस्मिन् संवत्सरे महता गौरवेणायं विधिरनुष्ठातव्य इति एवं लोकमान्यानां वयस्यैः सार्वजनिकसभायाः सभागृहे केचन नागरिका विमर्शार्थं निमन्त्रिताः । पुराणकीर्तनवेदघोषाभिषेकभोजनद्रव्यदानमानपत्रादयो विविधाः प्रकाराः सभायां सूचिताः । यद्यपि व्यक्तिनिष्ठोऽयं विधिस्तथापीदानीं टिळकमहाशया लोकमान्यरूपेणैका समष्टिरूपा संस्था सञ्जाताः । नैको व्यष्टिरूपः पुरुषः । अतस्तेषामभिनन्दनमायुरारोग्यचिन्तनं सार्वजनिकरूपेणाधिकं लोकरुचिकरं भवेदिति कैश्चित्तत्र प्रतिपादितम् । परम् अनेनासन्तुष्टः कश्चित् सदस्योऽब्रवीत् 'नैते प्रकारा अस्माकं लोकमान्यसम्बन्धिनीं श्रद्धां याथातथ्येन प्रकटयिष्यन्ति । कारागृहं गतेषु लोकमान्येषु बहुभिर्जनैर्जपोपवासाभिषेकादिकर्माण्यनुष्ठितानि । परं तस्य वार्ताऽपि शासनसंस्थया न श्रूयते । व्यक्तिनिष्ठमेतत्कर्म । अन्यच्च । शासनसंस्थाया अनेन किं प्रयोजनम् । अयं समयस्तु एतादृशो यस्मिन् सर्वे जना यथाशक्ति यथामति यथारुचि लोकमान्यविषयकमात्मनो भावं प्रकटयेयुः । स्वराज्यसङ्घप्रचारार्थं द्रव्यमावश्यकम् । अतो यद्येकलक्षरूपकान् वयं तेभ्यो दास्यामस्तर्हि स्वराज्यसङ्घस्यान्दोलनार्थं तन्महत्साहाय्यं भविष्यति । शासनसंस्थाऽपि लोकमान्यानां लोकप्रियत्वं द्रक्ष्यति । तथैव बहवो जनास्ताननुसरन्ति इत्यपि दृष्टं स्यात् । अहमिदं सत्यं वदामीति द्योतयितुं रूपकाणां प्रथमसहस्रमहं दास्यामि' इति ।

अनेन विचारेण स्तम्भिता उपस्थितजनाः । क्व अतिह्रस्वोऽयं कालावधिः, क्व च लक्षसंख्यापरिमितो द्रव्यनिधिः । कथमिदं सम्भवेदिति चिन्ता मनसि समुत्पन्ना । उपस्थितजनैरनुमितं कियान् द्रव्यनिधिर्वयं सम्पादयेम इति । रूपकाणां सप्तसहस्रं सभायामेव संकलितम् । क्षणे क्षणे इयं कल्पना वृद्धिं गता । मित्रैर्मन्त्रितम् । दूताः प्रहिताः । पत्राणि

प्रेषितानि । तिथिनिर्णयः कृतः । निधिकार्यं समारब्धम् । जुलैमासस्य त्रयोविंशे दिवसे षष्ट्यब्दिमहोत्सवो निश्चितः ।

मासार्धात् मुम्बापुरी-वऱ्हाड-नागपुर-कर्णाटकादिप्रदेशेभ्यः समागतेन वृत्तान्तेनेयं कल्पना दृढीभूता । यथा यथा षष्ट्यब्दिमहोत्सवदिवसः समीपमायाति तथा तथाऽस्माकं निधिविषयकं भयं दूरतरं प्रधावति । रूपकाणां प्रथमसहस्रं जुलैमासस्य चतुर्थेऽहनि कोषागारे सङ्गृहीतम् । चरमसप्ताहे निधिस्वरूपमेवमासीत्— अष्टादशे दिवसे रूपकाणां पञ्चसहस्रं सम्प्राप्तम्, एकोनविंशे दशसहस्रम्, विंशे दिने पञ्चसहस्रम्, एकविंशे अष्टसहस्रम्, द्वाविंशे द्विसहस्रम्, त्रयोविंशे दिवसे पञ्चाशत्सहस्रम् । अनेन क्रमेण वृद्धिं प्राप्नोत् द्रव्यनिधिः । उत्सवदिवसे रूपकान् गणयितुमप्यवसरो न लब्धः ।

पूर्वनिर्दिष्टजुलैमासस्य त्रयोविंशेऽहनि प्रातःकाले होमहवनरुद्राभिषेकदेवतानुष्ठानादिधार्मिकविधिं परिसमाप्य वेदपठनम्, अन्नसन्तर्पणम्, रुग्णसाहाय्यम्, पुण्यपत्तनस्थसंस्थाभ्यो द्रव्यदानम्, रात्रौ हरिकीर्तनमित्यादिकार्यक्रमो जातः । प्रधानोत्सवः सायंकाले लोकमान्यानां भवनेऽभूत् । विस्तीर्णमपि भवनप्राङ्गणं जनाकीर्णं जातम् । मुद्रणालयशिखरमपि प्रेक्षकैर्व्याप्तम् । शतशो वयस्याः सत्कारार्थं निमन्त्रिताः । मुम्बापुरीतः स्वयंसेवकगणः समागत. । अध्यक्षस्थानं अण्णासाहेब पटवर्धनमहर्षिभिर्मण्डितम् । अभिनन्दनसन्देशानां क्रमः प्रदीर्घ आसीत् ।

अनन्तरं गीर्वाणभाषायां लिखितं मानपत्रं समर्पितम् । तस्यानुवादो मराठीभाषायामाङ्ग्लभाषायां च कृत आसीत् । 'मानपत्रे प्रथमं परमेश्वरं स्मृत्वा षष्ट्यब्दिमहोत्सवनिमित्तेन लोकमान्यानभिनन्द्य जनानामानन्दः प्रदर्शितः । 'न्यू इंग्लिश स्कूल'संस्थापक', 'डेक्कन एज्युकेशन सोसायटी'-समुत्पादकः, 'फर्ग्युसन्'महाविद्यालये ख्यातनामा प्राध्यापकः, केसरी-मराठावृत्तपत्रयोः सम्पादकः, राष्ट्रियसभायास्तथा विधिमण्डलस्य सदस्यः, अथ च राष्ट्रियान्दोलनस्याद्यप्रवर्तक इति विविधरूपेणात्रभवद्भिः कृतां जनसेवां वर्णयितुमसमर्थाः शब्दाः । सदाचारः स्वार्थत्यागः मनोधैर्यमित्यादिगुणगणेनात्रभवतां चरितमादर्शभूतम् ।

असिधाराव्रतमिव लोकसेवाव्रतमपि कष्टप्रदम् । तस्मिन् प्राप्तानि सङ्कटान्यविगणय्यात्रभवद्भिरात्मनो राष्ट्रकार्यमविरतं कथमाचरितमिति साश्चर्यं सादरं सकौतुकं च जनेनालोक्यते ।

साम्प्रतं विद्वज्जनेषु प्रदीर्घमायुर्मानं भारतदेशे न दृश्यते । तस्मादत्रभवतामेकषष्टिजन्मतिथिरस्माभिर्दृष्टेति महतीयं भगवत्कृपा । इदानीं लोकमान्याः 'जीवन्तु शरदां शतम्' इति प्रणतिपूर्वकं प्रार्थ्यते ।

अत्रभवतामभिनन्दनं जनो रिक्तपाणिना कथं कुर्यादिति मत्वा आजन्मनः स्वार्थत्यागपूर्वककृतामत्रभवतां लोकसेवां मनसि निधाय यत् किञ्चिद्द्रव्यमुपायनीकर्तुकामास्तदतीव स्वल्पं भवेत् । तथाऽपि अस्माभिः सङ्कलितोऽयं द्रव्यनिधिरत्रभवद्भिः स्वीकार्य इति सप्रश्रयं विज्ञाप्यते ।

राष्ट्रकार्यनिरतो जनः सदा स्वार्थनिरपेक्षो वर्तते । तथाऽपि जनेन लोकनेतॄणां सेवारूपं कार्यमविस्मरणीयम् । यदि स विस्मरेत् तर्हि कृतघ्नो भवेत् । अतः कृतघ्नत्वदोषो जनस्य मा भूदिति कृत्वा इदमुपायनं स्वीकरणीयम्' इति शम् ।

अनन्तरं 'खाजीसाहेब खरे'महाशयैरुक्तम् 'लोकमान्यकीर्तिडिण्डिमनिनादोऽखिलं भरतखण्डं पूरयति । अतस्तेषामुपद्रवो विरोधश्च नैसर्गिक एव । पाश्चात्त्यदेशानामितिहास एवमेव कथयति ' इति । 'दादासाहेब करंदीकर'महाशया अवदन् 'सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ' इति भगवदुक्तिर्लोकमान्यैरात्मसात् कृता इति । 'गङ्गाधरराव देशपाडे'महाशयैरभिहितम् 'सङ्कटान्यविगणय्य शक्तिसर्वस्वमर्पयित्वा स्वकर्तव्यं करणीयमिति टिळकतत्त्वमजरामरं वर्तते ' इति । अनन्तरं केळकरमहाशयैर्द्रव्यनिधिविषयकवृत्तान्तः कथितः । सङ्कलितो द्रव्यनिधिः रूपकाणां पञ्चाशीतिसहस्रादूर्ध्वं वर्तते । लक्षसंख्यायाः यत् किञ्चिदूनं भवेत्तदपि केचित् पुपूर्यन्ति इत्यत्रत्यैर्जनैराश्वास्यते । एवं सङ्कल्पितो लक्षसंख्यापरिमितो द्रव्यनिधिः परिपूर्णो जात इति घोषयितुमाज्ञापितोऽस्मि ।

अनन्तरं रुद्धान्तःकरणेन लोकमान्यैरात्मनः कृतज्ञताबुद्धिः प्रदर्शिता । तैर्भाषितम् "यथाऽयं द्रव्यनिधिः सहस्रशो वृद्धस्तथा मम कृतज्ञताशब्दा अपि वृद्धिं प्राप्नुयुः । अद्यावधि युष्माभिर्नैकप्रकारेण मह्यं साहाय्यं दत्तम् ।

तदृणं मया कथमपनेयमिति यावच्चिन्तयामि तावत् द्वितीयमिदं समुपस्थितम्। अतोऽहं मन्ये 'मया ऋणमुक्तं कदाऽपि न भाव्य'मिति युष्माकं बुद्धिः। स्नेहस्यैतदाकर्षणमिति मया ज्ञायते। परं तेनोपकारभारो न लघूभवति।

युष्माभिर्दत्तं मानपत्रं मया सङ्कोचेन स्वीक्रियते। परम् एष द्रव्यनिधिः कथं स्वीकार्य इति प्रश्नः। अहं मन्ये न्यास एवायं जनानाम्। अस्यैका कपर्दिकाऽपि मया नोपयोक्तव्या। प्रत्युत मयाऽपि तस्मिन् तुलसीपत्रसंनिभं मम द्रव्यभागं निक्षिप्य लोककल्याणार्थं स निधिर्विश्वस्तसम्बन्धेनैव स्वीकर्तव्यः। तत्सम्बन्धी लेखो यथाऽवकाशं भविष्यति।

जीवनस्य सिंहावलोकनेन मच्चित्तं शङ्कितं भवति। सुखानुभवाद् दुःखानुभवः प्रामुख्येन दृष्टिपथमायाति। गते वयसि क्षीणं भवति शरीरसामर्थ्यम्। अतः शेषे आयुषि पूर्ववदेव भवतां सहानुभूत्या देशकार्यार्थं धैर्यं सामर्थ्यं चाहं लभेयेति बाढं विश्वसिमि"।

मानपत्रस्थस्तुतिशब्दान् निशम्य स्मर्यते मया भर्तृहरिवचनम्—

'परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।'

इति। जातं कार्यं स्वल्पम्। करणीयं शतगुणमधिकं विद्यते। अस्माकं मातृभूमिः सकलान् कार्यार्थमाह्वयति। अतो ज्ञानस्थानजातिपक्षादिभेदान् विस्मृत्य सर्वैर्निजकल्याणायागन्तव्यम्। नात्रावसरः स्पर्धायाः। नायं कालो मत्सरस्य। नैष प्रसङ्गो मानापमानबुद्धेः। न वाऽयं समयः सङ्कटेभ्यो भयस्य। कार्यसिद्ध्यै समर्थः सर्वशक्तिसंपन्नः परमेश्वरः। अस्मत्कर्तव्यं केवलं राष्ट्राभ्युदयार्थं समुद्योगः। तस्य फलमद्य श्वो वा कालान्तरे वा सम्पत्स्यते इत्यत्र नास्ति सन्देहः। तस्य स्वल्पोऽप्यंशो मया जीवता द्रष्टव्य इति मे प्रार्थना इति।

## ५ तृतीयाभियोगः

अयमानन्दमहोत्सवो यथा लोकमान्यवयस्यैरनुयायिभिर्हितचिन्तकैश्च महतोत्साहेन सम्पादितस्तथा शासनसंस्थयाऽपि स्वव्यूहं निगूढं विरच्य

अस्मिन्नेवानन्दोत्सवदिवसे प्रातःकाले तस्य प्रारम्भमभियोगसूचनारूपेण कृत्वा आसुरानन्द उपभुक्तः। अतः षष्ट्यब्दिमहोत्सवो निकटवर्तिजनेन विषादयुक्तमनसाऽनुभूतः। लोकमान्यमानसं तु न विचलितम्, न वा भीतिग्रस्तम्। तैर्मनस्येवं चिन्तितम् 'साम्राज्यस्यायं विपत्कालः। अस्मिन् समये युद्धविरुद्धं न किमपि वक्तव्यम्। प्रत्युत जनस्य सैनिकीकरणाय साहाय्यमपि दातव्यम्। तेन भारतस्य स्वराज्यं समीपतरमागच्छेत्। अतो लोकैर्यदि प्रभूताः शासनाधिकाराः प्रार्थितास्तर्हि तेन राजद्रोहो न भविष्यति'।

स्वराज्यसङ्घप्रचारार्थं लोकमान्यैः प्रवासोऽङ्गीकृतः। प्रदेशपरिषत्काले सार्वजनिकभायां स्वराज्यविषयमधिकृत्य तैर्व्याख्यातम् 'वाणिज्यार्थं समागतानामाङ्ग्लानामितिहासमारभ्य भारते तैः साम्राज्यं कथं स्थापितमिति विशदीकृत्य शासनविषयकाणि सर्वाणि कार्याणि आङ्ग्लदेशीयाः पुरुषा एव कुर्वन्ति, न भारतीयाः' इति तैरुक्तम्। 'स्वराज्यं नाम आङ्ग्लानां स्थानेषु भारतीयानां नियुक्तिः। शासतु नाम भारतीया निजजन्मभूमिम्। को दोषः? एतत् स्वराज्यम्' इति। स्थाने स्थाने लोकमान्यैस्तेषामनुयायिभिर्व्याख्यातम्। अनुदिनं प्रसृतमेतदान्दोलनम्।

## ६ 'नगर'पत्तने व्याख्यानम्

विभागसभाऽधिवेशननिमित्तेन 'तात्यासाहेब केळकर'महाशया 'नगर'नामकं पत्तनं गताः। नगरनागरिकैर्बहुमानेन सत्कारार्थं लोकमान्या निमन्त्रिताः। तैरपि तत्र गत्वा द्विः व्याख्यातम्। विषयस्तु एक एव। प्रथमव्याख्यानेनासंतुष्टाः श्रोतारो द्वितीयेन समाधानं प्रापुः। स्वराज्यविषयकौ जनानामाग्रहश्च स्थाने एवेति निश्चिक्युः। लोकमान्या अवदन् 'भवतु नाम आङ्ग्लदेशनृपतिर्भारतीयानां राजा। परं सर्वे राज्याधिकारा भारतीया एवानुभवन्तु। आङ्ग्लदेशे किं वर्तते? तत्रापि राजपदं विद्यत एव। परं 'पार्लमेंट'नाम्नी लोकसभा अखिलं राज्यं शास्ति। तदेव भारते भवतु इति वयं ब्रूमः। एतत् स्वराज्यम्'। एवं बहु विविच्य लोकमान्यैरुक्तम् "'प्रथमं निजाधिकाराणां न सम्यग्ज्ञानं जनस्य। यदि ज्ञानं, न निश्चयः। यदि निश्चयः, न धैर्यम्। यदि कश्चिदाङ्ग्लाधिकारी पृच्छति

स्म 'अपि त्वं टिळकमहाशयानां व्याख्यानं श्रोतुं गतोऽसि ?' तर्हि केचिद् ब्रुवन्ति 'गतोऽहम्, परं सुदूरं निषण्ण आसम्। अतो मया न तत् सम्यक् श्रुतम्' इति। स्पष्टमेव जनाः कथयेयुः 'गताः स्मः वयं व्याख्यानार्थम्। वयमपि स्वराज्यं प्रार्थयामहे'" इति।

एतानि नगर-बेळ्गावपत्तनव्याख्यानान्यधिकृत्य शासनसंस्थया पुनरेकदा तृतीयो राजद्रोहाभियोगो लोकमान्येषु कृतः। अभियोगपत्रके रक्षापुरुषाधिकारिभिर्लिखितम् 'लोकमान्यानां भाषणानि राजद्रोहपूर्णानि। न्यायालयेन ते पूर्वमस्यैवापराधस्य कृते द्विर्दण्डिताः। परं तेषां स्वभावो न परिवर्त्यते। आयत्यामन्येष्वपि स्थलेषु ते एवमेव व्याख्यास्यन्ति। अतो रूपकाणां पञ्चाशत्सहस्रपरिमितः प्रतिभूः शान्ततारक्षणार्थं तेभ्यो ग्रहीतव्यः। धनसम्पन्ना लोकमान्याः, प्रजासु प्रतिष्ठिताश्च। तेषामनुयायिनोऽपि धनिनः। अस्ते लोकमान्येभ्यो रूपकाणां लक्षम् उपायनीकरिष्यन्ति। अतो लोकमान्या एतादृशं महार्हं प्रतिभुवं दातुं समर्थाः' इति।

अभियोगसमये न्यायालयपद्धतिमनुसृत्य प्रथमं शासनसंस्थाविधिज्ञेन 'किमर्थं प्रतिभूर्ग्रहीतव्यः' इत्यस्मिन् विषये प्रतिपादितम् 'नगर-बेळ्गावादिपत्तनेषु जातानि लोकमान्यानां व्याख्यानानि राजद्रोहपूर्णानि। तानि प्रजानां मनसि शासनसंस्थाविषये द्वेषबुद्धिं जनयन्ति। टिळकमहाशयानामेष स्वभाव एव' इति। अनन्तरं व्याख्यानानामाङ्ग्लभाषायामनुवादो परीक्षणार्थं न्यायालये समर्पितः। अनुवादे बहवः प्रमादाः प्रदर्शिताः। अनन्तरं लोकमान्यानां निवेदनं स्वीकृतम्। अनुवादस्तैः सारांशेन स्वीकृतः। राजद्रोहविषयकं स्पष्टीकरणं विधिज्ञो दास्यतीति तैर्निवेदितम्।

अनन्तरं लोकमान्यविधिज्ञैः 'जीना'महाशयैः सविस्तरं प्रतिपादितम् "इतस्ततः उद्धृतैर्व्याख्यानोपयुक्तैर्वाक्यैः राजद्रोहो न सिध्यति। सम्पूर्णं व्याख्यानं समालोच्य यः परिणामो भवति स एव द्रष्टव्यः। प्रमेयाणां स्पष्टीकरणार्थं दृष्टान्युदाहरणानि या कथिताः कथास्तद्ग्रथिततत्त्वांशेन ग्रहीतव्याः। 'त्रयाणां धूर्तानां कथा' अस्य सम्यगुदाहरणम्। वारं वारं लोकमान्यैरेक एव सिद्धान्तः प्रतिपादितः यदस्माभिः प्राप्तव्यं स्वराज्यं साम्राज्यान्तर्गतमेव। प्रस्तुतः आङ्ग्लनृपतिः सार्वभौमो वर्तते। वर्ततां

नाम। तस्यैवाधिराज्यं स्वीकृत्य भारतदेशेऽस्माकं सर्वाणि राज्यकार्याण्यस्माभिरेव करणीयानि। शासनसंस्थाधिकारिणामिच्छया जना न किमपि कार्यं कुर्युः। सर्वमेतत् परिवर्तनमाङ्ग्लदेशस्थपार्लमेंटसभाद्वारा एव शनैः शनैः सम्पादयितव्यमिति। पीडाकरं व्याघ्रमपि हन्तुं सांप्रतं शासनसंस्थाया अनुज्ञाऽऽवश्यकी। परिवर्तनीयमेतदिति प्रतिपादने को दोषः?" अनेन प्रकारेण व्याख्यानानां समर्थने कृते कनिष्ठन्यायालयन्यायाधीशेनाभियोगनिर्णयो लोकमान्यविरुद्धो दत्तः। निर्णये लिखितम् 'शासनसंस्थया कृपयाऽयमभियोगः १२४ अ परिच्छेदेन न कृत इति युष्माकं भाग्यम्। हेतुस्तु युष्माभिः राजद्रोहपूर्णं न भाषितव्यम्' इति।

## ७ वरिष्ठन्यायालयः

अस्य निर्णयस्य विरुद्धं प्रार्थनापत्रं लोकमान्यैर्वरिष्ठन्यायालये निर्णयपरीक्षणार्थं समर्पितम्। तत्रोभयपक्षविधिज्ञकृतसमर्थनं निशम्य लोकमान्येषु कृतो राजद्रोहारोपः सिद्धो न भवतीति न्यायमूर्तिद्वयेन निर्णीतम्। व्याख्यानानां विमर्शः साकल्येनाऽऽवश्यकः। शासनसंस्थाधिकारिणां शासनपद्धतिदोषाविष्करणं प्रजासु शासनसंस्थासम्बन्धिनीं द्वेषबुद्धिं न जनयति। तथा स्वराज्यशब्दोच्चारणं वा स्वराज्यप्रार्थना वा नाक्षेपार्हा। एवं बहु विमृश्य 'बॅचलर'नामकन्यायमूर्तिभिः स्पष्टमेव लिखितम् 'आङ्ग्लानामधिराज्ये तेषां पर्यवेक्षणेन, साहाय्येन च 'पार्लमेंट'सभासदस्यैर्भारतशासनविषेयकं परिवर्त्यात्मनः कार्यं सम्पादयितव्यमिति टिळकमहाशयस्य भाषणेषु स्पष्टमेव दृश्यते। एवं साकल्येन परिशीलनं कृत्वा राजद्रोहः सिद्धो न भवति। अतः कनिष्ठन्यायालयनिर्णयं परिवर्त्य टिळकमहाशयो दोषारोपान्मुच्यते' इति।

न्यायमूर्ति'शहा'महोदयानां निर्णयो न केवलं लोकमान्यान्मोचयति, अपि तु स न्यायमूर्तीनामौदार्यं बुद्धिप्रागल्भ्यं च प्रकटयति।

वृत्तपत्रसम्पादकैर्लोकमान्यानां तथा न्यायमूर्तीनामभिनन्दनं मुक्तकण्ठेन कृतम्। परम् अस्यानन्दस्य परिसमाप्तिः 'टाइम्स् ऑफ् इंडिया' वृत्तपत्रसम्पादकेन कृता। तेन प्रकाशमुद्घोषितम् 'कनिष्ठन्यायालयेन निर्णीतेऽ-

भियोगे विना विलम्बमस्माभिः कृता टीका अधुना सम्पूर्णतयोपसंह्रियते ' इति । एवं तेन स्वदोषोऽङ्गीकृतः ।

केसरिपत्रे लोकमान्यैरग्रलेखेनाभियोगनिर्णयस्य महत्त्वं विशदीकृत्य वाचकानां मनसि तथा विचारधारा निर्मिता यथा ते स्वराज्यशब्दाद्वा स्वराज्यान्दोलनाद्वा नाबिभयुः । ' मुक्ता टिळकमहाशयाः । ततः किम् ? ' इति प्रश्नस्तैर्वाचकमनस्युत्पादितः । इदमेव शीर्षकमग्रलेखस्य । तेऽलिखन् ' यदि जना अस्य निर्णयस्य लाभं न गृह्णीयुस्तर्हि किं फलं मुक्ततायाः ? ' इति ।

चलितेऽप्यभियोगे स्वराज्यान्दोलनं स्थगयितुं न विचारो लोकमान्यानाम् । अतोऽभियोगनिर्णयात्पूर्वमेव तैरेका व्याख्यानमाला समारब्धा । बॅप्टिस्टामहाशयैः स्वराज्यघटना लिखिता । मद्रासप्रदेशे बेझंटमहिलया व्याख्यानैः स्वराज्यान्दोलनं सञ्चालितम् । वङ्गदेशे ' गोरखपुर'पत्तने वङ्गप्रदेशपरिषदि अध्यक्षपदस्थैः ' चिन्तामणि'महाशयैस्तदेव प्रतिपादितम् । ' अहमदाबाद'नगरे मुम्बईप्रदेशपरिषद् जाता । अध्यक्षस्थानं ' जीना'-महाशयैर्मण्डितम् । अध्यक्षीयभाषणे तैर्नेमस्तपक्षपद्धत्या स्वराज्यविषयः प्रतिपादितः । अग्रे कैश्चिद्विधिमण्डलसदस्यैरेका स्वराज्ययोजना आङ्ग्लदेशं प्रहिता । नोव्हेंबरमासे राष्ट्रियसभया स्वराज्याधिकारदानविषयकं निवेदनं लिखितम् । तथा ' मुस्लिमलीग'संस्थयाऽपि । 'होमरूल लीग'-संस्थायाः स्वराज्यघटना पूर्वमेव लिखिताऽऽसीत् । एवं स्वराज्यविषयकमान्दोलनं प्रतिदिनं प्रगतिपथमारूढम् ।

शासनसंस्थाविरुद्धेऽपि राजद्रोहाभियोगनिर्णये अधिकारिवर्गस्य दृष्टिर्न विशुद्धाऽभूत् । कियपि व्यक्तिनिष्ठकार्यार्थं 'गदग'पत्तनं गतेषु लोकमान्येषु नागरिकाणां मनसि विचारः समुद्भूतः, यत्तैर्लोकमान्यसत्कारः कर्तव्य इति । परं ' धारवाड'विभागप्रशासकस्तत्र यदृच्छयाऽऽगत आसीत् । तेनेमां सत्कारवार्ता निशम्य तत्प्रतिबन्धोपायोऽनुष्ठितः । सत्कारार्थं सभास्थानं समागतानां जनानामपसारणं रक्षापुरुषैरनुष्ठितम् । सभाव्यासपीठमुध्वस्तं कृतम् । सर्वमेतत् लोकमान्यैर्ज्ञातम् । लोकाग्रणीभ्यस्तैरुक्तम् ' आहूयतां परिनिवर्तमानो जनः । निषीयतां व्यासपीठम् '

इति । सपद्येव रक्षापुरुषाधिकारिणा लोकमान्यहस्ते प्रशासकाज्ञापत्रं निहितम् । तस्मिन् लिखितमासीत् ' नगरपालिकामर्यादायां मार्गे लोकप्रक्षोभकं न किमपि लोकमान्यैर्वक्तव्यम् ' इति । तद्वाचयित्वा लोकमान्या रक्षापुरुषाधिकारिणमपृच्छन् ' किमिति जनो युष्माभिरपसार्यते ? ' तेनोक्तम् ' एवमनुष्ठातुं प्रशासकेनाहं मुखेन आदिष्टः ' । लोकमान्यैः कथितम् 'प्रतिबन्धपत्रके सत्कारो न प्रतिषिद्धः । तदर्थमन्यत्पत्रमावश्यकम् ' इति । अतः 'ओगारमन्'महाशयः निवर्त्य पुनः प्रत्यागतोऽवदत् ' अयं सत्कारोत्सवः पञ्चनिमेषमात्रादेव समापयितव्यः ' इति ।

लोक०- सम्मतमेतदस्माकम् ।

पुनरागतेषु जनेषु लोकमान्याः सत्कृताः । तैरपि निमेषमात्रादेकं वाक्यमुच्चैरुच्चारितम् ' विधिशास्त्रपूतं न्यायालयनिर्णीतं स्वराज्यं लोकैः प्रार्थयितव्य'मिति ।

' श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः । '

इति वचनं जनोऽस्मरदिति न चित्रम् ।

' हुबळी'नगरेऽपि लोकमान्या एवं सत्कृताः ।

## ८ ' लखनौ'नगरे राष्ट्रियसभाधिवेशनम्

मुम्बईप्रदेशपरिषदि राष्ट्रियसभाप्रवेशप्रस्तावे सम्मते जाते जनानामुत्साहः शतगुणं प्रवृद्धः । आदिमध्यावसानेषु ' लखनौ'नगरे जातं राष्ट्रियसभाधिवेशनमभूतपूर्वम् । दिक्कालाद्यवच्छिन्नाः सर्वे भावाः । अपूर्वमिदं कालतत्त्वम् । १९०७ संवत्सरं सर्वथा प्रतिकूलम् । सामार्थं विश्वप्रयत्नाः कृताः । परं व्यर्थम् । १९१६ वत्सरे परिवर्तितं कालचक्रम् । महायुद्धं प्रचलितमासीत् । साम्राज्ये महती विपत्तिरापतिता । लोकमान्याः कारागृहान्मुक्ताः । उक्तं च—

यथा चतुर्भिः कनकं परीक्ष्यते
निघर्षणच्छेदनतापताडनैः ।
तथा चतुर्भिः पुरुषः परीक्ष्यते
श्रुतेन शीलेन कुलेन कर्मणा ॥

एवं लोकमान्या अपि न्यायालये पुनः परीक्षिताः । तेषां तत्त्वप्रणालिः सत्येति निर्धारिता । स्वराज्यमार्गस्तैरैष्टः । अतः सञ्चालितं तदर्थमान्दोलनम् । इदमेव दूरदर्शित्वं लोकमान्यानाम् । साम्प्रतं जनस्य जीवशक्तिर्लोकमान्याः । तेषामुपस्थितिर्जनेन सर्वत्रापेक्ष्यते । सर्वेषु पक्षेषु यद्यपि मतभेदा आसन् तथाऽपि सन्धिविषये सर्वेषामैकमत्यम् । अतः सर्वे पक्षाः 'लखनौ'नगरे अधिवेशनार्थमुपस्थातुं समुत्सुकाः । तेन यथार्थतया प्रातिनिधिकं स्वरूपमधिवेशनस्य ।

राष्ट्रियसभाप्रवेशप्रस्तावानुसारतः मुम्बईप्रदेशादासन्नपञ्चशतं प्रतिनिधयः उपस्थातुकामा आसन् । स्वराज्यान्दोलनं सर्वत्र प्रसृतम् । अतो मुम्बईप्रदेशस्थविविधविभागेभ्य आगन्तुकामान् प्रतिनिधीन् लखनौनगरं नेतुमेको विशेषबाष्परथो नियोक्तव्य इति 'डॉ. साठे'महाशयानां कल्पना फलमावहत् । मुम्बई-वऱ्हाड-नागपुर-महाराष्ट्रादिविभागेभ्यः प्रतिनिधिभिरग्निरथे निजस्थानानि प्रवासशुल्कं दत्त्वा निश्चितानि । एतावान् जनोत्साहो यदग्निरथप्रस्थानात्प्रागेव दिनद्वयं सर्वाण्यासनानि परिपूर्णानि । अनुयायिभिः सह लोकमान्या अनेनाग्निरथेन प्रवासमङ्गीचक्रुः । अग्निरथवेलापत्रकमादावेव प्रकाशतां नीतम् । तेन मुम्बापुरीतो लखनौनगरं यावत् सर्वेषु विश्रान्तिस्थानेषु लोकमान्यदर्शनोत्सुकजनः स्वागतार्थं सत्कारार्थं योधामृतपानार्थं प्रतिविश्रान्तिस्थानं नक्तंदिवमुपस्थितोऽभूत् । लोकमान्यानामग्निरथविभागो बाह्यतः पुष्पहारैर्मण्डितः । अतोऽग्निरथेन विजयोत्सवरूपं विधृतम् । 'कल्याण-नाशिक-मनमाड-भुसावळ-इत्यादि-विश्रान्तिस्थानेषु बहवः स्वराज्यसङ्घसदस्या अग्निरथं प्रविविशुः । भुसावळ-विश्रान्तिस्थाने स्वराज्यसङ्घध्वजारोपणं कृतम् । युगान्तरमारूढे सवितरि यात्रिकैरल्पोपहारः कृतः । मध्याह्नसमये 'हारदा'नामके विश्रान्तिस्थाने उत्तमोत्तमा प्रतिनिधीनां भोजनव्यवस्था तत्रत्यैः कृता । 'शाल्यन्नं सघृतं पयोदधियुतं', मिष्टान्नं, रुचिदीप्त्यर्थं व्यञ्जनादिकं सर्वं पर्याप्तमासीत् । विश्रान्तिस्थाने, सत्कारस्थले, भोजनपङ्क्तिषु स्वयंसेवका बद्धपरिकरा आसन् । अतः सर्वाणि कार्याणि विना कालातिपातं सम्पादितानि । तथाऽपि बाष्परथस्य विलम्बो जातः ।

अपराह्णसमये 'हुशंगाबाद'स्थानके शर्करायुक्तं सुगन्धिद्रव्यसंयुतं पयःपानं स्वागतार्थे सुसज्जमासीत्। 'भोपाळ'विश्रान्तिस्थाने महम्मद-धर्मिभिरपि लोकमान्याः सत्कृताः। 'भेलसा-विना-ललितपुर-झांशी' इत्यादिस्थलेषु सत्कारं स्वीकृत्य प्रभाते 'कानपुर'विश्रान्तिस्थाने सर्वे समागताः। तत्राल्पकालं विश्रम्य मध्याह्नसमये सर्वे प्रतिनिधयः 'लखनौ'-विश्रान्तिस्थानं प्राप्ताः। अनन्तरं तत्र महत् जनसंचलनमभूत्।

## ९ अधिवेशनम्

अधिवेशनारम्भे सर्वेषां स्वागतं कृत्वा स्वागताध्यक्षैः 'जगत्नारायण'-महाशयैः राष्ट्रियपक्षसदस्यास्तथा महम्मदधर्मिणो बन्धवो राष्ट्रियसभाप्रवेशस्य कृते अभिनन्दिताः। राष्ट्रियसभाध्यक्षैः 'बाबु अंबिकाचरण मुजुमदार'-महाशयैर्निजानन्दः प्रदर्शितः। तैरुक्तम् "१९०७ संवत्सरे 'सुरत'नगरे 'फ्रेंच'जनानां प्राचीनोद्याने राष्ट्रियसभा शकलीभूता। नवहायनानन्तरं १९१६ वत्सरे अत्र 'केसरबाग'नामकोद्याने तस्याः पुनः सन्धानं जातम्। अतः परं वृद्धजनैस्तरुणा न अनादरणीयाः। अथ च तरुणैर्वृद्धा नोपहसनीयाः। दूरदर्शित्वं, प्रौढविचाराः, सावधानता इति सत्यमेव गुणाः। परं तेषामतिरेको भीरुत्वे, नैतिकाधःपाते पर्यवस्यति। तथैवान्यस्मिन् पक्षे उत्साहः, शौर्यं, सामर्थ्यं, कर्तृत्वशीलता इत्यादयो गुणाः स्तुत्या एव। परं तेषु आततायिता इति दोषो विद्यते। तेन संस्थानाशो भवति। तस्मादुभयपक्षदोषान् वयमावृणवाम। अतः परं राष्ट्रकार्यं प्रगतं करवाम। १९०७ वत्सरानन्तरं नवभ्यः संवत्सरेभ्यः ऊर्ध्वं टिळकमहोदयाः सर्वेषामस्माकं मध्ये पुनरागताः इति कृत्वा तेभ्योऽहं स्वागतं व्याहरामि" इति।

अनन्तरं विषयनियामकसमित्यां राष्ट्रियसभया तथा 'मुस्लिम लीग'-संस्थया मिथो मन्त्रेणैका स्वराज्ययोजना निर्मिता। सा योजनाऽधिवेशने प्रतिनिधीनां पुरतः 'सुरेन्द्रनाथ बानर्जी'महाशयैर्विचारार्थं निहिता। प्रस्तावारम्भे लिखितम् "भारतदेशेन स्वराज्यसुखं पुराऽनुभूतम्। सांप्रतमपि नायमपात्रः स्वराज्योपभोगाय। तथाऽपि शासनाधिकाराणां प्रथमो भाग इति मत्वाऽयं भागोऽस्माभिः स्वीक्रियते" इति। अतोऽनेन प्रस्तावेन स्वराज्यध्वजारोपणं कृतम्।

अस्मिन् विषये केसरिपत्रेण लिखितम् ' १९१६ वत्सरस्य डिसेंबर-मासस्योनत्रिंशो दिवसो भृगुवासरो भारतदेशस्यैतिहासे सुवर्णाक्षरैर्लिखितो भवेद्यतोऽस्मिन् दिवसे गोमतीनद्यास्तीरे लखनौनगरे स्वराज्यध्वजारोपणं कृतम् । अस्मिन् दिवसे भारतदेशेन पक्षभेदं, जातिभेदं, धर्मभेदं विस्मृत्य प्रतिनिधिद्वारा स्वराज्यप्रस्तावः सम्मतः कृतः । अयं प्रस्तावो भारतदेशस्य स्वराज्याकाङ्क्षायाः मुकुटधारणविधिरासीत् । सर्वाः प्रजाः आत्मनः उपायनान्याहृत्योपस्थिताः । अस्मिन् देशे न कोऽपि पक्षो विद्यते यस्य प्रतिनिधयोऽधिवेशने नोपस्थिताः । जातिभेदः, मतवैचित्र्यं, व्यक्तिद्वेष इत्यादयः सर्वे पिशाचाः गोमतीनदीजले विलयं गत्वा, नूतनं मङ्गलरूपं धारयित्वा आशीर्वचनानि व्यतरन् । आत्मनो राष्ट्रकीयं ध्येयं विचेतुं भारतेन पञ्चाशत्समाः यापिताः । परम् अन्ते तेनात्मनो निश्चितं ध्येयं तारस्वरेण तथोद्घोषितं यथा तेन घोषेणाखिलं जगत् निनादितम् । न कदाऽपि तस्य विस्मृतिर्भविष्यति । तस्मादतः परं भारतस्य सर्वे समुद्योगाः स्वराज्य-प्राप्त्यर्थमेव भविष्यन्ति । आत्मनोऽधिकाराः समाप्ता इति साम्प्रतमधि-कारिवर्गो जानीयाद्यतश्चरमयवननरेशराजधान्यां लखनौनगरे महम्मद-धर्मिणस्तथा भारतीयाः शिक्षिताशिक्षिताः सर्वे राष्ट्रियसभाव्यासपीठे एकत्र मिलित्वा स्वराज्यं प्रार्थयन्त । अधिकारस्थानानि महम्मदधर्मिणो गृह्णन्तु वा भारतीयाः स्वीकुर्वन्तु वा । परम् आङ्ग्लास्तेषु स्थानेषु न नियोक्तव्या इति तेभ्यः कथयितुं सर्वे बद्धपरिकरा दृश्यन्ते ' इति ।

डिसेंबरमासस्य त्रिंशे दिवसे, समाप्ते राष्ट्रियसभाधिवेशने, सायं ब्रह्मविद्यामण्डपे 'स्वराज्यसङ्घपरिषद्' जाता । बेझंटमहिलया अध्यक्षस्थानं मण्डितम् । तस्याः सूचनया लोकमान्यैर्भाषितम् ' राष्ट्रियसभया अत्र कार्य-द्वयं सम्पादितम् । एकं स्वराज्यप्रार्थना । द्वितीयं सा प्रार्थना हिंदुधर्मिभि-र्महम्मदधर्मिभिरेकीभूय कृता । एवं स्थितेऽपि अधिकारिवर्गः प्रबल इति ज्ञात्वा समुद्यमोऽस्माभिर्विशेषेण कर्तव्यः । तारस्वरेण सर्वैरियं स्वराज्य-घोषणा कृता इति तस्योद्यमस्य प्रारम्भः । अस्माकं गृहे सर्वाणि कार्याणि वयमेव करवामेति वक्तुं न कस्मादपि भयम् ' इति ।

लखनौराष्ट्रियसभाधिवेशनानन्तरमत्याग्रहेण लोकमान्याः ' कानपुर '-नगरं गताः । तेषामागमनात्पूर्वं केवलं याममात्रकालः स्वागतसम्भारार्थ-

मासीत् । परं महानुत्साहो जनानाम् । एकेन पुरुषेण डिण्डिममेकं कण्ठे धृत्वा तस्य महानिनादेनेयं लोकमान्यागमनवार्ता सर्वत्र प्रसारिता । कुङ्कुमतिलकलेपनं नीराजनविधिर्महत्सञ्चलनमित्यादयः सत्कारस्य सर्वे प्रकाराः सर्वत्रासन् । 'दादासाहेब करंदीकर'महाशया महाराष्ट्रवेषेण सभास्थानं प्रथमं गताः । तेषां तद्रक्तवर्णमुष्णीषं दृष्ट्वा एते लोकमान्या इति भ्रमेण जनस्तेषामेव चरणौ नमस्कृतवान् । नाहं टिळकमहाशय इति पुनः पुनः सर्वान् कथयतां तेषां वचने न कोऽपि विश्वसिति स्म । अन्ते कानपुराग्रणीभिः सह लोकमान्याः सभास्थानं प्राप्ताः । तदा करंदीकरमहाशया अस्मात्प्रसङ्गान्मुक्ताः । 'बेळवी'महाशयास्तदा तानवदन् 'उत्तरे भारते रक्तोष्णीषधारणे लोकमान्यानामेवाधिकारः । नान्येषाम्' इति । सर्वेषु स्थलेषु विविधोदाहरणदृष्टान्तादिप्रकारैर्लोकमान्या एकमेव तत्त्वमुपदिशन्ति स्म 'स्वराज्यप्रार्थना' इति ।

कानपुरनगरात् 'कलकत्ता'नगरं 'बाबु मोतीलाल घोष'महाशयदर्शनार्थं 'जोशी–खापर्डे'महाशयैस्सह लोकमान्या अगच्छन् । लोकमान्यानामयं वृद्धवयस्यस्तेभ्यो बाष्पपूरितलोचनो दृढं क्षेमालिङ्गनं दत्तवान् । पङ्क्त्यर्धानन्तरं मिथो दर्शनम् । अनुभविनो जना एवैतादृशं स्नेहरसं जानन्ति । कुशलप्रश्नानन्तरं दिवसमेकं तत्रोषित्वा लोकमान्या नागपुरनगरं गताः । तत्र सर्वे सत्कारा महता विभवेन कृतास्तथाऽपि हरिजनवर्गेण कृतः सत्कारः संस्मरणीयः । स्वराज्यान्दोलनमल्पेनैव कालेन सर्वत्र प्रसृतम् । अतः 'सिडेनहॅम् क्लार्क'महाशयसदृशाः पुरुषाः पुरत आगत्याङ्ग्लान् सूचयन्ति 'सम्राज्याः घोषणापत्रकं व्यर्थम् । मोघानि सम्राजामभिवचनानि । पर्याप्तमधिकारदानम् । अधिकं न प्रार्थनीयम् । नापि देयम्' इति सकृदेव शासनसंस्थया कथयितव्यमिति ।

नागपुरतो लोकमान्या 'धामणगाव–यवतमाळ'इत्यादिस्थलेभ्यः 'अकोला'नगरं गताः । साम्प्रतं सत्कारादिकार्यक्रमो नित्यविधिर्जातः । अस्मिन्नित्यविधौ लोकमान्यैर्गीतारहस्यमधिकृत्य शासनसंस्थासेवकानां कृते तथा विद्यार्थिनां कृते विशेषेण भाषितम् 'ज्ञानिना पुरुषेण लोकव्यवहारे आत्मनः कर्तव्यं प्राकृतजनवदाचरणीयम्' इति ।

जानेवारीमासे पुण्यपत्तनमागत्य स्वराज्यसङ्घकार्यं लोकमान्यैः समालोचितम् ।

## १० अण्णासाहेब पटवर्धननिधनम्

१९१७ संवत्सरे फेब्रुआरीमासे अण्णासाहेब पटवर्धनमहाशया दिवं गताः । बोधप्रदं तेषां चरितम् । प्रवृत्तिमार्गेणारब्धं जीवनं निवृत्तिमार्गे पर्यवसितम् । प्रतिभासम्पन्नोऽयं प्रज्ञावान् पुरुषः स्वराज्यकाले राजसभायां विद्वद्दलेषु माधवाचार्य इव गुणिगणगणनायां प्रथमपदमलप्स्यत ।

## ११ सैनिकशिक्षणम्

महायुद्धं समाप्तम् । अतः शासनसंस्थायाः महती अपेक्षाऽऽसीत् । १९१७ वत्सरस्य फेब्रुआरीमासे 'रँग्लर परांजपे'महाशयानामध्यक्षत्वे सैनिकशिक्षणार्थं तरुणानुपदेष्टुमेका सभा निमन्त्रिता । तस्यां सैनिकशिक्षण-विषयको मुख्यप्रस्तावो लोकमान्यैः पुरस्कृतः । तेऽवदन् 'स्वराज्यप्राप्तये बद्धपरिकरेण जनेन एष दुर्लभसमयः सैनिकशिक्षणार्थमवश्यमुपयोक्तव्यः । नोपेक्षणीय' इति । यस्मिन् दिने तैरेवमुपदिष्टं तस्मिन्नेव दिने 'लोकमान्यैः 'पंजाब'प्रदेशो न प्रवेष्टव्यः' इत्याज्ञापत्रं तेभ्यः शासनसंस्थया दत्तम् । केसरिपत्रे एकस्मिन्नग्रलेखेऽपि तैरेवं प्रतिपादितम् । मुम्बापुर्यामेका सभा निमन्त्रिता । तत्र लोकमान्यभाषणावसाने अष्टशतं जनाः सेनाप्रवेशार्थं स्वनामान्यदुः ।

## १२ कर्णाटकयात्रा

अथ कर्णाटकप्रदेशे स्वराज्यप्रचारार्थं लोकमान्यैर्यात्रा कृता । 'चिकोडी-निपाणी'इत्यादिस्थलेषु कृषीवलजनेषु तैर्व्याख्यातम् । मार्गमुभयतो ग्रामे ग्रामे लोकमान्यदर्शनार्थं जना याममात्रं निषण्णा आसन् ।

स्वराज्यसङ्घस्य प्रथमवर्षापनदिवसे चतुर्दशसहस्रादूर्ध्वं जनाः सङ्घस्य सदस्या अभूवन् । एकस्मिन्नेव वत्सरे आसेतुहिमाचलं स्वराज्यविषयकं महदान्दोलनं जातम् । तेन सकलोऽधिकारिवर्गोऽस्वस्थोऽभूत् । प्रजापीडन-सम्भवो लोकैर्दृष्टः । मद्रासप्रदेशराजप्रतिनिधिना जनान् तर्जयितुं बहु भाषितम् । तेन लोकैरनुमितं प्रजापीडनमवश्यंभावीति ।

अस्य भाषणस्य निषेधो राष्ट्रियसभाशाखासमितिभिर्न कृतः। परमनेन राजप्रतिनिधिभाषणेन मद्रासप्रदेशजनः प्रक्षुब्धः। एकेन सेवानिवृत्तन्यायाधीशेनोक्तम् 'स्वराज्यप्रार्थनं विधिशास्त्रसम्मतम्। अतो वयं तस्य पुरस्कारं करिष्यामः। शास्तु अस्मान् शासनसंस्था। परं वयं न बिभेम' इति। एकेन श्रेष्ठपुरुषेणैवं पुरस्कारे कृते बहवो जनाः शासनसंस्थायै पत्राणि प्राहिण्वन्। बेझंटमहिला 'उटकमंड'नगरे स्थानबद्धा जाता। अन्यान्यपि प्रजापीडनचिह्नानि जनैर्दृष्टानि। 'अलाहाबाद'नगरे 'चिन्तामणि'महाशयाः स्वराज्यसङ्घस्य सदस्या भूत्वा जनानुपादिशन् 'शासनसंस्थादृष्ट्या राष्ट्रियसभासदस्याः स्वराज्यसङ्घसदस्यैः समानाः। यदि वयमेवं भेदं करिष्यामस्तर्हि '१९०८-०९वत्सरे जातस्येतिहासस्य पुनरावृत्तिर्भविष्यति'।

## १३ गांधीमहाशयानां सत्याग्रहः

स्वराज्यान्दोलनसमये 'गांधी'महाशयैः सत्याग्रहस्यान्दोलनं सञ्चालितम्। अतः परम् अयं महापुरुषः उदयाचलं प्राप्तः। प्रतिसंवत्सरमनेन शनैः शनैरखिलं भरतखण्डं समाक्रान्तम्। 'बिहार'प्रदेशे 'चंपारण्ये' नीलीक्षेत्राणां स्वामिनः आङ्ग्ला आसन्। तत्र क्षेत्रभृत्यानां क्षेत्रपतिभिः सह बहुकालं कलहो जातः। भृतिदानबन्धनेन नियतकालं भृत्याः स्वामिनं परित्यक्तुं नाशक्नुवन्। अतः स्वामिनस्तान् बहु अपीडयन्। अस्मिन् प्रकरणे कलहकारणानि विचेतुं तत्रत्यैर्धुरीणानां निमन्त्रणेन गांधीमहाशया 'मोताहारी'पत्तनं गताः। सपद्येव तत्रस्थप्रशासकेन प्रतिबन्धकमाज्ञापत्रं तेभ्यो दत्तम्। गांधीमहाशयैरसंदिग्धाक्षरैः प्रतिभाषितम् 'मम कार्यस्य महत्त्वं तथा तस्य परिणामानहं सम्यग्जानामि। अतोऽहमिदं स्थानं त्यक्तुमसमर्थः। तत्रभवद्भ्यो यद्रोचते तत्सुखेन कर्तुं तत्रभवन्तः समर्थाः। आन्दोलनस्य या प्रक्षोभस्य वा न ममोद्देशः। सामोपायेनाहं कलहकारणं दूरीकर्तुमुत्सहे। इदं यदि तत्रभवतां रुचये नाभविष्यत्तर्हि प्रसह्य मामुत्क्षिप्य यत्र कुत्रापि नयत। युक्तायुक्तविचारेण शासनसंस्थायाः आज्ञापत्रकात् मम सदसद्विवेकबुद्धिमहं शरणं गतोऽस्मि' इति। वरिष्ठाधिकारिणा सह मन्त्रं कृत्वा प्रशासकेन प्रतिरोधात्मकं निजाज्ञापत्रं प्रतिसंहृतम्। अनन्तरं शासनसंस्थया एकां समितिं नियुज्य तस्यां गांधीमहाशयं समावेश्य कलहकारणानि परीक्षितानि।

---

# १४ स्वातन्त्र्योषःकालपर्व

## १ बेझंटमहिलायाः स्थानबद्धता

बेझंटमहिलायाः 'होमरूल लीग'नामकसंस्थायाः आन्दोलनेन मद्रासप्रदेशे शासनसंस्था भृशं संत्रस्ता। अतस्ताम् 'उटकमंड'नामके स्थले स्थापयित्वा तस्याः सर्वाणि कार्याणि निरुद्धानि। तेन महदान्दोलनं जातम्। तस्याः मुक्तताविषये विचारो जातः। यदि तस्याः मुक्तता न स्यात्तर्हि किं कर्तव्यमिति प्रश्नः। राष्ट्रियसभाया अध्यक्षस्थाने तस्या नियुक्तिः कर्तव्या इति कैश्चित्सूचितम्। कतिचिन्मासानन्तरमेषा सूचना सम्मता जाता।

## २ घोषणा

अत्रान्तरे भारतमन्त्रिमहाशयेनोद्घोषितम् 'स्वराज्याधिकारदानविषये क्रमशो भारतदेशायाधिकारान् दत्त्वा भारतदेशेन साम्राज्यस्य महत्त्वपूर्णेन घटकेन भाव्यम्, इति आङ्ग्लमन्त्रिमण्डलस्य मनीषा। प्रमुखराजप्रतिनिधिनिमन्त्रणानुसारतः स्वराज्यविचारविनिमयार्थमहं भारतदेशमागमिष्यामि। सर्वैर्लोकधुरीणैस्सह मन्त्रं कृत्वा पार्लमेंटसभायामेकं विधेयकं पुरस्कृत्य अचिराद्विचारो भविष्यति। परम् अन्तिमाः सर्वे अधिकाराः पार्लमेंटसभाया हस्ते स्थास्यन्ति' इति। एवं स्वराज्यशब्दोच्चारणेऽपि यः प्रतिबन्ध आसीत् स स्वराज्यशब्दोऽधुना शासनसंस्थया प्रकाशं स्वागतीकृतः। न केवलमेतत् परं लोकधुरीणाः स्वराज्यसम्बन्धिनः स्वविचारान् भारतमन्त्रिणः पुरतो विचारार्थं निधास्यन्ति इति महत्फलमान्दोलनस्य इति।

लोकमान्यानां स्वराज्यसङ्घेनान्दोलनार्थमात्मनः प्रतिनिधिः 'बॅप्टिस्टा'महाशयः आङ्ग्लदेशं प्रहितः। स्वराज्यविषयकप्रस्तावानुसारतस्तेन तत्र प्रतिष्ठितान् पार्लमेंटसभासदस्यान् दृष्ट्वा तेभ्यः स्वराज्यप्रस्तावं निवेद्य तेषां मतमनुमितम्।

## ३ सङ्कीर्णम्

सप्टेंबरमासस्य सप्तदशेऽह्नि बेझंटमहिला बन्धनान्मुक्ता। लोकमान्याः स्वराज्यविषयमधिकृत्य व्याख्यानार्थं 'सातारा'नगरं, ततः 'अलाहाबाद'नगरं,

–प्रयागक्षेत्रम्–राष्ट्रियसभासमित्याः अधिवेशनार्थं गताः। तत्र लोकमान्यानां तथा बेझंटमहिलायाः महान् सत्कारो जातः। समितिसभां समाप्य लोकमान्याः 'पंढरपुर'पत्तनं गताः। तेषां सत्कारार्थं तत्र गोपुराणां त्रिशतं विरचितम्।

पुण्यपत्तने लोकमान्यानामध्यक्षत्वे ज्योतिषसम्मेलनं जातम्। 'गुजराथ'प्रदेशे गांधीमहाशयानामध्यक्षत्वे 'गोध्रा'पत्तने प्रदेशपरिषदोऽधिवेशनं जातम्। तत्र लोकमान्याः 'खापर्डे'महाशयाश्च निमन्त्रिताः।

१९१७ संवत्सरे नोव्हेंबरमासस्य सप्तदशेऽहनि भारतदेशमन्त्रिणा 'मॉटेग्यू'महाशयेन भारतदेशे शिष्टमण्डलैः सह विचारविनिमयः समारब्धः। तदा 'होमरूल लीग'संस्थया तथा 'स्वराज्यसङ्घेन' आत्मनः पृथक् शिष्टमण्डलं 'दिल्ली'नगरं प्रेषितम्। स्वराज्यशिष्टमण्डलसदस्यानामेतानि नामानि— 'टिळक–खापर्डे–करंदीकर–केळकर–बेळ्वी–गङ्गाधरराव देशपांडे–डॉ. मुंजे–निळकंठराव उधाजी–साठे–वेलणकर–बेदरकर' इति। बेझंटमहिलायाः लोकमान्यानां च पृथक् दर्शनं मॉटेग्यूमहाशयेन गृहीतम्। अनन्तरं कलकत्तानगरं गत्वा मॉटेग्यूमहाशयो मुम्बापुरीं गतः। तत्र तस्य दर्शनार्थं दशाधिकशतं शिष्टमण्डलानि समागतान्यासन्। सर्वैरपि सामान्यतो राष्ट्रियसभापुरस्कृतस्वराज्यप्रस्ताव. समर्थितः।

## ४ स्वराज्यान्दोलनार्थं दीर्घप्रवासः

१९१८ वत्सरस्य फेब्रुआरीमासस्य पञ्चमदिवसादारभ्य पञ्चविंशतितमदिवसपर्यन्तं लोकमान्यैः स्वराज्यप्रचारार्थमयं दीर्घप्रवासोऽङ्गीकृतः। अयं यात्राप्रसङ्गः खापर्डेमहाशयैर्लालित्यपूर्णवाण्या वर्णितः। यात्राप्रसङ्गेन कति स्थलानि लोकमान्यैर्दृष्टानि, कति द्रव्यसाहाय्यं जनैः स्वराज्यप्रचाराय दत्तमित्यमे दत्तात् पत्रकात् ज्ञास्यते। ग्रामनाम्नः पुरतो द्रव्यसंख्या लिखिता वर्तते। स्थले स्थले सत्कारपूर्वकं मानपत्रमर्पयित्वा जनैर्द्रव्यनिधिरुपायनीकृत.। १ मुम्बापुर्याम् अङ्गारव्यवहारिभिः ५७११ रूपका उपायनीकृताः। नगरनामानि— '२ खांडवा ३ बऱ्हाणपुर – ४ मलकापुरपत्तनपर्यन्तमग्निरथेन प्रवासः कृतः। अतः परं चत्वारस्तैलशकटाः स्वीकृताः। अनन्तरमेतानि स्थलानि दृष्टानि— ५ बुलढाणा,

६ चिखली, ७ खामगाव ( ७२०० ), ८ नांदुरा ( १००० ), ९ जळगाव, १० जामोद ( ५००० ), ११ शेगाव –एकेन चर्मकारेण अत्र रूपकद्वयं दत्तम्–, १२ तेल्हारा ( २००० ), १३ अकोट ( ४८०० ), १४ अकोला ( ४३०० ), १५ वाशीम ( ३५०० ) एकया सीमन्तिन्या अष्टोत्तरशतं आणकद्वयनाणकानि दत्तानि, १६ पुसद, १७ कारंजे ( ३००० ), १८ मूर्तिजापुर ( २५०० ), १९ पुल्गाव (७०००)–एकेन शिवलिङ्गं दत्तम्–, २० आर्वी ( ७६०० ), २१ वर्धा ( ५१०० ), २२ वरोडा, २३ चांदा ( ६००० ), २४ वणी ( ३००० ), २५ पांढरकवडा ( स्वराज्यमपहन् पलायमानो बाजीरावनामा अत्रागतः। सांप्रतं स्वराज्यमाहर्तुकामा लोकमान्या आगताः। ), पुनः २६ वरोडा ( २५०० ), २७ शिंदी, २८ हिंगणी, २९ सेलू ( २७६० ), ३० नागपुर ( ९००० ), ३१ उमरेड ( १६०० ), ३२ कलोल ( १४०० ), ३३ मोहपा, पुनः ३४ नागपुर, ३५ भंडारा ( ४५०० ), ३६ धामणगाव ( २००० ), ३७ वरणगाव, ३८ भुसावळ ( ३००० )। एवं विंशतिदिनेषु एतानि स्थलानि दृष्ट्वा लोकमान्या मुम्बापुरीं निवृत्ताः। अनन्तरं 'सोलापुर' ( ९००० ) नगरं गत्वा पुण्यपत्तनं ( ११३०० ) समायाताः। तत्र मार्चमासस्य द्वाविंशे दिने 'बंडगार्डन'नामकोद्याननिकटवर्तिनि 'खण्डवानी'नामके हर्म्ये अखिलपुण्यपत्तननागरिकैर्महता विभवेन उद्यानोपहारो दत्तः।

अनेन समयेन आङ्ग्लदेशप्रवासार्थम् आवश्यकराजाज्ञापत्रकादिसकलसम्भारः उपलब्ध आसीत्।

## ५ 'कोलंबो 'यात्रा

मार्चमासस्य त्रयोविंशे दिने नक्तं दशवादनवेलायां खापर्डेमहाशयैः सह लोकमान्या आङ्ग्लदेशगमनार्थं 'कोलंबो'नामकं नौकाश्रयं गन्तुं महतोत्सवेन पुण्यपत्तनात् प्रस्थिताः। नागरिकैः संचलनं कृतम्। स्थाने स्थाने लतापल्लवतोरणैर्गमनमार्गोऽलङ्कृतः। अग्रतो मङ्गलवाद्यशकटाः, पश्चात् पणवपटहकांस्यतालादिवाद्यसमूहः, अनन्तरं कतिचिदश्वारोहाः, स्वयंसेवकदलं, जनसमुदायश्च। अन्ते लोकमान्यटिळक–खापर्डेमहाशयादिलोकधुरीणानां

रथा आसन् । अहो महद्भाग्यं लेखकस्य यत्तेनेदमपि सञ्चलनं प्रत्यक्षीकृतम् ।

लोकमान्याः प्रथमं पुण्यपत्तनात् मुम्बापुरीं गताः । तत्रापि विविधस्थलेषु नागरिकैर्वणिक्श्रेष्ठैस्ते सत्कृताः । उद्योगक्षेत्रेषु विद्यमानैः षोडशसहस्रकर्मकारैः एकैकमाणकं समाकलय्य रूपकाणामेकसहस्रं लोकमान्येभ्यः उपायनीकृतम् । 'चौपाटी'नाम्नि सागरोपकण्ठे रमणीयपुलिने स्वराज्यसङ्घपरिषद् जाता । प्रस्तावादिनित्यकार्यानन्तरं स्वराज्यसङ्घकोशाध्यक्षैः आयव्ययपत्रकं समर्पितम् । सङ्घशिष्टमण्डलस्य प्रवासव्ययार्थं लोकैरुपायनीकृतो द्रव्यनिधिः सप्तदशोत्तरैकलक्षसंख्यापरिमितो जातः । मुम्बापुर्यामष्टचत्वारिंशत्सहस्रं द्रव्यसाहाय्यं लब्धम् । अन्ततो ब्रह्मवृन्दः 'ठाकुरद्वार'नामके राममन्दिरे लोकमान्येषु आशीर्वचनानि व्यतरत् । एवं महतोत्साहेन सत्कारपूर्वकम् आङ्ग्लदेशगमनार्थं जनैरामन्त्रिता लोकमान्याः कोलंबोनामकनौकाश्रयस्थानात् यात्राभङ्गं कृत्वा परावृत्ताः । शासनसंस्थादत्तं प्रवासाधिकारपत्रम् उपसंहृतम् । अनेन शासनसंस्थाकर्मणा सर्वेषामुत्सवः शीततां गतः ।

कोलंबोनौकाश्रयस्थानं गन्तुं प्रस्थितमिदं स्वराज्यशिष्टमण्डलं प्रथमं मुम्बईनगरात् मद्रासनगरं प्राप्तम् । मार्गे जनसमूहेन कृतं सत्कारं स्वीकृत्य, मद्रासनगरे सर्वपक्षैः कृतं स्वागतसत्कारमङ्गीकृत्य, 'अड्यार'पत्तने बेझंटमहिलाया दर्शनं गृहीत्वा लोकमान्याः शिष्टमण्डलसदस्यैः सह कोलंबोनगरं गताः । तत्रत्यैरपि जनैर्महता गौरवेण ते सर्वे सत्कृताः । एकस्मिन्नुद्यानोपहारसमये सार्धसहस्रं प्रतिष्ठितनरनारीनागरिकगणः समुपस्थित आसीत् । तैस्तत्र सङ्कलितो द्रव्यनिधिर्लोकमान्यैर्लोकप्रियराजप्रतिनिधिस्मारकार्थं समर्पितः ।

जलमार्गेण प्रस्थातुं देशान्तरगमनार्थं प्रवासाधिकारपत्रादिसकलसम्भारः सङ्गृहीतः । सर्वे शिष्टमण्डलसदस्याः कार्यान्तरं समाप्य यावत् प्रस्थानाय सन्नद्धास्तावत् प्रवासाधिकारपत्रं निवर्तयितुम् आज्ञापत्रं सम्प्राप्तम् । 'लङ्का'प्रदेशशासनसंस्थाधिकारिणा तस्य वार्ता लोकमान्येभ्यो निवेदिता । तां श्रुत्वा सर्वे सदस्याः स्तम्भिता बभूवुः । उक्तं च—

'मनसा चिन्तितं कार्यं दैवमन्यद्विचिन्तयेत् ।' इति ।

अयं प्रतिषेधः आङ्ग्लदेशात् सम्प्राप्तः । लोकमान्यैर्विद्युत्सन्देशान् सम्प्रेष्य प्रतिषेधनिवारणार्थं विश्वप्रयत्नाः कृताः । एकस्मिन् क्षणे आशा, अन्यस्मिन् क्षणे नैराश्यम् इति महत् द्वन्द्वं समुद्भूतम् । पराभूता आशा । विजयीभूतं नैराश्यम् । आङ्ग्लदेशगमनार्थं नियुक्तेन प्रवहणेन परित्यक्तं नौकाश्रयस्थानम् ।

लोकमान्यप्रवासाधिकारपत्रप्रतिषेधवार्ता मुम्बापुरीं गता । सपदेव सभासु निषेधप्रस्तावाः सम्मताः । वृत्तपत्रैरात्मनो निषेधः प्रदर्शितः । आङ्ग्लदेशे तस्य प्रतिध्वनिः श्रुतः । तत्रस्थकर्मकारसङ्घैर्निषेधः प्रदर्शितः । स्वराज्यसङ्घविशिष्टमण्डलस्याधिकारपत्रं गृहीत्वा सङ्घकार्यप्रचारार्थं बॅप्टिस्टामहाशयाः पूर्वमेवाङ्ग्लदेशं गता आसन् । आङ्ग्लदेशं महायुद्धविपद्ग्रस्तं विलोक्य तैः पत्रे लिखितम्– नायं समुचितः कालोऽत्र स्वराज्यविमर्शाय । आदौ भारते इदमवश्यमेव कर्तव्यं भवति (१) प्रथमं राष्ट्रियसभाध्यक्षस्थाने लोकमान्यानां नियुक्तिः । (२) द्वितीयं कर्मकाराणां पक्षस्थापना । (३) आङ्ग्लदेशस्थकर्मकारपक्षाय निर्वाचनकाले द्रव्यसाहाय्यम् । (४) आङ्ग्लदेशस्थराष्ट्रियसभासमितिस्तथा 'इंडिया' नामकं वृत्तपत्रं राष्ट्रियसभायाः मुखपत्रमिति ।

## ६ युद्धपरिषदः

एप्रिल्मासस्य तृतीये सप्ताहे भारतशासनसंस्थया निवेदनद्वयं प्रकाशितम् । प्रथमे लोकमान्यानां स्वराज्यसङ्घसदस्यानां च आङ्ग्लदेशगमनप्रतिषेधकारणानि लिखितानि । तैर्न केषामपि मनः समाहितम् । अन्येन निवेदनेन सप्तविंशे दिने दिल्लीनगरे एका युद्धपरिषद् निमन्त्रिता । प्रदेशशासनसंस्थाभिर्निमन्त्रणानि प्रेषितानि । मुम्बईप्रदेशाल्लोकमान्या न निमन्त्रिताः ।

अस्मिन्नेव दिवसे पुण्यपत्तने आपटेमहाशयानामध्यक्षत्वे नागरिकाणां महती सभा जाता । प्रस्तावे लिखितमासीत् 'प्रारभ्यतां भारतस्य स्वराज्याधिकारदानम् । अस्माकं सहकारः सदैव भविष्यति । 'नादिरशहा'-

नरपतिना समतिक्रान्ते भारतदेशे दिल्लीश्वरस्य सीमारक्षणं महाराष्ट्रदेश-सैनिकैः कृतम् । तत्कार्यं महाराष्ट्रीया अद्य कथं न करिष्यन्ति । परं स्वराज्य-गीताश्रवणं विना नान्यत् किञ्चिद्भारतस्य स्फूर्तिस्थानम् ' इति । दिल्लीनगर-युद्धपरिषदि गांधीमहाशयैः कथितम् ' टिळक-वेझंटमहिला-अलीबन्धवः एते सर्वे मन्त्रार्थं युष्माभिर्न निमन्त्रिताः । भारतदेशे कोऽन्यः युष्मभ्यं सैनिकसाहाय्यं दद्यात् । अतो व्यर्थोऽयं मन्त्रः' इत्युक्त्वा गांधीमहाशयैः सभात्यागः कृतः । अस्यां सभायामेकेन सदस्येन स्वराज्यप्रस्तावः पुरस्कृतः । परं स नानुज्ञातः । पुनस्तस्य प्रस्तावस्य सूचना खापर्डेमहाशयैर्दत्ता । तेनापि प्रस्तावेनार्धचन्द्रो दृष्टः ।

दिल्लीनगरे समारब्धं युद्धकार्यं पुरस्कर्तुं मुम्बापुर्यां जूनमासस्य दशमेऽहनि राजप्रतिनिधिना सभा निमन्त्रिता । दिल्लीनगरे कृतः प्रमादोऽत्र निरस्तः । लोकमान्यास्तथाऽन्ये स्वराज्यवादिनो मन्त्रार्थं निमन्त्रिताः । सभायां किं कार्यं स्यादिति पृष्टे शासनसंस्थया निवेदितम् ' शासनसंस्थानियोजित-प्रस्तावा एव सभायां सम्मता भविष्यन्ति । युद्धचर्चायां कथितं लोकमतं शासनसंस्था सम्यग्विमृशे'दिति । प्रस्तावचर्चासमये भाषितुं लोकमान्या आहूताः । तैरुक्तम् ' उपसूचनां कर्तुं नास्त्यवसरः । अतो लोकानां मनीषा मयाऽत्र निवेद्यते । प्रथमं मयेदमाश्वास्यते अन्यैः समाक्रान्ते भारतदेशे प्राणपरित्यागेनापि वयं सर्वे मातृभूमिरक्षणार्थं यतेमहि । परं स्वदेशरक्षणस्य स्वराज्येन सम्बन्धोऽस्माभिर्न परित्याज्यः' । श्रवणमात्रादेवास्य वाक्यस्य राजप्रतिनिधिना लोकमान्याः प्रतिषिद्धा उक्ताश्च । सभायां राजकारणचर्चां नानुज्ञास्यामि । सपद्येव लोकमान्यैरुक्तम् 'एवं स्थिते मानधनस्य सभात्यागं विना नान्या गतिः । अतोऽहं सभां परित्यजामि ' इति । गतेषु लोकमान्येषु ' केळकर'महाशया आहूताः । तैरपि लोकमान्यैरिव राजकीयविषये किंचिदुक्ते राजप्रतिनिधिना भाषणं निरुद्धम् । केळकरमहाशया अपि सभां परित्यज्य गताः । एवं ' हॉर्निमन्-जमनादास-बमनजी'महाशयाः सभां त्यक्तवन्तः । अत्रान्तरे मॉंटेग्यू-चेम्स्फर्डमहाशयैरात्मनोऽधिकारदानविषयकं निवेदनं प्रकाशितम् । तस्य समालोचने कृते केसरिपत्रे लोकमान्यैर्वेहु-लिखितम् । ' ननु प्रभाता रजनी । परं कुतो भास्करः ' । ' सुदूरं दिल्ली-

नगरम्' इत्यादिषु लेखेषु एतस्य निवेदनस्य गुणदोषा विशदीकृता । राष्ट्रिय-सभाऽधिवेशने अस्य निवेदनस्य चर्चासमये लोकमान्या भारते वर्तन्ते या आङ्ग्लदेशे विद्यन्ते इति सन्देहः समुत्पन्नः ।

अनन्तरं मुम्बापुर्यां राष्ट्रियसभाया विशेषाधिवेशनं मॉटेग्यू-चेम्स्फर्ड-कृतस्याधिकारदानविषयकनिवेदनस्य विमर्शार्थं निमन्त्रितम् । अध्यक्षस्थानं विधिशास्त्रपण्डितैः 'सय्यद हसन इमाम'महाशयैर्मण्डितम् । लखनौनगरे सम्मतस्य राष्ट्रियसभाप्रस्तावस्याधारेणायं प्रस्तावः सभाया सम्मतः । तस्मिन् लिखितमासीत् 'भारतदेशः स्वराज्याधिकारदानाय सर्वथ पात्र मस्ति । एकं शिष्टमण्डलमाङ्ग्लदेशं प्रहितुं प्रस्तावः सम्मतः' ।

अधिवेशनार्थं मुम्बापुरीं समागता 'मोतीलाल घोष-चित्तरंजन दास-बिपिनचन्द्र पाल-चिदंबरं पिल्ले-शर्मा' इत्यादयो राष्ट्रधुरीणा पुण्य-पत्तनं निमन्त्रिता । तत्र यथोचितस्वागतेन ते सर्वे सत्कृता । तेषां व्याख्यानश्रवणलाभार्थं सहस्रशो जना उपस्थिता आसन् ।



# १५ ‘ चिरोल’पर्व

## १ ‘ सर् व्हॅलंटाईन चिरोल’महाशयः

ऑक्टोबरमासस्य त्रिंशे दिने चिरोलप्रकरणार्थं लोकमान्या आङ्गलदेशं गताः। दिल्लीनगरे ‘मदनमोहन माल्वीय’महाशयानामध्यक्षत्वे राष्ट्रियसभाधिवेशनं जातम्।

लब्धकीर्तिः ‘सर् व्हॅलंटाईन चिरोल’नामा प्रतिगतराजकीयमतधारी, जगत्साम्राज्यवादी ‘लंडनटाइम्स’नामकवृत्तपत्रस्य परराष्ट्रियराजकारणसञ्चालकः आसीत्। तस्य प्रमुखकार्यं दूरदेशान् दृष्ट्वा तत्तद्देशस्थराजकारणवार्तामुपलभ्य लंडनटाइम्सपत्रे मुद्रणम्। अस्य पत्रस्य राजनीत्याः प्रमुखमङ्गं भारतस्वातन्त्र्यान्दोलनकर्तॄणां लोकधुरीणानां सदैवाधिक्षेपणम्। वङ्गभङ्गानन्तरं भारतदेशे समुद्भूतस्यान्दोलनस्य वार्ताः समाहृत्य, ताः सम्यक् समालोच्य अस्मै पत्राय तत्प्रेषणार्थं चिरोलमहाशयो भारतदेशं प्रहित आसीत्। अस्य देशस्य नैकामपि भाषां वक्तुं स शशाक, न वा भारतदेशस्थविविधलोकसमूहेषु उषित्वा तेषां परम्परागताचारविचारान् मतप्रवाहांश्च परिज्ञाय वार्तापत्राणि लिलेख। चिरोलमहाशयस्य वार्तापत्राणां प्रमुखाधारः शासनसंस्थालेखाः, तस्याः आज्ञापत्राणि, रक्षापुरुषाणां वृत्तनिवेदनानि, तथाऽधिकारिभिः सह काले काले जाताः संलापाः। अन्यदप्येकं वार्तालाभस्थानं चिरोलमहाशयेन लब्धम्। कोल्हापुरसंस्थाननरेशछत्रपतिमहाराजः तस्य वार्तोपलब्धिस्थानम्। सर्वस्य भारतीयासन्तोषस्य बीजं पुण्यपत्तनस्थो ब्राह्मणकुलोत्पन्नः एकः पुरुष इत्यात्मनो निदानं सत्यमिति चिरोलमहाशयेन मुम्बईप्रदेशशासनसंस्थाधिकारिभिः सह तथा करवीरछत्रपतिना सह जातेभ्यः संलापेभ्यो ज्ञातम्। एतेषु सर्वेषु स्थलेषु विविधवार्तानामाकरः कोल्हापुरसंस्थानसेवको ‘भास्करराव जाधव’महाशयः, प्राध्यापकः ‘डोंगरे’महाशयः, सचिवः ‘सवनीस’महाशयश्च। सर्वेषामेतेषां मुख्यं कार्यं लोकमान्यविरुद्धं तथा केसरिविरुद्धं यद्यद्वृत्तं तत्तत्सर्वं सालङ्कारं रोचकरीत्या चिरोलमहा-

शयेभ्यः कथयित्वा यावच्छक्यमसत्या अप्रामाणिका आरोपा लोकमान्येषु कर्तव्याः। सर्वमेवत्साहाय्यं जाधव-डोंगरेमहाशयाभ्यामात्मीयभावनया दत्तम्। शासनसंस्थया तथा करवीरसंस्थानेन प्रतिवत्सरं केसरि-मराठावृत्त-पत्रयोः क्रमाङ्कानुपलभ्य तत्रस्थलेखानामाङ्ग्लभाषायां रूपान्तरं कृत्वा तत् चिरोलमहाशयेभ्यो दत्तम्। अधिकारिवर्गेण सह संवादेषु तैः स्वपद्धत्या लोकमान्यानामुद्देशा विशदीकृताः। तेषामान्दोलनेषु द्वेषभास्करस्य प्रकाशः पातितः। एवं चिरोलमहाशयानां वार्तापत्राणां ग्रन्थस्य पूर्वसामग्री सिद्धा जाता। लोकमान्यैर्मानहानिविषये अभियोगे कृते जाधव-डोंगरे-सबनीस-महाशयाः साक्षिभावेन न्यायालयसमित्याः पुरतः उपस्थाय स्वलेखान् समर्थयामासुः।

## २ गर्वफलम्

एतादृशतामसप्रकृतिः साम्राज्यमदमत्तश्चिरोलमहाशयो निजावलेप-फलमप्युपभुक्तवान्। अथैकदा १९०३ संवत्सरे राज्यारोहणनिमित्तेन दिल्ली-नगरे जातस्य महोत्सवस्य वृत्तं लंडनटाइम्सपत्राय प्रेषितुमयं वार्ताहरो भारतदेशं समागतः। अग्निरथप्रवासे 'साहरणपुर'नामके शकटविश्रान्तिस्थाने धाष्परथः उपस्थितः। अस्मिन् स्थले ग्रन्थिज्वरप्रतिबन्धार्थं सर्वे यात्रिका-श्चिकित्सकैः परीक्षितव्या इति शासनसंस्थाऽऽज्ञापत्राधिकारेण पश्चिद् भारतीयो भिषग्वरश्चिरोलमहाशयस्यासनं प्राप्य पृष्टवान् 'कस्मात्स्थाना-दत्रभवतामागमन'मिति। तथा नाडीपरीक्षार्थं तस्य हस्तश्चिकित्सकेन स्पृष्टः। हस्ते स्पृष्टमात्रे क्रोधाग्निना ज्वलन्निव चिरोलमहाशयो वैद्यराय मुष्टि-प्रहारान् दत्तवान्। सपद्येव रक्षापुरुषेण तत्रागत्य 'भिषग्वरोऽयं, ग्रन्थिज्वर-प्रतिबन्धार्थं शासनसंस्थया नियुक्तः' इति कथितम्। तदैव चिरोलमहा-शयेन स्वनामाङ्कितं पत्रं दर्शयित्वा स वैद्यस्तर्जितः 'तव वरिष्ठाधिकारिणे तव कर्तव्यस्खलितं निवेदयिष्यामि' इति। अथ भिषग्वरेण तस्योपरि अभियोगे कृते चिरोलमहाशयेन 'कर्झन'नामा प्रमुखराजप्रतिनिधिः प्रार्थितः। परं सर्वं व्यर्थमभूत्। अन्ते न्यायालयमागत्यापराधनिरसनार्थम् अभियोग-कर्तुर्भिषग्वरस्य क्षमायाचनं चिरोलमहाशयेन लेखेन कृतम्।

एवंगुणविशिष्टेन चिरोलमहाशयेन लिखिते 'भारतीयासन्तोष'-नामके ग्रन्थे लोकमान्यविरुद्धं बहु लिखितमासीत् । असत्यपूर्णोऽयं समग्रग्रन्थः । अतोऽसत्यारोपनिरसनार्थं लोकमान्यैरभियोगः कृतः । आङ्ग्लन्यायदेवता न्यायप्रिया विद्यते इति तेषां विश्वासः । अस्माद्ग्रन्थादासन्नत्रिंशानि वाक्यानि अभियोगार्थमुद्धृतानि । तेषु कानिचिद्वाक्यानि लोकमान्यानामत्याचारैः सह सम्बन्धं द्योतयितुं लिखितानि, कानिचित्तेषां सदाचारपूर्णं दैनंदिनवर्तनं दूषयितुं द्वेषबुद्ध्या लिखितान्यासन् ।

## ३ चिरोलमहाशयाभियोगः

१९१५ संवत्सरस्य ऑक्टोबरमासस्य प्रथमे दिवसे लोकमान्यपक्षीयविधिशास्त्रपण्डितेन चिरोलमहाशयाय अभियोगसूचना दत्ता । तस्यां तेन लिखितम् 'अभियोगेन धनलाभो भवेदिति न लोकमान्यानामुद्देशः । परं ग्रन्थकृतमानहानिनिरसनार्थमयमभियोगः । अतो युष्माभिर्मानहानिकराणि वाक्यान्युपसंहृत्य क्षमायाचनं कर्तव्यम्' इति । तस्योत्तराभावे १९१६ वत्सरस्य नोव्हेंबरमासस्य चतुर्दशे दिवसेऽभियोगो न्यायालये प्रवेशितः । अनन्तरं परस्परलेखपत्रदर्शनार्थम्, उत्तरप्रत्युत्तरार्थं, लेखपत्राणामाङ्ग्लभाषायां रूपान्तरार्थं, शासनसंस्थानियुक्तसमित्या योग्यायोग्यलेखसंग्रहार्थं प्रभूतः कालो गतः आसीत् । चिरोलपक्षीयविधिशास्त्रज्ञेन एकां प्रश्नमालिकां मुद्रयित्वा उत्तरार्थं लोकमान्यविधिशास्त्रज्ञाय दत्ता । हेतुस्तु लोकमान्यानामत्याचारेषु सम्बन्धो जनैर्द्रष्टव्यः । लोकमान्यैरपि सा प्रश्नमालिका सप्रमाणं प्रत्युक्ता ।

अनन्तरं न्यायालयनियुक्तसमित्या भारतदेशे अभियोगोपयुक्तलेखपत्राणि संग्रहीतुं प्रवासोऽङ्गीकृतः । समित्याः पुरतः साक्षिभावेनैते नागरिकाः समागताः '१ भास्करराव जाधव, २ प्राध्यापकः डोंगरे, ३ जॉन् विल्यम् कॅंवल्, ४ रघुनाथ व्यंकटेश गोसावी, ५ धनाप्पा वाळवे, ६ गणेश बळवंत वैद्य, ७ लॉरेन्स् रॉबर्टसन्, ८ शिवरामपंत परांजपे, ९ नरसिंह चिंतामण केळकर, १० य. ग. कुलकर्णी' इति ।

१९१९ वत्सरे जानेवारीमासस्य ऊनत्रिंशे दिने अभियोगः परीक्षणार्थं न्यायालयं प्राप्तः । 'डार्लिंग'नामको न्यायाधीशः । तस्य साहाय्यार्थं

विशेषप्रमाणपुरुपाणां गणोऽप्यासीत् । 'सर् जॉन् सायमन्' अथ 'स्पेन्स्'-महाशयः द्वौ लोकमान्यपक्षीयौ विधिशास्त्रमहापण्डितौ । चिरोलपक्षीया विधिशास्त्रज्ञाः– (१) 'सर् एडवर्ड कार्सन्, (२) सर् एलिस् ह्यूम् विल्यम्स्, (३) यूस्टेस् हिल्स्'महाशया. ।

चिरोलमहाशयेन षट्सु विषयेषु लोकमान्यमानहानिकरं लिखितम्– १ गोरक्षणम्, २ व्यायामसंस्थाः, ३ तर्जनेन धनार्जनम्, ४ ताईमहाराज-प्रकरणम्, ५ रँड्–आयर्स्टवधः, ६ जॅक्सन्घातः इति । अतिविस्तीर्णमिदं प्रकरणं समासेनात्रालोच्यते ।

सायमनमहाशयेन स्वपक्षविशदीकरणार्थं समर्थनार्थं च विस्तरेण प्रतिपादितम् । न्यायाधीशैरपि प्रश्नैः सर्वविषयाणां विशदीकरणं लब्धम् । टिव्लकपक्षीयविधिशास्त्रज्ञेन लोकमान्याः परीक्षिताः । कार्सनमहाशयेन चिरोलपक्षीयविधिशास्त्रपण्डितेन पुन. परीक्षिताः । पुनः टिव्लकपक्षीय-विधिज्ञेन सायमननाम्ना लोकमान्या. परीक्षिताः ।

समाप्ते लोकमान्यपक्षीयविधिज्ञस्य प्रतिपादने चिरोलपक्षीयविधिज्ञः कार्सनमहाशयः स्वमतप्रतिपादनमारब्धवान् । तेन चिरोलमहाशयः परीक्षितः । सायमनमहाशयेन स पुनः परीक्षितः । अनन्तरं 'लॉर्ड् सॅन्डर्स्ट्, सर् चार्लस् लॅम्ब्'प्रभृतीनां साक्षिणा परीक्षणं, कार्सनमहाशयस्य समारोपः, सायमनमहाशयस्य समारोपः, न्यायमूर्तिडार्लिंगमहाशयानां समारोपः इत्यादिविधिषु जातेषु विशेषप्रमाणपुरुषगणेनात्मनो निर्णयो लोकमान्य-विरुद्धो दत्तः ।

अस्याप्यभियोगस्य कृते लोकमान्यानां प्रभूतः कालः समतीतः । यथार्थतया ते कायेन, वाचा, मनसा च क्षीणा अभूवन् । यद्यपि तैः स्वराज्यविषयकाणि सर्वाणि कार्याणि यथापूर्वं प्रगतिपथं नीतानि तथाऽपि तेषामार्थिकस्वास्थ्यं नष्टप्रायम् । न कस्यापि अनुभवः एतादृशस्याभियोगस्य । अत. सर्वेषां धनव्ययस्य तर्को विफलीभूता. । अभियोगार्थं धनव्ययो रूप्यकाणां लक्षत्रयपरिमितो जात. ।

## ४ चिरोलोद्गाराः

'ऑब्झरव्हर 'वृत्तपत्रवार्ताहरेण चिरोलमहाशयस्य दर्शनं गृहीत्वा वृत्तान्तः पृष्टः । तदा तेरुक्तम् ' वृत्तपत्रवार्ताहरव्यवसायं प्रभूताः समाः अहमन्वसरम् । तस्मिन् कालखण्डे धाष्टर्येन मां पृच्छन्तौ द्वौ पुरुषौ मया दृष्टौ । प्रथमः टिळकमहाशयः । द्वितीयः शार्मण्यदेशसम्राट् ' कैसर विल्यम्'महाशयः । १८५७ संवत्सरे जातं सैनिकसंक्षोभं टिळकमहाशयः स्वातन्त्र्ययुद्धं वदति ' । एतादृशानि प्रभूतानि विधानानि द्वेषपूर्णानि दृश्यन्ते । परम् एतच्चिरोलमहाशयमतं कालान्तरेण किञ्चित् परिवर्तितमिति 'इंडिया'नाम्नि पुस्तकेऽवलोक्यते । अस्मिन् पुस्तके चिरोलमहाशयेन लिखितम् ' टिळकमहाशयः पुण्यपत्तनस्थः ' चित्पावन'ब्राह्मणजातीयः । सदैवायं वर्गः परमेश्वरकृपामनुभवति, अहंकारं च वहति । पुराणमतवादी टिळकमहाशयः । अस्मिन् कालखण्डे नान्यः कश्चिल्लोकोत्तरपुरुषः अनेन सह तुलामधिरोहति । कदाचिद् गांधीमहाशयः एतत्स्थानं लभेत । परं तस्य मृदुत्वं विनयशालित्वं च टिळकमहाशये न वर्तते । तथा च टिळकमहाशयस्य बुद्धिमत्त्वं राजकारणमर्मज्ञत्वं च गांधीमहाशयतः शतगुणेनाधिकं विद्यते । स्वधर्मे दुर्दम्यविश्वासेन स अन्यान् धर्मान् तृणाय कल्पते । लोकाग्रणीनां आवश्यका गुणाः तस्य जन्मसिद्धाः । कस्मिन्नपि विषये वाग्युद्धे समुद्भूते नायमरातिषु दयामदर्शयत् । क्षत्रियवर्णाद्ब्राह्मणवर्णः श्रेष्ठः इति कृत्वा नानेन कदाऽपि शस्त्रमुपयुक्तम् । ब्राह्मणवर्गस्य शस्त्रद्वयं वर्तते जिह्वा, लेखनी च । टिळकमहाशयः आङ्ग्लभाषां सम्यग्लिखति वदति च । मातृभाषायां न कोऽपि तं पराभवेत् । पाश्चात्त्यदेशेषु जातान्यान्दोलनानि सम्यगभ्यस्य भारतीयराजकारणे तेषामुपयोगः प्रथमं टिळकमहाशयेन कृतः । राजकीयान्दोलनस्यैकं साधनमिदमिति मत्वा कैश्चिच्छासनसंस्थाधिकारिणां घातोऽवलम्बितः । गच्छता कालेनायमङ्कुरो वृक्षत्वेन परिणतः । परं टिळकमहाशयेन सह तस्य सम्बन्धो न केनापि निर्धारितः । अनन्तरमग्निगोलकरहस्यं जनान् प्रतिपादयन् टिळकमहाशयो राजद्रोहापराधेन दण्डितः । बन्धमोक्षानन्तरं सपदेव तेन स्वराज्यान्दोलनं समारब्धम् । लखनौनगरे राष्ट्रियसभाधिवेशने यदा टिळकमहाशयो

येझंदमहिला च एतौ द्वौ लोकधुरीणौ व्यासपीठं समारूढौ तदा ईश्वरावतारोऽयमिति मत्वा निखिलो जनः उत्थानपूर्वकं तौ नमस्कृतवान् ' इति। महत्त्वपूर्णं वर्णनमिदं चिरोलमहाशयेन कृतमिति मत्वा किञ्चिद्विस्तरेणात्रोद्धृतम्। चिरोलमहाशयस्य शत्रुस्थानीया लोकमान्याः। परं तेनापि लोकमान्यगुणाः दोषरूपेण दर्शिताः। अतो महत्त्वपूर्णमिदमित्युच्यते। एतादृशं चिरोलप्रकरणं वस्तुतो भारतविरुद्धम्। एतादृशानां साम्राज्यवादिनां तथा शासनसंस्थाधिकारिणां प्रचारोऽपि भारतविरुद्धः। अतस्तेन लिखितेषु ग्रन्थेषु भारतनिन्दा सर्वत्रावलोक्यते। भारतखण्डस्य पारतन्त्र्यदुःखविमोचनार्थे येषां प्रयत्नास्ते सर्वे साम्राज्यवादिनां शत्रवः। अतस्तेषामपि निन्दाऽस्मिन् ग्रन्थे वर्तत एव। तस्मादेतन्निरसनार्थं लोकमान्यैरयं महान् यत्नः कृतः। आङ्ग्लन्यायदेवता सदैव न्यायप्रिया इति लोकमान्यानां श्रद्धा। अतस्तेषामाङ्ग्लदेशे यत्नः। चञ्चलस्वभावा स्त्रीजातिरिति सर्वेषामनुभवः। अतोऽत्राप्यन्यथाऽनुभवः कथं स्यात्। न्यायदेवताऽपि स्त्रीस्वभावात् प्रकृत्या चञ्चला इति जनानां प्रत्यय आसीत्। अतोऽयं निर्णयो लोकमान्यविरुद्ध इति न चित्रम्। वस्तुवस्तु लोकमान्यविरुद्धोऽयं न्यायालयनिर्णयो भारतविरुद्धः। अतः स्वराज्यविषयकमिदमान्दोलनमाङ्ग्लानां रुचिकरं कथं सम्भवेत्। शासनसंस्थाया अपि विरुद्धः प्रचारः।

अस्याभियोगस्य कृते लोकमान्यानां धनक्षयोऽपि महानभूत्। तदर्थं ते अधमर्णा जाताः। यद्यपि भारतस्य मानार्थमयं यत्नस्तथाऽपि साहाय्यार्थं तैर्लोका न प्रार्थिताः। ग्रन्थान् विलिख्य अहमृणमपनेष्यामीति तेषामात्मविश्वासः। प्रयत्नेभ्योऽपि वैरेवमुक्तम्। परं लोकमान्येषु आङ्ग्लदेशेषु सत्सु जनैः स्वयमेव द्रव्यनिधिः सङ्कलयितुं यत्नः समारब्धः। यदस्मा लोकमान्यानभियोगव्ययमपृच्छन्। परं तेऽवदन् 'यदा निधिस्था द्रव्यसंख्यां मह्यं कथयिष्यन्ति तदाऽहं निवेदयिष्यामि' इति। व्ययसम्बन्धिनः सर्वा अपेक्षा निष्फला जाताः। सङ्कलिता सकलव्ययसंख्या लक्षत्रयं जाता। लोकमान्यानामनुज्ञां विनैव जनैर्द्रव्यनिधिः सङ्कलय्य तेभ्यो दत्तः। परं तं प्रहीतुं लोकमान्यानां मनसि महान् सङ्कोचः समुत्पन्नः।

## ९ आङ्ग्लदेशनिवासः

खिस्ताब्दस्य १९१८ वत्सरे ऑक्टोबरमासस्य त्रिंशे दिने लोकमान्या आङ्ग्लदेशं गताः। अथ १९१९ हायनस्य नोव्हेंबरमासे षष्ठे दिने ते मातृभूमिमागन्तुं तस्माद्देशात्प्रस्थिताः। प्रथमं दश मासान् 'मेदाव्हेल'विभागे 'हौले प्रेस क्रमाङ्के १०' सदने ते वसतिं चक्रुः। चरमं मासत्रयं 'वेज-वॉटर'विभागे 'टालबट्'मार्गे क्रमाङ्के ६० सदने ते न्यवसन्।

पश्चिमे वयसि वर्तमानैर्लोकमान्यैः शरीरस्य 'मधुमेह'व्याधिं तथा च हिमप्रकृतिकं देशं विचार्य वेषभूषायामाङ्ग्लपद्धतिः स्वीकृता। परं भारतचिह्नं रक्तोष्णीषधारणपद्धतिर्न परित्यक्ता। प्रातःकाले षड्वादनवेलायामुत्थाय सर्वे प्रातर्विधयो भारतीयपद्धत्या समाप्य चहापानसमये त्रिचतुराणि प्रमुखवृत्त-पत्राणि लोकमान्या अवालोकयन्। निवासस्थले तैरेकं कुटुम्बं भृतिदानेन गृह-कृत्यानि तथा भोजनपदार्थान् सम्पादयितुं नियुक्तमासीत्। भोजनस्य सर्वे पदार्थाः वनस्पत्याहारमुद्दिश्य गृहस्वामिन्यै सूचिताः। अनेन वनस्पत्याहारेण केषांचन शरीरस्वास्थ्यं सुदृढमभूत्। दैनंदिनकार्यक्रमे तत्रस्थलोकधुरीणानां तथा 'पार्लमेंट'सभासदस्यानां दर्शनं प्रतिदर्शनम् अग्रस्थानमलभत। आङ्ग्ल-देशाचारे न किमपि न्यूनं लोकमान्यानाम्। परकीयसमाजरीतिस्तैरात्म-सात्कृता। प्रस्थानसमये लोकमान्यैः राजकीयविषये न किमपि वक्तव्यमिति शासनसंस्थाधिकारिणां बन्धनमासीत्। परं कालान्तरेण तत् बन्धनं दूरीकृतम्।

आङ्ग्लदेशं गतेषु लोकमान्येषु 'राष्ट्रियसभा–होमरूल लीग–स्वराज्यसङ्घ'इत्यादिसंस्थानां शिष्टमण्डलानि तत्र समागतानि। स्वराज्या-धिकारदानविषये भारतमन्त्रिभिः मॉटेग्यूमहाशयैरधिकृतं पत्रकं प्रकाशितम्। तत् सम्यग्विमृश्य स्वराज्याधिकारदानपत्रकम् असमाधानकारकं नैराश्यजनकं चेति प्रस्तावो राष्ट्रियसभायाः सम्मतः। अधुना विचारविनिमयार्थं सर्वाणि शिष्टमण्डलानि समागतानि। राष्ट्रियसभाशिष्टमण्डलदर्शनवेलायां मॉटेग्यू-महाशयः किञ्चिदसन्तुष्टः, यतो राष्ट्रियपक्षेणाधिकाधिकारदानं प्रार्थितम्। तस्य पत्रकमपर्याप्तं नैराश्यजनकं चेति राष्ट्रियसभयोक्तमेव। स्वराज्यदान-विचारायायं समयो योग्य आसीत्। विजयोत्सवेनाङ्ग्लाः सम्प्रति प्रसन्नाः। युद्धाय सन्नद्धः 'जर्मनी'देशः सन्धिलेखार्थं सज्जोऽभूत्। सन्धिलेखे प्रति-निधयो हस्ताङ्कनमकुर्वन्। तेन महानानन्दः समुत्पन्नः।

लंडननगरे भारतविषयककार्यकर्त्री एका समितिरासीत्। परं तस्याः कार्यं युक्तमार्गेण न सञ्चालितम्। 'इंडिया'नामकमेकं वृत्तपत्रमप्यासीत्। अनयोः कृते राष्ट्रियसभया प्रतिसंवत्सरं धनव्ययोऽपि कृतः। परम् अनया समित्या भारतराजकारणं यथा पुरस्कर्तव्यं तथा न पुरस्कृतम्। अतः प्रथमं तस्याः परिवर्तनं कृत्वा 'इंडिया'वृत्तपत्रमाङ्ग्लदेशे राष्ट्रियसभाया मुखपत्रं कृतम्।

अस्मिन् काले आङ्ग्लदेशे पुराणमतवादिनः उदारमतवादिनः कर्मकारपक्षश्चेति प्रभृताः पक्षा आसन्। तेषु कर्मकाराणां पक्षो विशेषसहानुभूत्या भारतस्वराज्यविषयं परामृशति। सर्वेषां शिष्टमण्डलानां कार्यपद्धतिः सामान्यतः एवमासीत् यथा आङ्ग्लदेशे सर्वपक्षसदस्येषु भारतविषयकं सम्यग्ज्ञानं प्रसार्य स्वराज्यविषयकं कार्यं ते पार्लमेंटसभायां सहानुभूत्या अविरोधेन यथाशक्ति सम्पादयिष्यन्ति। स्वराज्यान्दोलनस्य कृते, राष्ट्रियसभायाः कृते, स्वराज्यसङ्घस्य कृते लोकमान्यानां धनव्ययः प्रभूतो जातः। राष्ट्रियसभामण्डलस्य अन्ये सदस्याः लोकमान्यानां मार्गेण सयत्ना आसन्। वेझंटमहिला 'होमरूल लीग'कृते सयत्नाऽऽसीत्। परं तस्याः कानिचिन्मतान्यधुना भिन्नान्यासन्। एवमिदं स्वराज्यान्दोलनं राष्ट्रियसभया, लोकमान्यपक्षेण च प्रगतिपथं नीतम्।

आङ्ग्लदेशे केचन भारतीयाः स्वराज्यविरोधका आसन्। तेषां प्रमुखः 'सकलादवाला'महाशयः। तेन 'वॅप्टिस्टा'महाशयेभ्यः पत्रं प्रेषितम्। परमेतेषां विरोधः क्षुद्र एव। पत्रलाभस्तान् येदस्ताङ्कनं कृत्वं तेषां नामान्यपि आङ्ग्लजनैर्न ज्ञातानि।

दिल्लीनगरे जातेन राष्ट्रियसभाधिवेशनेन 'टिळक-गांधी-सय्यद हसन इमाम'नामकानां सदस्यानामेका समितिर्नियुक्ता। तस्याः कृते युद्धसमाप्त्यनन्तरं सन्धिपरिषदि विचारार्थं प्रार्थनापत्रं समर्पितम्। विश्वशान्तताप्रयत्ने भारतदेशेन महत्त्वपूर्णं स्थानं निसर्गतः स्वीक्रियते। अतः स्वयंनिर्णयतत्त्वं भारतदेशे प्रथमं मुख्यत्वं भवेत्। एतदर्थं लोकमान्यैर्निर्मितं विवेचनं प्रार्थनापत्रके कृतम्। एवं सर्वासु दिक्षु सर्वेषामेकमान्यैर्भारतस्वराज्यकार्यं प्रसारितम्।

---

# १६ प्रजासंहारपर्व

## १ कृष्णविधिः

### ( रौलट् ॲक्ट )

१९१९ संवत्सरे फेब्रुआरीमासस्य पञ्चमे दिवसे दिल्लीनगरे विधिमण्डलाधिवेशनं समारब्धम् । प्रमुखराजप्रतिनिधिभाषणानन्तरं 'सर् विल्यम् व्हिन्सेन्ट'महाशयेन द्वे विधेयके विधिमण्डलसम्मत्यर्थं पुरतः स्थापिते । प्रतिपादने सोऽब्रवीत् 'युद्धकाले शान्तताभङ्गप्रतिबन्धार्थं 'डिफेन्स ऑफ् इंडिया ॲक्ट'इति नाम्ना कुप्रसिद्धः एको विधिः—नियमः—आसीत् । कालान्तरेण स नष्टो भविष्यति । शान्ततारक्षणार्थमेतादृशः कश्चिद्विधिरावश्यकः । अत एतद्विधेयकं विधिमण्डलस्य सम्मतं भवेत् । यद्यस्य विरोधः सम्भवेत्तर्हि भारतीयाः स्वराज्याय अपात्रा इति वयं मन्यामहे, यतः स्वराज्येऽपि एतदृशो विधिरावश्यकः' इति । अविलम्बेनैते द्वे विधेयके सम्मते भवेतामिति शासनसंस्थायाः आग्रहः । अतिघातकं स्वरूपमनयोः विधेयकयोः । व्यक्तिस्वातन्त्र्यहारके न्यायतत्त्वविरुद्धे चैते विधेयके इति मतं न्यायमूर्तिचन्दावरकरमहाशयैः प्रदर्शितम् । विधिमण्डले 'वाच्छा-सप्रू-सुरेन्द्रनाथ-शास्त्री-खापर्डे-मालवीय'प्रभृतिभिर्महान् विरोधः प्रदर्शितः । परं विधेयके विधिमण्डलस्य सम्मते जाते ।

विधिमण्डले विरोधो व्यर्थ इति ज्ञात्वा गांधीमहाशयैः सत्याग्रहस्यान्दोलनमुपदिष्टम् । तेऽवदन् 'न्यायस्वातन्त्र्यादिजन्मसिद्धाधिकारप्रतिबन्धके एते विधेयके इति कृत्वा सम्मतेऽपि विधेयके वयं विधिभङ्गं करिष्यामः । अस्मिन्नान्दोलने वयं सत्यं न त्यक्ष्यामः, जीवितवित्तहानिर्या न करिष्यामः' इति । विधेयके सम्मते जाते गान्धीमहाशयैः सत्याग्रहान्दोलनं समारब्धम् । भारतस्य सर्वेषु प्रदेशेषु एकसमयावच्छेदेनेदमान्दोलनं जातम् । मुम्बईप्रदेशे तथा 'पंजाब'प्रदेशे आन्दोलनस्य भर आसीत् । सकलव्यवहारः लोकैः स्थगितः । लोकधुरीणैः कठोरं भाषितम् । मार्चमासस्य

त्रिंशो दिवसो दिल्लीनगरे सकलव्यवहाराभावस्य निश्चितः। हिंदुयवनयोर्दृढमैक्यम्। लोकैः शान्तताभङ्गो न कृतः। तथापि रक्षापुरुषैरग्न्यस्त्रैर्गुलिकाप्रक्षेपणं कृतम्। तेन महान् संक्षोभः समजायत। रौद्रं रूपं नगरेण विधृतम्। नगरैकविभागे सभाकार्यं समाप्य प्रतिनिवर्तमानेषु श्रद्धानन्दस्वामिमहाशयेषु रक्षापुरुषैर्मार्गान् प्रतिरुध्य अग्न्यस्त्राणि सज्जीकृतानि। मेरुरिवाचलाः स्वामिमहाशया रक्षापुरुषानवदन् 'अयमहं युष्माकं पुरतस्तिष्ठामि। हत माम्' इति। अस्मिन् संक्षोभे महती जीवहानिर्जाता। कालपुरुषेण ताण्डवं कृतम्।

इमां दिल्लीनगरवार्तां निशम्य गांधीमहाशयैर्मुद्रणविषयकं विधिभङ्गं कर्तुं 'सत्याग्रह'नामकं वृत्तपत्रं सम्पादितम्। अन्यैर्जनैः पुस्तकानि मुद्रितानि। तेषां विक्रयणं समारब्धम्। दिल्लीनगरं गत्वा आन्दोलनं कर्तव्यमिति मनसि निधाय गांधीमहाशया मुम्बईनगरतः प्रस्थिताः। परं 'कोसीकलन'विश्रान्तिस्थाने तान् निरुध्य रक्षापुरुषाः मुम्बईनगरं प्रति अनयन्। अनया वार्तया सर्वत्र प्रक्षुब्धो जनः।

सर्वेषु स्थलेषु 'अमृतसर'नगरे जाताः पीडाप्रकारा रौद्रतमाः। कालपुरुषताण्डवं तत्र अतीव क्रूरतममिति मन्यामहे। शासनसंस्थयाऽन्यायेन विधिमण्डले प्रजापीडनविषये विधयः सम्मताः। तेन प्रजाः प्रक्षुब्धा इत्यत्र किमाश्चर्यम्। प्रक्षुब्धे जने रक्षापुरुषैर्निर्दयं गुलिकाप्रक्षेपणं कृतम्। तस्य नैसर्गिकविपाकः असङ्ख्यनिरपराधिनां प्राणनाशः। परम् एतावता प्रजापीडनेनापि अधिकारिवर्गो न तृप्तः। कपटाचारोऽपि अस्मिन् हत्याकाण्डे अधिकारिवर्गेणाङ्गीकृतः। अधिकारिपुरुषाणां मन्त्रकाले एकेनोक्तम् 'एकस्याङ्ग्लस्य जीवघाते शतशो भारतीयाः कीटका इव हन्तव्याः' इति। अन्येन सूचितम् 'महाग्न्यस्त्रेण–शतघ्न्या– घटिकामात्रादखिलं 'अमृतसर'नगरम् अग्निसात्कर्तव्यम्' इति। तदा 'लाला घोलनलाल'महाशयैः स्पष्टमेवोक्तम् 'अमृतसर'नगरमिदम्। अस्मिन्नगरे शीखजनानां परमपवित्रं सुवर्णमन्दिरं वर्तते। तस्य विनाशे जाते निखिलः 'पंजाब'प्रदेशो भस्मसात् भविष्यति। 'कर्नल स्मिथ'नामकेन रुग्णालयाधिकारिणा चिकित्सकेनोपचिकित्सकाय सन्देशः प्रहितः 'घटिकामात्रेण सेनापतिः 'जनरल

डायर'महाशयः शतघ्नीभिर्नगरे गुलिकाप्रक्षेपणं करिष्यति । अतो युष्माभिर्नगरं न गन्तव्यम्' इति । एकेन स्थिरबुद्धिनाऽधिकारिणा अस्य शतघ्नीप्रयोगस्य निषेधः कृतः । मदमूर्तिर्मुख्यचिकित्सकः 'स्मिथ'महाशयो नेत्रशस्त्रक्रियार्थं समागतेभ्यो रुग्णेभ्यो महताऽऽवेगेनाक्रोशत् 'गच्छ गांधीमहाशयम् । स युष्माकं नेत्रपीडां दूरीकरिष्यति' इति । 'लाहोर'नगरं गत्वा राजप्रतिनिधितः आज्ञापत्रं गृहीत्वा 'डॉ. सत्यपाल'महाशयांस्तथा 'डॉ. किश्चलू'महाशयानयं 'स्मिथ'महाशयः सीमापारं कृतवान् ।

## २ 'जालियनवाला'नामकमुद्यानम्

'जालियनवाला'नामके उद्याने जातमग्निगुलिकाप्रक्षेपणं कपटेन अतिभीषणमभूत् । हंसराजनाम्नैकेन पुरुषेण गुप्तचराणां दर्शनं वारं वारं गृहीत्वा अस्मिन्नुद्याने नागरिकाणां सभा निमन्त्रिता । 'लाला कन्हय्यालाल'महाशया अध्यक्षस्थानमलङ्करिष्यन्ति, 'लाला लजपतराय'महाशया व्याख्यानार्थमुपस्थास्यन्ति इति वार्ता प्रसार्य अनेन हंसराजेन सभास्थानं संमार्जितम्, व्यासपीठं च कारितम् । सभासमये व्यासपीठोपरि आकाशयाने भ्रमति, हंसराजेनोक्तम् 'शृणुत रे पौराः, सभास्थानं मा त्यजत' इति । गते आकाशयाने सैनिकैस्तत्रागत्य हंसराजकृतसूचनामनुसृत्य भयानकं गुलिकाप्रक्षेपणं कृतम् । श्रोतृगणे भित्तीनामुपरि उत्प्लुत्य पलायिते अयं हंसराजः सैनिकैर्योग्ये निर्गमनद्वारं प्रति गत्वा सुखेनोद्यानाद्बहिर्गतः । एतादृशं हंसराजं 'हंटर'समित्याः पुरतः साक्षिभावेन न निमन्त्र्य शासनसंस्था तं 'मेसापोटेमिया'देशं प्राहिणोत् ।

एवं सकलं गुलिकाप्रक्षेपणसामग्रीं समाप्य प्राणघातस्यान्यत् साधनं साम्प्रतं न दृष्ट्वा सेनापतिः 'डायर'महाशयः परावर्तत । गते तस्मिन् यद्रौद्ररूपमुद्यानेन विधृतं तद्वर्णयितुमसमर्था लेखनी । गुप्तचरहस्तकेन यावच्छक्यं जनाः सभार्थं निमन्त्रिताः । लोकधुरीणानां नामानि प्रयुज्य जनाः समाहूताः । अग्निगोलकप्रक्षेपणात्पूर्वं निरीक्षणं कृतम् । गमनार्थं पूर्वसूचनाऽपि न दत्ता । आसुरीं पद्धतिमनुसृत्य गुलिकाप्रक्षेपणं कृतम् । सैनिका निर्दयाः पशुतुल्या विवेकहीनाश्च । हृदयविहीनैस्तैर्निःशङ्कमनसा निःशस्त्र-

स्वजनेषु गुलिकाप्रक्षेपणं कृतम्, गुलिकाविद्धेभ्यः प्राशनार्थं जलं वा भिषग्वराणां साहाय्यमपि वा न दत्तम्। का कथा खाद्यपेयादिपदार्थानाम्! एतेनाप्यसन्तुष्टेनाधिकारिवर्गेण रात्रौ 'जालियनवाला'नामके उद्याने गमनागमनमपि प्रतिषिद्धम्। अतो भिषग्वराणां साहाय्याभावे, खाद्यपेयादिपदार्थाभावे, गुलिकाकृतव्रणविरोपणादिपरिचर्याभावे बहवो जनाः हा हा इति कृत्वा पयःपानार्थमाक्रोशन्तः महता दुःखेन प्राणाञ्जहुः। साक्ष्यर्थमपि कठोरं प्रजापीडनं शासनसंस्थया कृतम्। अस्मिन् समये मानुषशरीरेषु दैत्यसञ्चारो जातः। प्रजापीडनविषये स्त्रीदाक्षिण्यमपि विलयं गतम्। 'शेरवुड'मार्गेण सरीसृपा इवोरसा गन्तुं जनाः शासनाधिकारिभिराज्ञापिताः। एवं पंजावप्रदेशे महाननर्थः सम्भूतः। अखिलोऽयं वृत्तान्तः शिष्टमण्डलसदस्यैराङ्ग्लदेशे शनैः शनैर्ज्ञातः।

## ३ भारतदेशं प्रत्यागमनम्

नोव्हेंबरमासस्य षष्ठे दिवसे आङ्ग्लदेशान्निर्गत्य सप्तविंशे दिने लोकमान्या मुम्बापुरीं प्राप्ताः। तत्र तेषां महान् सत्कारोऽभूत्। परम् एतेन अमृतसरप्रकरणेन लोकमान्यानां चित्तमतीव दुःखितं जातम्। एकस्मिन् समये लोकमान्यैरुक्तम् 'एतन्मम चित्तं दहति यदहं गांधीमहाशयानां सत्याग्रहसमये भारतदेशे नासम्। येऽधिकारा लभ्यन्ते ते असन्तुष्टमनसा स्वीकर्तव्याः, परं तेषां साहाय्येनान्दोलनं न कदाऽपि त्याज्यम्'। उक्तं च

'असन्तोषः श्रियो मूलं सन्तोषो हरति श्रियम्।' इति।

डिसेंबरमासस्य प्रथमे दिवसे लोकमान्याः पुण्यपत्तनं प्राप्ताः। तेषां सत्कारार्थं स्वागतसमितिर्नियुक्ताऽऽसीत्। सचलनार्थं देवलमहाशयैर्गजद्वयं दत्तम्। गमनकाल इवागमनकालेऽपि पुष्पलतापल्लवतोरणानि मार्गे विरचितानि। तैलशकटे उपविश्य पूर्वनियतमार्गेण गच्छन्तो लोकमान्याः स्थले स्थले प्रतीक्षमाणानां जनानां सत्कारं स्वीकृत्य सार्धयामानन्तरं स्वसदनं प्राप्ताः। पुण्यपत्तननगरपालिकया मानपत्रं दत्त्वा ते सत्कृताः। अस्य मानपत्रस्येयमेवापूर्वता यत् शासनसंस्थाधिकारिभ्योऽन्यः प्रथमोऽयं पुरुषः यो नगरपालिकया मानपत्रेण सम्मानितः। शिलामूर्तिविषयेऽपि लोकमान्या एव प्राथम्यमभजन्त।

पुण्यपत्तननागरिकैरपि लोकमान्या मानपत्रेण सत्कृताः । अस्मिन् समये केचन विरोधका आसन् । परं तेषां विरोधः शीततां गतः । अस्मिन् समये लोकमान्यैरुपदिष्टम् 'यल्लप्स्यते तद्गृह्यताम् । यन्न लप्स्यते तल्लब्धुमेकचित्तेन प्रयत्यताम् । स्वगृहे भेदो न युक्तः ।' 'संहतिः कार्यसाधिका' इति ।

## ४ अमृतसर-राष्ट्रियसभा

डिसेंबरमासस्य सप्तविंशे दिने अमृतसरनगरे राष्ट्रियसभाधिवेशनमासीत् । अध्यक्षस्थाने 'पण्डित मोतीलाल नेहरू'महाशया नियुक्ता आसन् । अस्मिन्नपि वत्सरे प्रतिनिधीनां कृते विशेषाग्निरथयोजना कृता । अग्निरथेन गच्छन्तो लोकमान्या मध्येमार्गं 'गङ्गापुर'विश्रान्तिस्थाने आङ्ग्लदेशनृपतेर्घोषणां वृत्तपत्रे अवाचयन् । सपद्येव तैः कृतज्ञता प्रदर्शिता । अयं सन्देशः कञ्चित् कालं भारते विवादविषयो जातः ।

अमृतसरनगरं प्राप्तेषु लोकमान्येषु नागरिकैर्महत्संचलनं नियोजितम् । डॉ. किश्लू-डॉ. सत्यपाल 'प्रभृतिलोकनेतारो बन्धनान्मुक्ता अभूवन् । तेन जनानामानन्दो द्विगुणो जातः । स्वामिश्रद्धानंदमहाशयाः स्वागताध्यक्षपदमापन्नाः । स्वागतसमये तैरुक्तम् "राष्ट्रियसभाया इतिहासे अयमेव प्रथमः समयः यस्मिन् काषायवस्त्रधारी यतिः सुशोभितेऽस्मिन् राजकीयव्यासपीठे अत्रभवद्भ्यः स्वागतं वितरति । मम यतिवेषो मां कथयति 'अखिलं जगन्मम गृहम्' । अतः साम्यदृष्ट्या सर्वमहं पश्यामि । अन्यच्च । यैर्नररत्नैर्भारतदेशस्य मानरक्षणार्थं प्राणदानं कृतं कारावासो वा स्वीकृतस्तेषां धर्मपत्नीभिराशास्तेऽस्मि यत्तेषां प्रियपतीनां जीवात्मानस्तदा शान्तिं लभेरन् यदा स्वराज्यप्राप्त्यर्थं राष्ट्रियसभया प्रचालितमान्दोलनं शीततां न गच्छेत् । अतस्तासामाज्ञां शिरसि निधाय मयेदं स्थानं स्वीकृतम् ।

स्वराज्याधिकारदानविषये श्रद्धानन्दमहाशयैरुक्तम् 'केषामपि समुपशमेन जनाः स्वराज्याधिकारान् लभन्ताम् । यत्प्राप्तं भवेत् तत्स्वीकृत्य शेषं सम्पादयितुमस्माभिः सयत्नैर्भाव्यम् । अखिलं भारतखण्डं यदि प्रान्ताधिकारान् स्वयं मन्यतं भवेत्तर्हि तत्त्यागेन कोऽप्यर्थः सम्पद्येत । परं साम्प्रतमप्यासम्भवः । समाप्तः फलदः । टिळकमहाराजेनाप्ययमेवोपदिष्टम् ।

यद्दत्तमुपभोक्तव्यं तत् । यत्र दत्तं तदर्थं सुमहान् यत्नः कर्तव्यः । भरतखण्डे एकराष्ट्रियभावनां प्रसारयितुं यैरादिपुरुषैर्विश्वप्रयत्नः कृतस्तेषामग्रणीः टिळकमहाशयः । अस्ति कश्चिदसौ इयति लोके येन मातृभूमिपारतन्त्र्यशृङ्खलाभङ्गाय टिळकमहाशयेभ्योऽधिकतरं दुःखमनुभूतम् ? वयोवृद्धतपोवृद्धज्ञानवृद्धानां भीष्माचार्यसमानानां टिळकमहाशयानामनुशासनं पालयितुं सर्वे भारतभूसैनिका बद्धपरिकराः स्मः इत्यहं मन्ये " इति ।

- विषयनियामकसमितिसदस्यानां मनोवृत्तय उल्लसिता अभूवन् । ' महंमदअली–शौकतअली ' इति भ्रातृद्वयं बन्धनान्मुक्तम् । लोकमान्यानां तथा विपिनचन्द्रपालमहाशयानां पंजाबप्रदेशप्रवेशप्रतिबन्धो दूरीकृतः । गांधीमहाशयानां भाषणसमये ' दिवाण मंगळसेन–लाला धुनीचंद'महाशयाः कारावासान्मुक्ताः । ' जालियनवालाबाग'नामकोद्याने जातस्य प्रजासंहारस्य स्मारकं विधेयमिति प्रस्तावे सभायां विचारार्थं स्वीकृते सर्वैरुत्थाय निजसंमतिः प्रदर्शिता । क्षणादेव तत्र लक्षपरिमितरूपकाः स्मारकार्थं सङ्कलिताः । राजघोषणा, राजपुत्रस्यागतं, डायर–ओडवायरकृतप्रजासंहारः, लॉर्ड चेम्सफर्डमहाशयस्य प्रधानराजप्रतिनिधेः पदच्युतिरित्यादिविषयानधिकृत्य प्रस्तावाः सम्मताः । प्रमुखप्रस्तावः अधिकारदानविषयकः । दिनद्वयं तस्य चर्चा कृत्वा तृतीयेऽह्नि सर्वसम्मता प्रस्तावशब्दरचना कृता । अधिकारदानस्य गौणत्वसूचकानि विशेषणानि दत्त्वा प्राप्ताधिकाराणां स्वीकरणं मॉंटेग्यूमहाशयानामाभारप्रदर्शनमिति विषयान् समावेश्य प्रस्तावः संमतो जातः । एवं सर्वेषामविरोधेन समाप्तमिदं संस्मरणीयं राष्ट्रियसभाधिवेशनम् ।

अमृतसरनगरात्पुण्यपत्तनं प्राप्तेषु प्रतिनिधिषु लोकधुरीणैर्नागरिकाणां सभा निमन्त्रिता । ' तात्यासाहेब केळकर'महाशयैरधिवेशनवृत्तान्तः सविस्तरं निवेदितः । अध्यक्षीयभाषणे लोकमान्या अवदन् ' काले काले कार्यपद्धतिः देशस्थित्या परिवर्त्यते । सा यदि लोकसंमता नाभविष्यत्तर्हि क्रोधेन किं प्रयोजनम् ' इति । प्रधानपदस्वीकरणविषये तैरुक्तम् ' शासनसंस्था यदि प्राप्ता भवेत्तर्हि स्तुतिपाठकानां स्थाने युक्तियुक्तं भाषमाणान् जनान् सा प्रधानपदे नियुञ्ज्यात् । अथैते प्रधानपदस्था जना अपि लोकांस्तथा शासनसंस्थामाराधयेयुः ' इति ।

अनन्तरं 'सांगली'नगरे ज्योतिषसमेलनं, जुन्नरपत्तने पुणेविभाग-परिषत्, सिंधदेशे प्रचारार्थं दीर्घप्रवासः, मार्गे दिल्लीनगरगमनम्, पश्चात् अजमीरपत्तनगमनम् ( तत्र वणिग्जनैः सुवर्णरजतपुष्पवृष्टिः कृता ); अनन्तरं 'हैदराबाद ( सिंध )-शिकारपुर-सक्कर-मिरपुरखास-त्रिडोजाकोटी'-इत्यादिस्थलेषु स्वागतसत्काराः द्रव्यनिधिः इत्यादिनित्यविधीन् समाप्य लोकमान्यैः प्रचारार्थं बहु व्याख्यातम्।

एवं दीर्घप्रवासं समाप्य लोकमान्याः 'सोलापुर'नगरं मुम्बईप्रदेश-परिषदधिवेशनार्थं गताः। नेमस्तपक्षेण तत्र प्रथमं गत्वा सूक्तासूक्तप्रकारै-र्निजपक्षप्रचारं कृत्वाऽधिवेशनसमये विरोधं दर्शयितुं महान् यत्नः कृतः। बेझंटमहिलाऽपि निमन्त्रिता। अध्यक्षस्थानं केळकरमहाशयैर्मण्डितम्। अमृतसरनगरे इव सोलापुरनगरेऽपि नेमस्तराष्ट्रियपक्षयोर्महान् संग्रामो ज्ञातः। अधिवेशने मुख्यप्रस्तावो लोकमान्यैः पुरस्कृतः। विधि-मण्डले राष्ट्रियसभासंमतप्रस्तावानुसारतो राष्ट्रियपक्षपुरुषा एव निर्वाचनेन नियोक्तव्या इति प्रस्तावाशयः। तस्य उपसूचना बेझंटमहिलया कृता। पक्षभेदं विस्मृत्य सदस्या नियोक्तव्या इति तस्या आशयः। प्रस्तावचर्चासमये अनुकूलप्रतिकूलप्रतिनिधीनां क्रमशः प्रतिपादनम् अध्यक्ष-महाशयैः कुशलतयाऽनुज्ञातम्। एवं महान् विवादः समजायत। अन्ते लोकमान्यैः सर्वेषां विरोधपरिहारं कृत्वा राष्ट्रियपक्षमतप्रतिपादनं प्रमाणैः कृतम्। तस्येष्टपरिणामो मतदानकाले दृष्टः। प्रमुखप्रस्तावस्यानुकूलमतसंख्या सहस्रद्वयमासीत्। प्रतिकूलमतसंख्या सप्तशतम्। सोलापुरनगरे राष्ट्रियपक्षेण महान् विजयः संपादितः। एतं विषयमधिकृत्य केसरिपत्रे अमलेखे विस्तरशः प्रमाणैः राष्ट्रियपक्षमण्डनं लोकमान्यैः पुनरेकदा कृतम्।

अथ राष्ट्रियकार्यं प्रगतं कर्तुं लोकमान्यैरेकं निवेदनमुद्घोषितम्। तस्मिन्निवेदने राष्ट्रियसभासंमततत्त्वानि मथित्वा स्वराज्याधिकारदान-मुपयुक्तं कर्तुमेष्टा कार्यपद्धतिः प्रतिपादिता।

अनन्तरं राष्ट्रियपक्षेण संकलितो द्रव्यनिधिर्लोकमान्येभ्यः समर्पयितु-मपूर्वमत्कारमहोत्सवः कृतः। कृतज्ञताप्रदर्शनार्थं लोकमान्यैरुक्तम् 'अनेन द्रव्यनिधिना क्षेपेरहं क्रीतोऽस्मि'। विरोधप्रकरणं सारांशेन कथयित्वा

तेऽब्रुवन् ' चिरोलपक्षीयविधिज्ञेन कथितम् ' अस्मिन्नभियोगे यदि टिळक-महाशयेन यशः सम्पादितं तर्हि भारतदेशे आङ्ग्लशासनसंस्थायां महाननर्थः समापतेदिति । एतेन प्रतिपादनेन अभियोगस्याखिलभारतीयस्वरूपं निर्णीतम् ' इति ।

## ९ स्वराज्यसङ्घाधिवेशनम्

अनन्तरं स्वराज्यसङ्घस्य सांवत्सरिकं चतुर्थाधिवेशनं जातम् । अधिवेशनान्ते लोकमान्यैर्विस्तृतं विवेचनं कृत्वा प्रतिपादितम् ' स्वराज्याधिकाराणां यावच्छक्यमुपयोगोऽवश्यं कर्तव्यः । सांप्रतमस्मिन् विषये न विवादः । अतः परं सम्पूर्णस्वराज्यप्राप्तये प्राप्ताधिकाराणामुपयोगः इत्यस्माकं कार्यपद्धति'रिति । विरोधकानामाक्षेपान् विविच्य तेषां परिहारं कृत्वा स्वराज्याधिकाराणां गुणदोषान् परीक्ष्य तैः कथितम् ' अधुना विधिमण्डलप्रवेशाय शक्तिसर्वस्वमुपयोक्तव्यम् । आङ्ग्लदेशेऽपि प्रचार आवश्यकः । केनापि निमित्तेन राष्ट्रसङ्घस्य पुरत आत्मनो दुःखं निवेद्य स्वमतप्रतिपादनं कर्तव्यम् । एतदर्थं राष्ट्रियसभासम्बन्ध आवश्यकः ' इति । अनया रीत्या सर्वेषां प्रश्नानां साकल्येनोहापोहं कृत्वा लोकमान्यैः स्वराज्यसङ्घाधिवेशनं समापितम् ।

राजकारणविषयकं लोकमान्यानामेतदेवान्तिमं भाषणम् ।

स्वराज्यसङ्घकार्यं समाप्य अखिलभारतीयराष्ट्रियसभासमित्याः अधिवेशनार्थं लोकमान्याः ' काशी'क्षेत्रं गताः । ' मे'मासस्य त्रिंशे दिवसे गङ्गातीरे गङ्गापुत्रैर्देववाण्यां लिखितेन मानपत्रेण लोकमान्याः सत्कृताः । नागरिकैरप्यन्यन्मानपत्रं गीर्वाणवाण्यां लिखितं तेभ्यो दत्तम् ।

---

# १७ निर्याणपर्व

## १ ज्वरप्रादुर्भावः

स्वराज्यसङ्घसभायामेव लोकमान्यैरुक्तम् 'पश्चिमे वयसि वर्तमानस्य मम शरीरसामर्थ्यमधुना क्षीणं जातम्। अतो नूतनं कार्यं मया स्वेच्छयाऽङ्गीकर्तव्यम्। लोकाग्रहोऽनावश्यकः' इति।

लोकमान्यानां मानसपुत्रो जगन्नाथमहाराजः। तस्य शेषं कार्यं लोकमान्यैः समापितम्। तस्य मधुरं फलमपि चरमे वयसि निधनात्पूर्वमनुभूतम्। परम् अस्य प्रकरणस्य समुच्चये समारब्धे लोकमान्या हिमज्वरग्रस्ता बभूवुः। एतेन जगन्नाथप्रकरणनिमित्तेन लोकमान्या जुलैमासस्य द्वादशेऽहनि मुम्बापुरीं गताः। प्रथमं ज्वरः पश्चात् स्वेदजालम्। स्वेदजालानन्तरं ज्वरमानं किञ्चिदूनं जातम्। पुनर्ज्वरः। एवंक्रमेण लोकमान्याः किञ्चित् ज्वरग्रस्ता जाता। ख्रिस्ताब्दस्य १९२० संवत्सरस्य जुलैमासे विंशे दिवसे 'दिवाण चमणलाल'महाशया लोकमान्यदर्शनार्थं 'सरदारगृह'नामकं हर्म्यं गताः। कुशलमापृच्छ्य लोकमान्यान् आत्मनस्तैलशकटे उपवेश्य तैस्सह पवनविहारार्थं सुदूरं गत्वा परागताः। रात्रौ ज्वरमानं प्रवृद्धम्। तस्माद्दिवसादारभ्यान्तकालपर्यन्तं लोकमान्यैः शयनमञ्चो न मुक्तः।

## २ निर्याणम्

मुम्बापुर्यां धन्वन्तरिसमानानां भिषग्वराणां महत्साहाय्यं लब्धम्। जुलैमासस्य सप्तविंशाद्दिवसादूर्ध्वं लोकमान्याः कचित्कचिन्निःसंज्ञा बभूवुः। पुनः प्रकृतिमापुः। एवं लोकमान्यानां महान् शक्तिपातो जातः। न तेषां बान्धवज्ञानं वयस्यजनज्ञानं वा आसीत्। मन्दवासरे अपराह्णसमयादूर्ध्वमाशाबन्धः क्षीणो बभूव। कुशलं प्रष्टुमसङ्ख्यो जनो विप्रकृष्टादागतः। सर्वैर्लोकमान्यानां दर्शनं गृहीतम्। परं तान् बोधामृतं श्रावयितुं लोकमान्या असमर्थाः। स्वयंसेवकगणेनातीव कष्टतरं कार्यं कृतम्। लोकमान्यसेवानुग्रहार्थे स गणो दिवा, रात्रौ, सदैव अविश्रान्तं सज्जः आसीत्। नक्तंदिवं लोकमान्यदर्शनार्थं जना आगच्छन्। शरीरस्वास्थ्यं जनेभ्यो निवेदयितुं वृत्तपत्रसम्पादकैः स्वपत्राणि सायंप्रातर्मुद्रितानि। अस्मिन् समये सर्वे पक्षभेदा निरस्ताः। विद्युत्सन्देशगृहकार्य-

मखण्डमासीत् । 'सरदारगृह'स्वामिना 'साळवेकर'महाशयेन लोकमान्यप्रकृतिस्वास्थ्याय प्रभूतो धनव्ययो धार्मिककृत्येषु कृतः । अन्ते भिषग्वर्यैः 'देशमुख-भडकमकरा'दिभिर्लोकेभ्यः कथितम् 'अधुना लोकमान्या ईश्वराधीना जाताः । तेषां शयनागारं गत्वा जनाः शान्तताभङ्गं न कुर्युः' । भिषग्वराणां शब्दमात्रेणाखिलं तत्सदनं निःशब्दं जातम् । मध्यरात्रे घटिकाद्वयादूर्ध्वं लोकमान्यनिकटवर्तिना जनेन अधः आगत्य लोकेभ्यः कथितम् 'लोकमान्यानां जीवात्मा परमात्मनि विलीनः' इति । एवं १९२० संवत्सरस्य ऑगस्टमासस्य प्रथमे दिवसे लोकमान्या दिवं गताः ।

महति प्रत्यूषे विद्युद्वेगेन लोकमान्यनिधनवार्ता सर्वासु दिक्षु प्रसृता । अन्त्यविध्यनुष्ठानं मुम्बापुर्यामेव युक्तम् । सर्वो जनः सरदारगृहं गन्तुं प्रवृत्तः । सत्यपि वर्षासमये प्रभाते सहस्रशो जना हर्म्यस्य पुरतोऽन्त्यदर्शनार्थं समागताः ।

पुण्यपत्तनस्थो जनः पुण्यपत्तनात् मुम्बापुरीं गन्तुं प्रस्थितः । तेषां केचन लोकमान्यकलेवरं पुण्यपत्तनं नेतुमैच्छन् । परं तान् समाधाय सकला व्यवस्था मुम्बापुर्यामेव कृता । तत्रापि प्रथमः प्रश्नः स्थलस्य । नित्या श्मशानभूमिस्तु न विस्तीर्णा । जनसमुदायस्तु सागर इव अपारः । अतः समुद्रोपकण्ठे 'चौपाटी'नामके स्थले अग्निसंस्कारो युक्त इति निश्चये जाते तदुद्देशेन यत्नः समारब्धः । अस्मिन् विषये शासनसंस्थायाः अनुज्ञा आवश्यकी । अतः प्रमुखरक्षापुरुषाधिकारिणं दृष्ट्वा स लोकाग्रणीभिः प्रार्थितः । मुम्बईप्रदेशराजप्रतिनिधिः पुण्यपत्तने आसीत् । विद्युत्सन्देशेन तं पृष्ट्वा अनुज्ञा प्रार्थिता । राजप्रतिनिधिना कथितम् 'आयत्यामग्निसंस्कारस्थलस्योपरि न कोऽपि लोकानामधिकारः शासनसंस्थायाः सम्मतो भविष्यति । यद्येतद्युष्माभिः प्रतिश्रुतं तर्हि अनुज्ञां दास्यामि' इति । सम्मतमेतल्लोकधुरीणानाम् । लब्धायामनुज्ञायां प्रमुखरक्षापुरुषाधिकारिणा श्मशानयात्रामार्गो निर्धारितः ।

## ३ महायात्रासञ्चलनम्

अथ अपराह्णकाले श्मशानयात्रासञ्चलनं समारब्धम् । पक्षभेदं, जातिभेदं, धर्मभेदं विस्मृत्य सर्वो जनः शवासनं स्कन्धेनोवाह । दीर्घोऽपि

मार्गः आबालवृद्धैः स्त्रीपुरुषैः, धनिकैर्निर्धनैः, शिक्षितैरशिक्षितैर्जनैः समाकुलो जातः। आसारेण जनः पुनः पुनरापादमस्तकं स्नातः। जलक्लिन्नवस्त्राणि शरीरे तथैव धारयित्वा जनो लोकमान्यान् मनसि ध्यायन्नग्रतोऽसरत्। हरिनामसङ्कीर्तनमखण्डमासीत्। स्थाने स्थाने शवासनोपरि नरनारीभिः पुष्पवृष्टिः कृता। अनन्तरं सागरोपकण्ठे चन्दनकाष्ठानि रचयित्वा, कलेवरस्य धार्मिकविधिं समाप्य, लोकधुरीणानां समयोचितभाषणानन्तरं जनेन महता दुःखेन लोकमान्यशवोऽग्निसात् कृतः। पञ्चमहाभूतानां पञ्चीकरणेन समुत्पन्नो देहः पुनः पञ्चतत्त्वेषु विलीनः। समग्रो मुम्बापुरीस्थो जीवलोको दुःखविमूढो जातः। कञ्चित्कालं श्मशाने स्थित्वा सर्वो जनो जडपदैर्मन्दं मन्दं गृहं जगाम।

ऑगस्टमासस्य तृतीये दिवसे लोकमान्यानामस्थीनि चन्दनकाष्ठमञ्जूषायां स्थापयित्वा बान्धववयस्यधुरीणगणो जडहृदयेन विशेषाग्निरथेन पुण्यपत्तनविश्रान्तिस्थानं समागतः। लोहमार्गे सर्वत्रास्थिसत्कारो जातः। अग्निरथविश्रान्तिस्थानाल्लोकमान्यसदनं यावदखिलो मार्गो जनेन समाकुलोऽभूत्। गृहद्वारेषु, वातायनेषु, गृहाणामुपरितनभागेषु, महीरुहेषु, यत्र यत्र स्वल्पं स्थानं स्थातुमासीत्तत्र तत्र लोकः शोकाकुलमनसा उपस्थित आसीत्। 'राम-कृष्ण-हरि-ज्ञानदेव-तुकाराम' इत्यादिनामघोषं कुर्वतां भजनमण्डलानां संचलनम्, आन्दोलिकां दृष्ट्वा जनानां नमस्कृतिः, सम्मुखमागतायां शिबिकायां नारीणामश्रुविमोचनम्, भाविकजनेन कृता पुष्पवृष्टिः, एतत्सर्वं दृश्यं विलोक्य अचेतनमपि जगद् खीभवति, किमुत सचेतनम्!

पुण्यपत्तने और्ध्वदेहिकविधिं समाप्य लोकमान्यानां ज्येष्ठः पुत्रः, कनिष्ठो जामाता च लोकमान्यास्थीनि गृहीत्वा परमपवित्रं प्रयागतीर्थं गत्वा त्रिवेणीसङ्गमे विधिपूर्वकमस्थिविसर्जनमकुरुताम्। एवं लोकमान्यानां मध्यमलोकयात्रा सम्पूर्णा। प्रारब्धभोगाय जीवलोकं समागतो जीवात्मा स्वस्थानं गतः। अधुना नामशेषा लोकमान्याः षट्त्रिंशत्समानन्तरमपि तत्त्वज्ञानविषये निष्कामकर्मयोगोपदेशेन, राजकारणविषये प्रतियोगिसहकारतत्त्वादेशेन, लोकव्यवहारे स्वार्थत्यागेन, विपत्काले अविचलितधैर्येण सदाचारेण च कर्तव्यमूढान् जनान् पदे पदे आदर्शभूतं निजचरितं स्मारयन्ति।

---

# १८ समालोचनपर्व

'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥'

भ. गी. १०–४१

स्वजनघातेन कथं सुखी भविष्यामीति विषादेन कर्तव्यपराङ्मुख-मर्जुनम्

'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।'

इत्यादिभिः श्लोकैर्जीवात्मपरमात्मनोरैक्यं प्रतिपाद्य भगवान् श्रीकृष्णस्तं विभूतियोगं कथयित्वा ब्रूते, यद्यत्सत्त्वम् ऐश्वर्यसंपन्नं विशेषप्रकारेणोर्जितं वा दृश्यते तत्तन्मम तेजोंऽशसंभवमिति त्वं जानीहि ।

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥'

भ. गी. १०–२०

यद्यप्यखिलचराचरवस्तुजातस्य मूलकारणं परमात्मतत्त्वं तथापि तस्यास्तित्वं सामान्यजनस्य तत्रैवोत्कटत्वेन प्रतिभाति यत्र कश्चिदतिशयो दृश्यते । इमं निकषमुररीकृत्य यदेदं लोकमान्यचरितं समालोच्यते तदा समतीते वर्षशते विविधेषु कार्यक्षेत्रेषु लोकमान्या अग्रिमं स्थानं भजन्ते इति विलोक्यते । इदमेव तेषां गुणवैशिष्ट्यं विभूतिमत्त्वं वा । कथमेतत्संभूतमित्यत्र समासेनालोक्यते ।

## १ शिक्षणक्षेत्रे अग्रेसरत्वम्

यावज्जीवं लोकमान्यैः किं कार्यं कृतमिति पृष्टे, यथाशक्ति यथामति तैराबालवृद्धेभ्यो ज्ञानदानं कृतं, तथा च शासनसंस्थया सह भारतस्वातन्त्र्यार्थं महायुद्धं कृतमित्युत्तरं प्राप्यते । आसेतुहिमाचलं खण्डप्रायं भारतदेशं पारतन्त्र्यशृङ्खलाबद्धं दृष्ट्वा लोकमान्यानां स्वान्तमतीव दुःखाकुलमभूत् । षोडशवर्षदेशीयस्य महाविद्यालये अधीयानस्य बालस्यैवंविधा

भरतखण्डस्वातन्त्र्यविषये विचाराः । पारतन्त्र्ये किं दुःखं वर्तते, स्वातन्त्र्ये किं सुखमिति कल्पनाऽपि तदा सामान्यजनस्य नास्ति । कुतस्तद्विषयको यत्नः । ईदृगवस्थायाः मूलकारणमस्माकमज्ञानमिति विचिन्त्य तन्नाशाय लोकमान्याः प्रथमं सयत्ना अभूवन् । अज्ञानविनाशकं ज्ञानम् । प्रजासु तस्य प्रसरः शिक्षणेन । सामान्यजनेन शिक्षणं पाठशालासु, विद्यालयेषु, महाविद्यालयेषु च लभ्यते । अतः प्रथमं विद्यालयमहाविद्यालयस्थापनाविचारः । स विचारो लोकमान्यैस्तेषां सहकारिभिश्च कार्यान्वितः कृतः । तस्य दृग्गोचरफलं 'न्यू इंग्लिश स्कूल'नामको विद्यालयः, 'फर्ग्युसन् कॉलेज'-नामको महाविद्यालयश्च । अस्त्ययं विशेषोऽस्य समुद्यमस्य यत्तदानीमेतादृशः प्रयत्नो न पूर्वं केनापि समारब्धः । अतो धैर्यत्वः कृतस्तेषां कर्तृत्वं विद्युदिव व्यद्योतत ।

सर्वमेतद्बालानां शिक्षणार्थमनुष्ठितम् । प्रौढानां शिक्षणार्थं किमिति विचारे समुत्पन्ने तत्कालोचिता वृत्तपत्रकल्पना प्रादुर्भूता । तदनुसारतः 'केसरी-मराठा' इति वृत्तपत्रद्वयं समारब्धम् । केसरिणा स्वनामसदृशः पराक्रमः कृतः । अतः शासनसंस्थाऽपि तस्मात् भीतिग्रस्ता बभूव । यावतांशेन केसरिणा जनप्रबोधः कृतस्तावतांशेन तस्य संपादकेन शासनसंस्थारोषः संपादितः । गुप्तचरकार्यालये 'अयं टिळकमहाशयः प्रथमस्थानीयो रिपु'रिति गण्यते । एवं चतुरङ्गबलान्विताऽपि शासनसंस्था यस्मात् पुरुषात् बिभेति स कथं लोकोत्तरो न भवेत् । इदमेव लोकमान्यानां विभूतिमत्त्वम् ।

## २ चिरोलदत्तप्रमाणपत्रम्

अस्मिन् लोकमान्यवैशिष्ट्यविषये शत्रुपक्षे स्थितस्य साम्राज्यवादिनः शासनसंस्थापक्षपातिनश्चिरोलमहाशयस्य मतं विशेषेण प्रमाणम् । लोकमान्यविषये तेन यल्लिखितं तत् पुनरेकदा उद्ध्रियते । तेन लोकमान्यानां लोकोत्तरत्वं सिद्धं भवति । चिरोलपर्वणि तस्य एवमुद्गाराः 'वृत्तपत्रवार्ताहरव्यवसायं बहुलाः समा अहमन्वसरम् । तस्मिन् कालखण्डे धाष्टर्येन मां पृच्छन्तौ द्वावेव पुरुषौ मया दृष्टौ । एकः टिळकमहाशयः । अपरो 'जर्मन्-सम्राट् कैसर विल्यम्'महाशयः । अयं टिळकमहाशयः पुण्यपत्तनस्थ-

चित्पावनब्राह्मणजातिसमुत्पन्नः । चित्पावनवर्गः सदैव परमेश्वरकृपामनुभवति, अहंकारं च वहति । ( उक्तं च

' भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥'

मनु. १–९६

इति ) । पुराणमतवादी टिळकमहाशयः । अस्मिन् काललण्डे नान्यः कश्चिल्लोकोत्तरपुरुषोऽनेन सह तुलामधिरोहति । कदाचित् गांधीमहाशयः एतत्स्थानं लभेत । परं तस्य ऋजुत्वं, मृदुत्वं, विनयशीलत्वं च टिळकमहाशये न वर्तन्ते । तथा च टिळकमहाशयस्य बुद्धिमत्त्वं, व्यवहारकौशलं, राजकारणमर्मज्ञत्वं च गांधीमहाशयतः शतगुणेनाधिकं विद्यते । स्वधर्मे दुर्दम्यविश्वासेनान्यधर्मान् स तृणाय मन्यते । लोकधुरीणानामावश्यका गुणास्तस्य जन्मसिद्धाः'इति । एवं भारतसपत्नेन चिरोलमहाशयेन लोकमान्यानां गुणा एव दोषरूपेण दर्शिताः । उक्तं च

' गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् ॥ '

इति । न केवलमिदम् । अपि तु चिरोलमहाशयेन लोकमान्येभ्यो ' भारतासंतोषस्य जनकः ' इति पदवीं दत्त्वा तेषाममिनन्दनं कृतम् । उक्तं च–

' असन्तोषः श्रियो मूलं सन्तोषो हरति श्रियम् । '

इति । इदमेव लोकमान्यानां लोकोत्तरत्वं विभूतिमत्त्वं च ।

## २ असाधारणबुद्धिमत्त्वम्

अन्यो लोकमान्यानां गुणप्रकर्षस्तेषामनन्यसाधारणबुद्धिमत्त्वम् । एतत्तेषां कुशाग्रबुद्धित्वं धर्मशास्त्रे, विधिशास्त्रे, गणितशास्त्रे, राजनीतौ, संशोधनकार्ये च प्रकर्षेण दृश्यते । धर्मविषये लोकमान्यविचाराः प्रगततराः ।

' प्रामाण्यबुद्धिर्वेदेषु साधनानामनेकता ।
उपास्यानामनियम एतद्धर्मस्य लक्षणम् ॥ '

इति लोकमान्यैर्धर्मलक्षणं कृतम् । परम्परागतधर्मतत्त्वानि पूर्वाचार्यैरनुभूतिपूर्वकं निश्चितानि पुरस्कृतानि च वर्तन्ते । तेषां सनातनतत्त्वानामाधारेण देशकालानुसारतो लोकान् सुष्ठु विनीयाचारधर्मे सम्यग्विचारेण मतपरिवर्तनं लोकमान्यैरिष्यत इति तेषां लेखेषु व्याख्यानेषु च दृश्यते ।

सामाजिककार्यविषयेऽपि लोकमान्यानामेवमेव मतम् ।

लोकमान्यानां लोकोत्तरत्वं संशोधनकार्ये प्रामुख्येण दृश्यते । वेदवाङ्मयावगाहनं तेषां स्वभावः । कृतज्ञताप्रदर्शनकाले मॅक्समुल्लरमहाशयेभ्यो लोकमान्या लिखन्ति स्म 'लब्धावसरो मया वैदिकवाङ्मयचिन्तनेन वा महाभारतावलोकनेन वा याप्यते' इति । लोकमान्यानां संशोधनपद्धतिरपि लोकविलक्षणा । ज्योतिषशास्त्रविषयका वेदवाङ्मयोल्लेखाः पाश्चात्यसंशोधकैस्तिरस्कृताः । ये केचन शास्त्रज्ञास्तेषामाधारेण वैदिकप्रमेयाणि प्रतिपादयन्ति तेषां सिद्धान्तास्तैर्नाद्रियन्ते । परं लोकमान्यैरात्मनः संशोधनं–विशेषेण तु वेदानां प्राचीनत्वविषये–ज्योतिषशास्त्राधारेण, गणितशास्त्रप्रामाण्येन च पाश्चात्यपण्डितानां पुरतस्तथा स्थापितं यथा तैरपि तत्संशोधनं विचारार्हमिति संभावितम् । कैश्चन पूर्वग्रहदोषेण लोकमान्यसिद्धान्तास्तिरस्कृताः । कैश्चन कुशाग्रबुद्ध्यभावात्ते सिद्धान्ताः सम्यङ्न ज्ञाताः । प्रचलितसिद्धान्तविरुद्धा ह्येते सिद्धान्ताः । अत एव ते कथं मन्तव्या इति कृत्वा कैश्चन ते न स्वीकृताः । परं केचन पण्डिताः शुद्धबुद्धय आसन् । तेऽलिखन् 'वेदान्तर्गतप्रमाणैः स्वातन्त्र्यबुद्ध्या प्रतिपादिता ह्येते सिद्धान्ताः । यद्यपि ते तदानींतनया रुढसंशोधनरीत्या न निरूपितास्तथाऽपि अनया ज्योतिषशास्त्राधारपद्धत्या संशोधनस्यापरो मार्गो दर्शितः इति कृत्वा विरुद्धप्रमाणाभावात् सिद्धान्ताः स्थिराः भवन्ति । अपरं च । पूर्वं यानि प्रमेयाणि गूढान्यासन् तान्येभिः सिद्धान्तैर्ज्ञातानि भवन्तीत्यस्य संशोधनस्य विशेषफलम्' । इदं लोकमान्यानां लोकोत्तरत्वम् अलोकसामान्यबुद्धिमत्त्वं च । अतस्तेषां विभूतिमत्त्वमिदम् । 'ओरायन्' 'आर्क्टिक् होम् इन् दि वेदाज्' इति ग्रन्थद्वयेनेदं प्रमाणीकृतम् । पाश्चात्यसंशोधकैरयं संशोधनमार्गो द्रष्टव्य इति हेतुना इदं ग्रन्थद्वयं लोकमान्यैराङ्ग्लभाषायां लिखितम् ।

गीतारहस्यग्रन्थे प्रतिपादितेन कर्मयोगसिद्धान्तेन धर्मसंन्यासमार्गे महान् प्रहारः कृतः । मीमांसकाः क्रुद्धा यतो लोकमान्यैस्तेषां कर्ममार्गपक्षो

न स्वीकृतः । शङ्कराचार्यानुयायिनः संन्यासिनो रुष्टा यतस्तेषां केवलज्ञान-मार्गो न प्रतिपादितः । सत्यपि परमात्मतत्त्वज्ञाने, ज्ञानोत्तरमपि लोकसङ्ग्रहार्थं ज्ञानिभिः कर्माणि कर्तव्यानीति लोकमान्यानां सिद्धान्तः । उक्तं च

' काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ '

इति । सर्वकर्मफलत्यागशब्दे नित्यनैमित्तिककर्मणामप्यन्तर्भावो भवेत् । सर्वकर्मफलत्यागेनापि पुरुषो नैष्कर्म्यसिद्धिं लभते । अतो यद्यपि ज्ञानिनां तानि कर्माणि अनावश्यकानि तथापि लोकसङ्ग्रहार्थं करणीयानीति लोकमान्यानां प्रतिपादनम् । अनेन नूतनतत्त्वेन जनानां विचारे क्रान्तिः समुत्पन्ना । अनया दृष्ट्या अपूर्वोऽयं गीतारहस्यग्रन्थः । केवलेनास्य ग्रन्थस्य पठनेन लोकमान्यानामगाधमतित्वं कुशाग्रबुद्धित्वं प्रतिपादनकौशलं च दृश्यन्ते । एतल्लोकमान्यानां लोकविलक्षणविभूतिमत्त्वम् ।

## ४ निर्भयत्वम्

' दैवी संपद्विमोक्षाय निबन्धायासुरी मता । '

इति भगवद्गीतासु कथ्यते । तस्यां दैव्यां संपदि अभयं, सत्त्वसंशुद्धिः, सत्यं, तेजः, धृतिः, शौचमित्यादयो गुणाः सर्वेषां मूर्ध्नि तिष्ठन्ति । एते सर्वे लोकमान्येषु प्रकर्षेण दृश्यन्ते । सुरतनगरे राष्ट्रियसभाधिवेशनप्रसङ्गे लोकमान्यानामेते गुणाः प्रखरतया जनानां नयनगोचरतां गताः । अयमेव नरकेसरी, पश्यतामपि ' फेरोजशहा मेथा'प्रभृतीनां पुरुषव्याघ्राणां, राष्ट्रियसभाव्यासपीठे निर्भयवृत्त्या स्वविरोधं दर्शयितुमुपस्थाय सर्वान् सदस्यानाह्वयते स्म इव ' अस्ति कश्चिदसौ इयति लोके यो मामस्मात् सभास्थानादुत्क्षिप्यान्यत्र नीत्वा तथा प्रस्थापयेत्, यथाऽयम् अध्यक्षनिर्वाचनप्रस्तावो विरोधं विना सभायाः संमतो भवे'दिति । महान् संक्षोभस्तदा समुत्पन्नः । परं न कोऽपि लोकमान्यानां शरीरं स्प्रष्टुमधृष्णोत् । निर्भयवृत्तित्वम्, अनन्यसाधारणधैर्यशालित्वं, लोकविलक्षणतेजोबलं, कर्तव्यदाक्षिण्यं, इन्द्रियनिग्रह इत्यादयो बहवो लोकमान्यगुणा जनस्य दृष्टिपथं सदा गताः । ' ताईमहाराज'प्रकरणे लोकमान्येषु बहूनि संकटान्यापतितानि । ' चिरोल'-प्रकरणे महती द्रव्यहानिर्जाता अपयशश्च संप्राप्तम् । राजकारणविषये

शासनसंस्थया सह शाश्वतविरोधः समुत्पन्नः । तस्य फलमपि प्रदीर्घकारावासेन लोकमान्यैः सोढम् । परम् अङ्गीकृतं लोककल्याणकार्यं वा शृङ्खलाबद्धस्य भरतखण्डस्य स्वातन्त्र्यप्राप्तिविषयकः समुद्यमो वा न परित्यक्तः । उक्तं च—

' विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ '

इति । एतादृशोऽयं नरकेसरी सह्याद्रिशिखरेषु घनगर्जितमिव गर्जन् कथं न लोकोत्तरः ।

## ५ लोकमान्यदोषाः

एतेषु असामान्यगुणेषु केचन दोषा अपि लोकमान्येषु विद्यन्ते । तेषां प्रथमो लोकमान्यानामाग्रही स्वभावः । स्वभावस्तु सदैव दुरतिक्रमः । अन्यो दोषस्तेषां प्रखरटीकात्वम् । शिक्षणसंस्थायाः आजीवसदस्यत्वस्य त्यागपत्रे लोकमान्यैः स्वयमेवास्य दोषस्योल्लेखः कृतो दृश्यते । परमन्यगुणोत्कर्षे एते दोषा विलुप्ता भवन्ति । उक्तं च

' एको हि दोषो गुणसंनिपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ' इति ।

एवं राजकारणविषये ' दादाभाई नौरोजी 'प्रभृतिषु पुरोगामिमतप्रवर्तकेषु नररत्नेषु प्रगततरस्वमतेन, 'सुरेन्द्रनाथ बानर्जी—फेरोजशहा मेथा—गोपाळराव गोखले 'इत्यादिनेमस्ताग्रणीषु पुरुषव्याघ्रेषु राष्ट्रियमतप्रभावेण, ' चाफेकर—सावरकरा'दिक्रान्तिकारकेषु वीररत्नेषु तत्कालोचितनिःशस्त्रप्रतिकारेण, ' विपिनचन्द्र पाल—लाला लजपतराया 'दिराष्ट्रियपक्षधुरीणेषु कौशल्यपूर्णनिजनेतृत्वेन , ' मॅक्समुल्लरा'दिविद्वद्रत्नेषु अभिनवपद्धत्या वैदिकसंशोधनेन, सांख्ययोगादिदर्शनकारेषु गीतारहस्यमित्यपरनामधेयेन कर्मयोगशास्त्रेण , ' बाबु अरविन्द घोष'प्रभृतिषु योगिजनेषु आत्मनः स्थितप्रज्ञत्वेन, विशुद्धाचारशालिषु धर्माचार्येषु आत्मनः शीलेन त्यागेन च

त्रिखण्डलब्धकीर्तय एते टिळकमहाशया भरतखण्डे लोकदत्तां लोकमान्य-पदवीं प्राप्य मुम्बापुर्यां 'सरदारगृह'नामके हर्म्ये आत्मनः पार्थिवदेहं विसृज्य दिवं गताः वृत्तपत्रसंपादकैश्च 'महाराष्ट्रदेशस्यायम् अनभिषिक्तो महीपति'रिति लिखित्वा महता गौरवेण संमानिताः।

## ६ निधनोत्तरविभूतिमत्त्वम्

एतावता माहात्म्येनापि युगपुरुषस्यास्य विभूतिमत्त्वं न संपूर्णम्। निधनानन्तरमपि निजदेहस्यौर्ध्वदेहिकार्थं लोकमान्यैः श्मशानान्तरं निर्मितम्। सौन्दर्यपूर्णायाः विशालमुम्बापुर्याः बहुजनसमाकुले 'चौपाटी'-नामके रमणीयसमुद्रोपकण्ठे लोकमान्यानां कलेवरमग्निसात् कर्तुं शासन-स्थानीयशासनसंस्थया अनुज्ञा दत्ता। अभूतपूर्वमेतज्जातम्। अनन्यसाधारणे-नानेन बहुमानेन शासनसंस्थया महत्पुण्यं समासादितम्। अतस्तदानीन्तनो मुम्बईमदेशराजप्रतिनिधिर्जनानां धन्यवादानर्हति।

'मरणान्तानि वैराणि'

इति यदुच्यते तत्सत्यमेव। लोकैरप्यस्मिन् स्थले लोकमान्यानां गौरवार्थं, पूजनार्थं, निजादरप्रदर्शनार्थं च एका भव्या धातुमयी मूर्तिः स्मारकरूपेण प्रथमं प्रतिष्ठापिता। अन्येषां सर्वेषां प्रसिद्धपुरुषाणां मूर्तयः प्राचुर्येण 'कोट'नामके विभागे वर्तन्ते। इयं भव्या मूर्तिरेकाकिन्येव तदाऽस्मिन् 'चौपाटी'नामके सागरोपकण्ठे आसीत्। सांप्रतं लोकमान्यसहवाससुख-लाभार्थं 'विठ्ठलभाई पटेल'महाशयानामन्या मूर्तिः स्मारकरूपेणात्र विद्यते। निधनोत्तरमपि लोकमान्यानामिदं लोकोत्तरत्वम्। इदमेव लोकमान्यानां विभूतिमत्त्वं लोकैर्ज्ञायते।

## ७ प्रार्थना

एतादृशं जीवनस्य विविधशास्त्रान्वितं, शास्त्रपूतं, पराक्रमपूर्णम्, ऊर्जितसत्त्वं, निर्मलाचारयुक्तं, बुधबुद्धिवर्धकं लोकमान्यटिळकचरितं तरुणेभ्यः स्फूर्तिं यच्छेत्, अध्यापनकार्यरतेभ्यः आदर्शपाठान् दद्यात्, धनलुब्धान् लोकशिक्षणाय द्रव्यदानं शिक्षयेत्, लोकधुरीणान् अभयवृत्ति-मध्यापयेत्, शासनसंस्थाधिकारिभ्यः कीर्तिं वितरेत्, राजकारणधुरंधरान् लोककल्याणमार्गं दर्शयेत्।

तत्कुरुष्वमदर्पणम्

' यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ '

इति भगवतः श्रीकृष्णस्योपदेशवचनमनुसृत्य विभूतिमद्युगपुरुषलोकमान्यटिळकचरितसुवर्णचम्पकस्य अष्टादशपर्वप्रसूनानां

' वाग्रूपिण्यै सरस्वत्यै भक्तियुक्तेन चेतसा ।
सुबोधाक्षररूपोऽयं पुष्पहारः समर्प्यते ॥ '

इति शम् ।

॥ समाप्तमिदं सुबोधसंस्कृतलोकमान्यटिळकचरितम् ॥



# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | ३ | ०यरूपयन् | न्यरूपयन् |
| ३३ | १ | विरोघ | विरोधः |
| ५० | २१ | विप्र | विप्रः |
| ६९ | १९ | राकश्यकी | रावश्यकी |
| ७० | २७ | तिरिमन्नेय | तस्मिन्नेच |
| ९६ | १७ | मसमर्था | मसमर्थाः |
| ११७ | २१ | इति | इति । |
| ११९ | १० | शास्त्रनियामनु | शास्त्रनियमानु |
| १२१ | ७ | घ | न |
| १४४ | १४ | उपनगरे | विभागे |
| १५२ | २७ | माल्वीय | माल्वी |
| १५३ | १० | " | " |
| " | २१ | " | " |
| १५७ | १ | " | " |
| १५८ | १४ | " | " |
| " | १५ | " | " |
| " | १७ | " | " |
| " | २५ | " | " |
| १५९ | २२ | " | " |
| १६० | १ | " | " |
| " | ११ | " | " |
| १६२ | २५ | " | " |
| १९४ | १५ | जनाना | जनाना |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १९६ | २० | घिकारिण | घिकारिणः |
| २०६ | २५ | स्यानिश्चितं | स्यान्निश्चितं |
| २०८ | १० | कर्याणि | कार्याणि |
| २२८ | १७ | वषयका. | विपयकाः |
| २३१ | ४ | राष्ट्रीय | राष्ट्रिय |
| २३३ | ४ | पष्ट्यब्दि | पष्ट्यब्दी |
| " | २२ | " | " |
| २३४ | २६ | कृतज्ञज्ञा | कृतज्ञता |
| २३५ | १७ | कार्ये | कार्यं |
| २३६ | २ | पष्ट्यब्दि | पष्ट्यब्दी |
| २४५ | ९ | समाप्तम् | संप्राप्तम् |
| २५९ | १ | द्वो | द्वौ |
| २७६ | १९ | स्वातन्त्र्य | स्वतन्त्र |

# विशेषशब्दकोशः

अ

अग्निरथः a railway train.

अग्रहारः grant of land.

अग्रहारधरः a landlord.

अधमर्णः a debtor.

अधिकारवादिनः agitators for rights.

अन्तर्वत्नी pregnant.

अन्वयः a family.

अपक्रिया mischief, fault.

अपर्याप्तम् insufficient.

अप्रमादम् without mistake.

अब्रह्मण्यम् an exclamation to say that a horrible act has been committed.

अभियोगः a suit.

अवसानम् an end.

असत्यसाक्षी a false witness.

आ

आग्रही obstinate.

आडंबरः show.

आन्दोलनम् a movement.

आयतिः future time.

इ

इन्धनम् fuel.

उ

उत्कोचः a bribe.

उपनयनम् thread ceremony.

उपहासः a ridicule.

ऊ

ऊहापोहः consideration.

ऋ

ऋजु straight forward.

क

कृतकः adopted.

कपटलेखः a forged document.

कार्यवाहः secretary.

कोष्ठः a cupboard.

ग

गर्भाधानम् impregnation.

गुणग्रहणम् appreciation.

गुप्तचरः a detective.

गुलिकाप्रक्षेपणम् firing.

गोपुरम् a gateway.

घ

घोषणा a proclamation.

च

चतुःसूत्री four aphorisms.

चहा tea.

चापलम् rashness.
चिता a pyre.

छ

छत्रपतिः a crowned king.

ज

जहालपक्षः the extremists

त

तैलशकटः a motor.

द

दुकूलम् a silk garment
दक्षिणा a gift to a Brahman at the completion of religious rites.
दण्डनीतिः administration of justice.
दोषारोपः charge of a crime.

न

नाहं वेतसं इव वीर्ये हीनः I am not a kachha reed.
निरीक्षकः an inspector.
निर्वाचनम् an election.
नेमस्तपक्षः a party of moderates.

प

पक्षः a party.
पक्षपातः partiality.
परिखा a trench.
परिवर्तनीयम् fit for alteration.
परिहासः a joke.
पिधानम् closing.
पञ्चाङ्गम् a calender.
प्रकोष्ठः a room.
प्राड्विवाकः a judge.
प्रणिधिः a spy.
प्रतिभूः a surety.
प्रत्यूहः a difficulty.
प्रदेशपरिषद् a provincial conference.
प्रधानमल्लनिबर्हणम् defeating the principal foe.
प्रमाणपुरुषगणः a jury.
प्रमुखराजप्रतिनिधिः The Viceroy.
प्रस्तावः a resolution.
प्राघूर्णिकः a guest.

ब

बद्धपरिकरः to be ready.
बहिष्कारः boycott.
ब्रह्मावर्तः name of a place.

भ

भस्मसात् burnt to ashes.
भुईमूग ground nuts.

म

मुद्रणम् printing

य

याचनावादितः petitionists.

र

रक्षापुरुषः a police.

रजोदर्शनम् first menstrual flow.

राजद्रोहः sedition.

राजनीतिः politics.

राजप्रतिनिधिः a governor.

राष्ट्रियपक्षः the nationalist party.

ल

लगुडप्रहारः lathi-charge.

ललामन् an ornament.

लेखनिकः a clerk.

लेखनमञ्चः a desk.

व

वर्गः a class.

वसंतसंपातः vernal equinox.

व्यवहाराभावः a hartal, closing of work as a mark of sorrow.

व्यवस्थापत्रम् a will.

व्रतबन्धः thread ceremony.

वावदूकः a talkative man.

व्यासपीठम् a platform, dias.

विधिज्ञः a lawyer.

विधिशास्त्रपण्डितः a lawyer.

विप्रयोगः separation.

विभागपरिषद् a district conference.

विभाजनम् partition.

विलुण्ठितम् plundering.

विशेषरक्षापुरुषाः punitive police.

विशेषबाष्परथः a special train.

विश्वस्तः a trustee.

विषूचिका cholera.

विष्टरः a chair.

श

शतघ्नी a machine gun.

शासनसंस्था government.

शिलामूर्तिः a statue.

शिष्टमण्डलम् a deputation.

शेमुषी intellect.

स

समुत्थानम् agitation, movement.

सरीसृपः a serpent.

संक्षोभः a riot.

संचलनम् a procession.

संस्कारः performance of a religious rite.

सामन्तः a feudatory prince.
सारथिः a driver.
सुखासनम् an easychair.
सुवर्णमन्दिरम् the holy temple of the Shikhs.
सुवर्णमुद्रा a gold coin.
सूरिः a learned man.
सेवकविधिः service regulations.
सेवाधनम् pension.
स्त्र्यगारम् a ladies waiting room.
स्थापत्यम् engineering.
स्मारकम् a memorial.
स्मृतिशलाका a memory.
स्वराज्यम् home-rule.
स्वागतसमितिः a reception committee.

ह

हस्ताङ्कनम् signature.

क्ष

क्षेत्रपतिः a landlord.

